॥ श्री ॥

परमपूज्यश्रीपेजावरमठाधीशश्रीविश्वेशतीर्थश्रीपादानां मार्गदर्शने संशोध्य संपादितम्

# श्रीमद्भागवतम्

(श्री विजयध्वजीयटीकासहितम्)

**प्रथमस्कन्धः**

सम्पुट : - १

सम्पुट : - २

प्रकाशनम्
श्री राघवेन्द्रस्वामि
वृन्दावन समिति :
बामालिङ्गंपल्ली
हैदराबाद - २७

॥ श्रीः ॥

# श्रीमद्भागवतम्

## (श्री विजयध्वजीयटीकासहितम्)

## प्रथमस्कन्धः

परमपूज्यश्रीपेजावरमठाधीशश्रीविश्वेशतीर्थश्रीपादानां
मार्गदर्शने संशोध्य संपादितम्

सम्पुटः – १


प्रकाशनम्
श्री राघवेन्द्रस्वामि बृन्दावन समितिः
नागलिङ्गंपल्ली
हैदराबाद–२७

SRIMAD BHAGAVATAM

with the Commentary of Sri Vijayadhwaja Teertharu,

Vol. I ( Ist skandha)

Edited by :

H. H. Sri Vishwesha Tirtha Swamiji of

Sri Pejawar Math, Udupi

Published by :

Sri Raghavendra Swami Brindavan Samiti,

Bagh lingampally Hyderabad-27.

Price Rs. 700/- ( Complete set )

Rs. 600/- ( Complete set without binding )

Printed by :

Dhananjay Balacharya Warkhedkar.

Sudha Mudrana Mandiram, Uttaradi muth compound,

Basavanagudi, Bangalore - 560004

# सन्देशः

महदिदं प्रमोदस्थानं यत् पुराणोत्तमं भागवतं श्रीविजयध्वजप्रणीतया पदरत्नावल्याख्यया टीकया संवलितं मुद्रापयितुमारब्धं प्रथमद्वितीयस्कन्धात्मकः प्रथमो भागोऽद्य मुद्रितः भगवद्भक्तानां पुरत उपस्थापितश्चेति ।

गायत्रीभाष्यरूपस्यास्य श्रीमद्भागवतशास्त्रस्य सकलवेदसारत्वमवचनसिद्धमिति न तन्माहात्म्यवर्णने वयं प्रभवामः ।

श्रीविजयध्वजतीर्थाश्च पेजावरमठीयश्रीमदधोक्षजतीर्थशुभसम्प्रदायप्रवर्तकाः महातपस्विनो ज्ञानिवरेण्याश्च । तेषां भागवतटीका न केवलं मूलार्थविवरणपरा किन्तु मूलार्थविरुद्धार्थाभिधायीनि अपव्याख्यानान्यप्यनूद्य खण्डयति । श्रीमदानन्दतीर्थभगवत्पादप्रणीतभागवततात्पर्यग्रन्थभावं सम्यक् प्रकाशयति च । यथा रत्नं तमो निहत्य प्रकाशते तथैषा पदरत्नावलीटीकापि अध्येतॄणामज्ञानं निहत्योज्ज्वलेन यशसा प्रकाशते ।

ग्रन्थमिमं मुद्राप्य आस्तिकजनानां परमोपकारं कृतवतां भाग्यनगरलिङ्गंपल्लीस्थश्रीराघवेन्द्रस्वामि-वृन्दावनसमितिकार्यकर्तॄणामुत्तरोत्तरैवंविधज्ञानकार्यकरणशक्तिं प्रदाय श्रेयःपरम्परामनुगृह्णात्विति अस्मदुपास्य-श्रीरामचन्द्राभिन्नरजतपीठपुराधिपतिश्रीकृष्णं प्रार्थयामहे ॥

श्रीविद्यामान्यतीर्थाः

(श्रीफलिमारुभण्डारकेर्युभयमठाधीशाः)

# प्रास्ताविकम्

भगवता बादरायणेन प्रणीतं श्रीमद्भागवतं सकलशास्त्रसारभूतं पुराणमूर्धन्यतमं धन्यतमं च सत् भागवतानां खलु भागवतां महद्भागधेयमनवधेयम् । 'असङ्ग आत्मव्यतिरिक्तवस्तुनि दृढा रतिर्ब्रह्मणि' इत्याद्युक्तेन वैराग्यभक्तिनिर्देशेन ब्रह्मण्यसङ्गस्तदितरत्र रतिश्चेति वैपरीत्यद्वयलक्षणभवतक्षकदष्टानां परीक्षिन्नृपतिसदृक्षाणां शरीरिणामशेषशोकार्णवशोषणायेदमलमिति. 'एकं भागवतं शास्त्रं मुक्तिदानेन गर्जती'ति च को नाम कोविदो न मनुते ? एतदधीयानैर्वा समधिगतहरिलोकयानैः कतिभिः कृतिभिर्न गोष्पदीकृतोऽपारशिवभववाराशिः ? एतस्य मौल्यमिह वयं कियदाकलयाम ? कियद्वा वचाम ?

प्रभूततरोदाराख्यानरसनिष्यन्दसुभगस्य निगमकल्पतरोः शुकमुखाद्गलितदिव्यामृतफलस्यास्य पुराणतल्लजस्य ज्ञाने वाऽवधार्य तात्पर्यं भक्तौ वोभयत्र वेति विषयेऽस्ति लोके महती विमतिः । केचन ज्ञानकर्मविरहितभक्तिमात्रपरतयैनं व्याख्याय बुधजनकान्तां भक्तिलतां ज्ञानकर्माख्यजलसारवञ्चितां हन्त म्लापयितुमैहन्त केचिच्च भक्तिरसप्रत्यनीकनिर्धर्मब्रह्मज्ञानैदम्पर्यकतया व्याख्याय लतामेतां वतोष्णोदकसेकाकुलितां विधातुमैहन्त । श्रीमदाचार्यास्तु समस्तकल्याणगुणमयशरीरिश्रीहरिविषयज्ञानभक्तिनिष्कामकर्मपरतया व्याख्याय पुष्णामहो व्यतनिष्ट बुधजनेष्टां भगवद्भक्तिनिष्ठाम् ।

श्रीमदाचार्यप्रणीतभागवततात्पर्यग्रन्थभावं मनसिकृत्याविस्मृत्य च भागवते प्रतिपद्यं प्रतिपदं च दर्शं दर्शं सविमर्शं गूढार्थदर्शनं न सुकरमकृतात्मनामित्याकलय्य परमपावनकण्वकासागरतीरवासा अस्मद्वंशपरम्परापूर्वतापसाः श्रीमदाचार्यवेदान्तरत्नसिंहासनाधीशाः श्रीविजयध्वजतीर्थेति पवित्रसार्थनामभूषा व्याख्यामेकां पदरत्नावल्याख्यां रचयामासुः । प्रतिपद्यं प्रतिपदं च भागवतं दर्शनतिरस्सिद्धान्तमस्यां निजभूम्यां सुनिपुणं संस्थापयामासुः । उपनिषदामिव, शास्त्रग्रन्थानामिव चास्यापि महत् स्थानगौरवमानयामासुः । अकलङ्कायामिह निजटीकायामन्ते तां श्रीकान्तेऽर्पयन्तो हन्त वरानिमानयाचन्त—

व्याख्या भागवतस्य कृष्ण रचिता त्वत्प्रीतिकामात्मना
प्रीतश्चेत् प्रददासि तत्प्रतिनिधिं तत्त्रीन् वरिष्ये वरान् ।
प्राङ् निष्किञ्चनतां तव प्रतिभवं पादारविन्दात्मना
संसक्तिं सुखतीर्थशास्त्रविजयाद्धारस्य पारं तया ॥

निष्किञ्चनतापरपर्यायं वैराग्यं, भगवतः पादारविन्दात्मना संसक्तिरित्युक्ता भक्तिः, सुखतीर्थशास्त्रामृतपारगात्मकं ज्ञानं चेति त्रितयमेव हरौ याचमानाः नान्या गुरुवरेण्याः खलु धीराः परमोदारा आत्मसात्कृतभागवतसारा इति युक्तं वक्तुम् ।

अस्मद्वंशपरम्परापूर्वाचार्येष्वेव पुनरन्यतमा नैकग्रन्थरचनाप्रथितशुभाभिधानाः श्रीविश्वपतितीर्थश्रीमच्चरणाः टीकाकारानेतान् इत्थमस्तुवन्–

> श्रीमध्वाधोक्षजसंप्रदायकमहाशास्त्रार्थसंव्यञ्जकः
> श्रीमद्भागवताम्बुधौ व्यवहरन् तात्पर्यरत्नावलीम् ।
> दृष्ट्वा भागवतार्थदीपपदकैः श्रीकृष्णपादार्चनं
> मा त्याक्षीद्विजयध्वजं भज मनस्त्वं कण्वतीर्थस्थितम् ॥

गुरुवरेण्याः किल भागवताम्बुधौ स्वैरं विहरन्तः तत्र प्रतिपदं प्रतिवाक्यं च श्रीमदाचार्योक्तात्पर्यरत्नावलिं दृष्ट्वा संगृह्य च भागवतार्थप्रकाशोज्ज्वलानि पदानि तात्पर्यरत्नावलिघटितानि रत्नखचितानीव सुवर्णपदकानि विरचय्य हरावर्पयन्तः प्रत्यहमीदृशीं वाङ्मयीमपचितिमुपजह्रुः, न पुनः कदाप्यत्याक्षुरित्याशयः ।

न चैषोक्तिरतिशयोक्तिकोटिमाटीकेत । यतो ह्यस्य व्याख्यानस्यासाधारणं सौन्दर्यं शक्यसंदर्शनं सर्वत्र समेषां सचेतसाम् । किञ्चिदिवोदाहरणमुदञ्चयामः–

> यं प्रव्रजन्तमनुपेतमपेतकृत्यं,
> द्वैपायनो विरहकातर आजुहाव ।
> पुत्रेति तन्मयतया तरवोपि नेदुः
> तं सर्वभूतहृदयं मुनिमानतोऽस्मि ॥

अत्र टीकोक्तदिशा चैषोऽस्ति विशेषः । प्रव्रजन्तमिति सर्वपरित्यागरूपं आश्रममाश्रयन्तमित्यर्थः । तत्र हेतुरनुपेतमिति । तात्पर्योक्तदिशा देहाद्यभिमानशून्यमित्यर्थः । न ह्युपनयनशून्योऽनुपेत इहाभिमतः । तस्य प्रव्रजनेऽनधिकारात् । न च प्रव्रजनं न संन्यासः किं तर्हि प्रकर्षेण गमनमेवेति वाच्यम् । संन्यासस्वीकार एव तच्छब्दरूढेः । आह हि गौतमसूत्रं– 'यदहरेव विरजेत्तदहरेव प्रव्रजेदि'ति । एवं अपेतकृत्यमिति छेदनादिहिंसाकर्मत्यागिनमित्यर्थः । कृती छेदन इति धातोः अहिंसाव्रतप्रधानत्वाच्च संन्यासाश्रमस्य । द्वैपायन इति द्वीपस्यापत्यमित्येवार्थः । नदीद्वीपेऽवतीर्णो बादरायण इत्यभिप्रायको-

# निवेदनम्

अक्षयतृतीयाशुभदिने (दिनाङ्कः २२-५-१९६२) परमपूज्यैः श्री फलिमारुभण्डारकेर्युभय-मठाधीशैः श्रीविद्यामान्यतीर्थश्रीपादैः श्रीपेजावरमठाधीशैः श्रीविश्वेशतीर्थश्रीपादैः श्रीचित्रापुर-मठाधीशैः श्रीविद्यावल्लभतीर्थश्रीपादैश्च भाग्यनगरवागलिङ्गंपल्लीमठे श्रीराघवेन्द्रस्वामिनां बृन्दावनं प्रतिष्ठापितम् । तत एवारभ्य अस्मिन् मठे नैकानि ज्ञानकार्याणि श्रीपादानामनुग्रहबलेनाविरतं प्रवर्त्यन्ते ।

संप्रति श्रीविजयध्वजीयटीकासहितं श्रीमद्भागवतं तथा श्रीविजयध्वजीयटीकानुसारि मूलमात्रं च पृथङ् मुद्रापयितुमुद्यतेयं श्री राघवेन्द्रस्वामि बृन्दावनसमितिः परमपूज्यैः श्रीपेजावरमठाधीशैः श्रीमच्चरणैर्दिव्येन मार्गदर्शनेनान्वगृह्यत ।

परिशीलितं विजयध्वजीयमूलकोशमेकं परमपूज्याः श्रीसोदामठाधीशाः श्रीविश्वोत्तमतीर्थ श्रीपादा वितीर्यान्वगृह्णन् । (अयं कोशोऽत्र 'ड'कारेणाङ्कितोऽस्ति) श्री बन्नञ्जे गोविन्दाचार्यप्रभृतिभिः संपादितपाठस्य हस्तप्रतिकृत्या (इयं खकाराङ्किता) पाठशोधनकार्ये बहूपकारः कृतः । श्री के. टि. पाण्डु-रङ्गिमहोदयानामेका(गकाराङ्किता), पुण्यपत्तनस्थावधानिरामाचार्याणां (छकाराङ्किता) चापरेति द्वयमपि बहूपयुक्तमासीत् । बेलगांवमुद्रितपुस्तकमेकं(ककाराङ्कितं) तथा श्रीपूर्णप्रज्ञविद्यापीठीयग्रन्थालयस्था अष्टौ हस्तप्रतिकृतयश्च पाठशोधने उपायुज्यन्त । एतान् ग्रन्थकोशान् वितीर्यानुगृहीतवद्भ्यः सर्वेभ्यः कृतज्ञता निवेद्यते ।

परमपूज्य श्रीपेजावरमठाधीशानामादेशेन श्री के.टि. पाण्डुरङ्गिमहोदयाः, श्री एस्. वि. भीम भट्टाः श्री जि. एन्. जयतीर्थाचार्याः श्री के. हयवदनपुराणिकाः श्री जि. गुरुवेङ्कटाचार्याः श्री सग्री राघवेन्द्राचार्याः पुनरन्ये सर्वे पूर्णप्रज्ञविद्यापीठीयपण्डिताश्च पाठसंशोधने मुद्रणकार्ये च महान्तमुपकारम-कार्षुः । तेभ्योऽपि कार्तज्ञं निवेद्यते ।

परमपूज्यानां श्रीफलिमारुभण्डारकेर्युभयमठाधीशानां श्रीपेजावरमठाधीशानां च स्वीय-सन्देशप्रास्ताविकाभ्यामनुगृहीतवतां साष्टाङ्गाः सानन्दाः कोटिशः प्रणतयः ।

पुस्तकमुद्रणं कृतवतां बेङ्गलूरस्थसुधामुद्रणमन्दिराधिकारिणां धन्यवादाः समर्प्यन्ते ।

अक्षयतृतीयायां [ दिनाङ्कः ४-५-८४ ] तदा समापितमुद्रणकार्यः प्रथमस्कन्धभागः पण्डितराजेत्यादिबिरुदालङ्कृतैर्मुम्बयिसत्यध्यानविद्यापीठकुलपतिभिः कीर्तिशेषैः श्री. एम्. आर. गोपालाचार्यैरुद्घाटित आसीत् । इदानीमाद्यस्कन्धद्वयमपि मुद्रापितमध्येतॄणां पुरतः सानन्दमुपस्थाप्यते ।

इति निवेदयिता

के सुब्बराय अडिगः

अध्यक्षः

भाग्यनगरलिङ्गंपल्ली श्रीराघवेन्द्रस्वामि बृन्दावनसमितिः

ऽयमौपचारिकः प्रयोगः । एतेन पाराशरापत्यत्वप्रसिद्धिरप्येवमौपचारिकीति मन्तव्यम् । न हि जननादि-रहितस्य भगवतो व्यासस्य वास्तवमपत्यत्वं संभवति । अत एव विरहकातर इति तथानटनाभिप्रायम् । पुत्रेति सन्निवारार्थः । गायत्रीभाष्यरूपतया वेदवदादरणीयत्वमस्य ग्रन्थस्य द्योतयितुमयं प्रयोगः । अन्यथा दूराद्धूते चेति दूराह्वाने वाक्यस्य टेः प्लुतसंज्ञायां प्रकृतिभावप्राप्तेः । यद्वा न प्राप्तिः । बादरायणविषये दूराह्वानस्यैवाप्रसक्तेः । न हि सर्वगतविष्ण्ववतारभूतस्य तस्यापि नाम दूरे कोऽपि संभवति । एवं च सन्धिरयं भगवति सर्वगतत्वमहिमबुद्धिमेव सन्दध्यात् । न पुनर्वैयाकरणमतं विरुन्ध्यात् । तन्मयतयेत्युक्तं तरूणां शुकमुनिव्याप्तत्वं च नौपचारिकम् । तात्पर्योक्तदिशा शिवावतारभूतस्य शुकमुनेर्निखिल-शरीरिशरीरव्यासादहङ्कारतत्त्वमानितयावस्थितिरव गन्तव्येति । एवं च सर्वभूतहृदयमित्यपि सर्वप्राणिहृत्स्थान-मयते गच्छति तत्र वसतीत्यर्थकमवगन्तव्यमिति ॥

तत्र तत्र टीकायां या भागवतपदकृत्यचिन्ता प्रसरति सा लाक्षणिकसमयानुसारिणी लक्षणग्रन्थपद-कृत्यचिन्ताछायानुकारिणी च सती पुराणमिति प्रसिद्धं भागवतमुत्कृष्टशास्त्रग्रन्थपदवीमध्यारोपयितुमलमिति मन्यामहे ।

तत्र तत्र च टीकायां यत् भागवतपदगर्भनिगूढाध्यात्मार्थाविष्करणं तत् 'विद्यावतां भागवते परीक्षे'ति सूक्तिसार्थक्यं सहृदयहृदयं गमयितुमलमिति मन्यामहे ।

प्रतिस्कन्धं, प्रत्यध्यायं प्रतिपद्यं चादौ समस्तं विवक्षितमर्थजातं संक्षिप्यावतारिकाव्याजेन निदधतां, प्रतिपदव्याख्याने च निगमनिरुक्तव्याकरणाभिधानादिमर्यादाः स्फुटमनुविदधतां, विपुलानि प्रमाणवचनान्यनुपदमभिदधतां, अनितरशक्यान्यपव्याख्याननिराकरणानि च सुनिपुणं विदधतामेषां विदुषां वाग्देवताप्रसादजुषां गङ्गेव प्रवहत्यप्रतिहता वाणी या खलु विपुला विमला च सती श्रीविठ्ठल-पदकमलयुगलमेवोपसरति ।

महानुभावानामेषां टीकाप्रदेशेषु यत् स्वाहंकारखण्डनं तन्नितरां भावुकजनमानसतलस्पर्शनाय प्रभवति । इदमिहोदाहरामः —

> क्व शब्दः क्वाभ्यासः श्रुतिरपि गुरोः क्वाग्रसरणं
> समीक्षा पौराणी क्व खलु विबुधा मत्सरधियः ।
> तथापि व्यामोहाद् गुरुगुरुकटाक्षैकशरणो
> मनाग्व्याकुर्वे भागवतपुपुराणं प्रगहनम् ॥

'न शब्दाब्धौ गाढा' इत्यादिः श्रीमज्जयतीर्थश्रीमच्चरणभणितिरिह झटिति नः स्मरणसरणि-मधिरोहति ।

पूर्वेऽप्यनेके किलाचार्याः श्रीमद्भागवतं व्याचख्युः । तथा ह्यपरेयं विनयोक्तिष्टीकाकाराणाम् ।

आचार्यैरपरैरपि प्रविवृत्तं मा गा मनः खेदितां
खद्योतस्तपनप्रकाशितपदे किं तत्र कुर्यादिति ।
तन्मार्गानुगमेन वाक्तनुमनःशुद्धिक्रियायै यतः
श्रीमद्भागवतं पुराणमतुलं व्याकर्तुकामो यते ॥

तत्रापि प्राञ्चौ द्वौ टीकाकारावाहुष्टीकाकाराः । —

अनन्ततीर्थविजयतीर्थौ
प्रणम्य मस्करिवरवन्द्यौ ।
तयोः कृतिं स्फुटमुपजीव्य
प्रवच्मि भागवतपुराणम् ॥

अत्रोक्ता अनन्ततीर्थाः प्राचीनाष्टीकाकाराः येषामाद्यस्कन्धत्रयमात्रगता टीकाधुनोपलब्धा । अनन्ततीर्थेति स्थाने आनन्दतीर्थेति प्रचलितः पाठोऽस्वरसश्छन्दोननुगुणश्च । विजयतीर्थाश्चात्रोक्ता न जयतीर्थाः । विशब्दानर्थक्यप्रसङ्गात् । अपि तु टीकाकाराणां परमगुरवः । तेषां कृतिरधुना भाग-शोऽपि नोपलभ्यत इति तु विषादस्थानम् ।

हस्तलिखितग्रन्थपाठसंशोधनमुद्रापणप्रमुखनिखिलकर्मसु वितस्तपृथुतरानर्घ्यसाह्यमाचरितवतां विप-श्चितां तथा मुद्रणव्ययभारनिर्वहणधुर्यतया धन्यतामात्मनो नीतवतां भाग्यनगरलिङ्गपल्लीस्थश्रीराघवेन्द्र-स्वामिवृन्दावनसमितिसदस्यानां च श्रीमद्भागवतकथानायको गोपमहिलाजनकामुको भगवान् भैष्मीभामा-रम्भो रजतपीठपुरवरधिष्ण्यः श्रीकृष्णः पुष्णात्वाशीःपरम्परामुत्तरोत्तरां नितरामित्याशास्महे ।

**श्री विश्वेशतीर्थाः**
श्री पेजावरमठाधीशाः

* * *

**श्रीमद्भागवतव्याख्याकाराः श्री विजयध्वजतीर्थश्रीमच्चरणाः**

अञ्जनासूनुसान्निध्यात् विजयेन विराजितम् ।
अजितप्रीतिजनकं भजेऽहं विजयध्वजम् ॥

भगवद्बादरायणप्रणीतं

# श्रीमद्भागवतम्

## प्रथमस्कन्धः

### अथ प्रथमोऽध्यायः

ॐ नमो भगवते वासुदेवाय

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यं सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो(ऽ)मृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १ ॥

---

### श्रीमद्विजयध्वजतीर्थविरचिता पदरत्नावली

ॐ यतो जन्माद्यस्य श्रुतिसुनयमानैकविषयात् स्वतन्त्रस्तन्त्रज्ञो गुरुरपि गुरोर्यश्च जगताम् ।
विमूढा यत्तत्वं प्रकटमिह वेत्तुं सुमनसो मुकुन्दं ध्यायेमापहतकुहकं तं स्वमहसा [1] [2] ॥ १ ॥

त्रिसर्गो यत्रायं लसति चिदचिद्विष्णुविषयोऽनलीको [3] नानेयं विकृतिरिवं [4] तेजोजलमृदाम् ।
विशुद्धं चैतन्यं प्रकृतिविकलं यच्च [5] विततं परं ब्रह्मात्मानं [6] स्मर हृदय सत्यं गुरुतमम् ॥ २ ॥

यदीयकृतिरञ्जसा सुमनसां सुमानं सतां सती सकलसन्नता [7] सकलवेदवाणीनिधिः ।
स चित्सुखपयोनिधिः सरसिजेक्षणः श्रीपतिः पराशरशरीरजः शरणमस्तु मे सन्ततम् ॥ ३ ॥

---

१ ध्यायामोऽपहत - ङ । ध्यायामापहत - क छ । अयं पाठः भागवत विज. आद्यन्तश्लोकव्याख्यातृभिः अहोबल-नरसिंहाचार्यैः धृतः । परन्तु मूलस्थ 'धीमहि' पदव्याख्यानानुगुण्यात् ध्यायेमेति चारुः ।

२ स्वमनसा - ङ । धाम्ना स्वेनेतिमूलश्लोकानुगुण्यात् स्वमहसेत्येव साधुः ।

३ विषयो नालीको - प । अयं पाठः भागवत विज. आद्यन्तश्लोकव्याख्यातृभिरादृतः । परन्तु छन्दोनुगुणत्वाय विषयोऽनलीको इति साधुः ।    ४ विकृतिरपि - छ ।    ५ यस्य - ङ ।

६ यस्य विततं परं ब्रह्म नाम - छ ।    ७ सन्मता - ङ ।

मम वचसि मङ्गलदेवता प्रणयवति[1] सन्निदधातु चिरम् ।
विलसतु रसीव मुरद्विपैः[2] कमलवनमध्य इवान्वहम्[3] ॥ ४ ॥

श्रुतिषु वितता[4] यस्य ब्राह्मी प्रमाणमनाकुलं परमविषये सम्यक् प्रेक्षावतां न मृषा क्वचित् ।
हिमकरलसद्बिम्बच्योतत्सुधारसजित्वरीं[5] स मम सुदृशं देयादानन्दतीर्थमहामुनिः ॥ ५ ॥

मणिगणवराः शाणोल्लीढा इवाब्धिवार्धि समुत्त्विषः[6] शमदमगुणा यत्राजस्रा लसन्ति सन्ततमेव सः[7] ।
चरणनलिने दैत्याराते[8]र्गिरां गोचरसरणीं दिशतु विशदां भक्तिं मह्यं महेन्द्रतीर्थयतीश्वरः ॥ ६ ॥

क्व शब्दः क्वाभ्यासः श्रुतिरपि गुरोः क्वानुसरणं मनीषा पौराणी क्व खलु विबुधा मत्सरभिदः ।
तथापि व्यामोहाद्गुरुतरकटाक्षैकशरणो मनाग्व्याकुर्वे भागवतसुपुराणं[9] प्रगहनम् ॥ ७ ॥

आचार्यैरपरैरपि अविवृतं[10] मामा मनः खेदितं[11] खद्योतस्तपनप्रकाशितपदे किं तत्र कुर्यादिति[12] ।
तन्मार्गानुगमेन वाक्तनुमनःशुद्धिक्रियायै यतः[13] श्रीमद्भागवतं पुराणमतुलं व्याकर्तुकामो[14] यते ॥ ८ ॥

---

१ प्रणयताति - क । अयं पाठः अहोबलनृसिंहधृतः । परन्तु छन्दोऽनुगुणत्वं नास्ति । प्रणयमति - घ । ङपाठः 'प्रणयवति' इत्येव । २ मधुद्विपः - क ।

३ एतदनन्तरं 'जयति जनकः शम्भोरम्भोजनाभसुताग्रगीः । प्रथमकवीनां मुख्यो यः सर्वजीवननायकः' इत्यधिकः पाठः - क घ । अत्र छन्दोभङ्गः कवीनामित्यत्र ।

४ श्रुतिविततता यस्य - क । अयं पाठः अहोबलनृसिंहधृतः । श्रुतिविततता यस्य - घ । पाठद्वयेऽपि छन्दोभङ्गोऽस्ति । मूलधृतः पाठः ङपुस्तकेऽपि ।

५ हिमकरलसद्बिम्बद्योतः सुधारसजित्वरः - अहोबलनृसिंहधृतः पाठः । 'जित्वरः' इत्यत्र जित्वरीमिति - क घ छ ज । बिम्बच्योतत्सुधा - ङ ।

६ इवाधिसमुत्त्विषः क । अहोबलनृसिंहधृतः । छन्दोनुगुणत्वं नास्ति । ङ छ पुस्तकयोरपि इवाधिवार्धीति पाठ एव दृश्यते ।

७ यत्रोल्लसन्ति सन्ततमेधाते - क घ च । अहोबलनृसिंहधृतश्च । छन्दोनुगुणत्वं नास्ति । मूलधृतपाठः ङपुस्तके ऽप्यस्ति । ८ सरणी - घ । सरणीं - ख ङ । सरणिः - क, अयं पाठः अहोबलनृसिंहधृतः ।

९ अयं पाठः ङकोशस्थः, छन्दोनुरोधी च । भागवतपुराणं - ख घ च छ ।

१० सविवृते - क घ । अहोबलनृसिंहधृतःपाठः । ङपाठेऽपि प्रविवृतमिति ।

११ मार्गे मनश्चोदितं - क । मामा मनः खेदितं - घ ङ । मामा मनः खेदितमिति अहोबलनृसिंहधृतः पाठः । ङपुस्तकेऽपि मूलधृत एव पाठः ।

१२ कुर्यामिति - घ । १३ ततः - क घ च छ ज, अहोबलनृसिंहधृतपाठः । १४ कामाय ते - छ ।

तदस्यां पद्यायां झटिति कृतयात्रे मयि कृपां महान्तः कुर्वन्तु[2] दिवि भुवि वसन्तः सदयने[3] ।
निरस्तासूया[4] ये परमपदभक्तिक्षितिधरोद्वहप्रह्वग्रीवा विपुलकरुणाः[5] सर्वसुहृदः ॥ ९ ॥

अनन्ततीर्थविजयतीर्थौ[6] प्रणम्य मस्करिवरवन्द्यौ ।
तयोः कृतिं स्फुटमुपजीव्य प्रवच्मि भागवतपुराणम् ॥ १० ॥

अथ कलिमलापनुत्तये विधिभवपुरःसरैरमरवरैरादराभ्यर्थितो[7] दितिसुतबलभरपरिखिन्नधरणीतले चिरसमयसमाचीर्णतपस्यायां सत्यवत्यां पराशरादवतीर्णो व्यासनामा मुरमथनः समुद्धृतसमुत्सन्ननिगमकल्पतरुरल्पमतिमनुजदयालुः शाखोपशाखाभेदेन विभक्तवेदस्तदर्थं निर्णिनीषुर्विरचितब्रह्मसूत्रस्तदनधिकारिजनापवर्गाय प्रकाशितपुराणविद्यापद्योऽपि[10] कालदोषेण विलीनान् भागवतधर्मानाविश्चिकीर्षुर्भागवतपुराणसंहितां वेदार्थप्रकाशिकां द्वादशस्कन्धसम्मितां अष्टादशसहस्रसङ्ख्योपेतां चिकीर्षुर्निरन्तरापरोक्षीकृतात्मस्वरूपो निरन्तरायोऽपि प्रेक्षावच्छिक्षायै मङ्गलाचरणाद्यनेकप्रयोजनाय च सर्वेष्टदेवतां नारायणाख्यामनुसरति– जन्माद्यस्य यत इति । अत्र यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । अस्य जगतो जन्मादि यतः, यश्चार्थेष्वभिज्ञः, यश्च स्वराट्, यश्च ब्रह्म हृदा आदिकवये तेने,[11] यं प्रति सूरयो मुह्यन्ति, तेजोवारिमृदां विनिमयो यथा तथा त्रिसर्गोऽपि यत्र मृषा, तं स्वेन धाम्ना सदा निरस्तकुहकं सत्यं परं धीमहीति समस्तान्वयः ।

तत्र प्रथमं परं धीमहीति व्यस्तान्वयः । पश्चादाकाङ्क्षावशादादितः सर्वेषामन्वयः । परं पूर्णं, गुणैरिति शेषः । पॄ पालनपूरणयोरिति धातोः । द्विविधा हि देवता ग्रन्थारम्भे नमस्कारादिमङ्गलक्रियामर्हति आधिकारिकी अभीष्टा चेति । यथा ज्योतिःशास्त्रे सूर्यादिग्रहलक्षणा[12] देवताधिकारिकी नमनादिक्रियार्हा । परमप्रेमादिविषया ह्यभीष्टा । भगवांस्तूभयरूप इत्यभिप्रायेण परमित्युक्तम् । परमात्मा हि सकलप्राणिनां

---

१ कृतपात्रे - अहोबलसूरिसंदृधृतः पाठः । मूलपाठे अस्यां पद्यायां अलिन्द मार्गे कृतयात्रे मयि महान्तः कृपां कुर्वन्त्वित्यर्थः ।

२ कुर्वन्तो दिवि - क, घ, छ । ३ सदयनाः - क, ख । ४ भगे - घ ।

५ विपुलकरुणाः - च । इक्षोऽपि मूलधृतः पाठः दृश्यते ।

६ आनन्द - क, घ, ङ, छ । अहोबलसूरिसंदृधृतः पाठः । छन्दोऽनुगुणत्वं नास्ति । आनन्दतीर्थप्रणीतः कृता च । अतः अनन्तेति साधु । अनन्ततीर्थाः प्राचीनभागवतटिप्पणकाराः । विजयतीर्थाश्च विजयध्वजतीर्थानां परमगुरवः । जयतीर्थपरत्वे श्लोके विशब्दानर्थक्यम् ।

७ आदराद् प्रार्थितो - क, प, ङ, छ । ८ तपसा - क । ९ निर्णयेच्छुः - क ।

१० पुराणसंहितो - क घ ङ छ । इतःपरं मुद्रितपुस्तकपाठे पौर्वापर्यं दृश्यते ।

११ यश्च हृदा आदिकवये ब्रह्म तेने - घ । १२ ग्रहाणां - ख ।

संसारोन्मूलनायास्मिन् शास्त्रे प्रतिपाद्यते । 'तदेतत्प्रेयः पुत्रात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरन्तरं यदयमात्मेति' श्रुतेः स एव परमप्रेमविषयः । परोऽपि नारायण एव नान्यः कश्चित् । 'यदेतत्परमं ब्रह्म वेदवादेषु पठ्यते । स देवः पुण्डरीकाक्षः स्वयं नारायणः परम्' इति हरिवंशे सत्यतपःप्रश्नोत्तरे दुर्वाससः प्रतिवचने परस्य नारायणत्वोक्तेः । 'ब्रह्मविदाप्नोति परम्' इति श्रुतेश्च । धीमहि ध्यायेम ।

जन्माद्यस्य यत इत्यादिविशेषणैः परशब्दोक्तान् गुणान् विशिनष्टि । पालनपूरणाभ्यां यथासम्भवं सृष्ट्यादयो वाच्या इत्यूहनीयम् । अलौकिकवस्तुनो लक्षणोपदेशमन्तरेण ज्ञातुमशक्यत्वात् शशविषाणकल्पं तदित्यतो वा लक्षणमाह– जन्माद्यस्य यत इति । अस्य प्रत्यक्षस्य जगतो जन्म आदिर्यस्य तज्जन्मादीति[२] तद्गुणसंविज्ञानो बहुव्रीहिः । यतो यस्मात्, भवतीति शेषः । आदिशब्देन स्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षा गृह्यन्ते । न केवलं स्थितिसंहारौ श्रुतिस्मृतिविरोधात् । यथा सास्नादिमान् गौरिति वृद्धोपदिष्टः सास्नादिमन्तं पदार्थमश्वादिभ्यो व्यावृत्तं गोशब्दवाच्यं प्रत्येति तथा जन्मादिकारणं परमितिश्रुत्याऽऽचार्योपदिष्टः[४] जन्मादिकारणं जीवादिभ्यो व्यावृत्तं परं विजानाति पुरुषः । जन्मादिकं प्रत्येकं परब्रह्मलक्षणतया ज्ञातव्यं, वेदान्तसूत्रेषु[६] प्रतिपादितत्वात् ।

ननु परस्य जन्मादिकारणत्वं कुत इति तत्राह– अन्वयादिति । 'यतो वा इमानि भूतानि जायन्ते' 'येन जातानि जीवन्ती'त्यादिश्रुतीनां 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' 'स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु'इत्यादिस्मृतीनां च जगत्कारणे हरावन्वयात् । उपक्रमोपसंहारादितात्पर्यलिङ्गात् परं ब्रह्मैव जगत्कारणं नान्यदिति भावः ।

ननु रुद्रादीनामपि जगत्कारणत्वं श्रूयते । अतः कथं परस्यैवेत्यवधार्यते ? उच्यते । यद्यपि रुद्रादीनां वेदैकदेशप्रतिपाद्यत्वमस्ति तथाप्यनन्तवेदपदकदम्बप्रतिपादितत्वं[९] विष्णोरेव । 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिश्रुतिस्मृतिभ्यः ।

१ अयं पाठः ख ड कोशस्थः । २ प्रश्नोत्तरत्वेन - ख क च छ ज ड । ३ जन्मादि । —छ ।
४ जगज्जन्मादि - क ज । ५ अयमंशः - क च छ ज ड पुस्तकेषु नास्ति '–पदिष्टं जन्मादिकमि'त्यस्ति ।
६ शास्त्रेषु - ठ । वेदान्तेषु - च ।
७ जन्मादिकारणत्वं - ड क प च छ ज । ८ वेदकदम्ब - क ज । ९ बोधितत्वं - ख ।

ननु श्रुत्यादेः पिपीलिकालिपिवत् अप्रमाणत्वम् । माणवकदृष्टशार्दूलकल्पत्वेन[1], तन्निश्चयाभावात् । अतः परमाणुपुञ्जस्यैव कारणत्वमिति तत्राह– इतरत इति । प्रत्यक्षागमाभ्यामनुगृहीतादितरस्मात्तर्कात् परब्रह्मणः कारणत्वं ज्ञायते । 'समुदाय उभयहेतुकेऽपि तदप्राप्तिः' इति भगवता कृष्णद्वैपायनेन परमाणुपुञ्जवादस्य निरस्तत्वात् । तत्र श्रुत्याद्यनुगृहीततर्काभावात्केवलतर्कस्याप्रतिष्ठितत्वात् ।

ननु कार्यं कारणपूर्वकं कार्यत्वादिति कारणसामान्यमात्रं सिद्धं विशेषस्तु कुतः सिद्ध्येदिति[2] चेत् । सत्यम् । प्रधानादेरचेतनत्वेन बुद्धिपूर्वकर्तृत्वानुपपत्तेरस्तातन्व्याच्च क्षित्यादेश्चेतनकर्तृकत्वं परिशेषसिद्धम् । चेतनाद्धि पित्रादेः पुत्राद्युत्पत्तिदर्शनात्तद्दृष्टान्तेन ब्रह्मादिचेतनजातं परमचेतनाद्विष्णोरुत्पद्यत इति सुशकोऽयं तर्कः समुत्तिष्ठते । चशब्दः समुच्चये । वेदानामपौरुषेयत्वेन कर्तृप्रसिद्ध्यभावादसंदिग्धप्रमाणत्वेन तदनुगृहीततर्कस्यापि प्रतितर्कपराहतिर्नाशङ्कनीयेत्यस्मिन्नर्थे वा । अनेन 'अथातो ब्रह्मजिज्ञासा' 'जन्माद्यस्य यतः' 'शास्त्रयोनित्वात्' 'तत्तु समन्वयात्' इति चतुःसूत्री च व्याख्याता । जिज्ञासैव धीमहीत्यनेनोच्यते । वेदविचारनिर्णीतगुणोपसंहाररूपत्वात् । इयानेव[3] विशेषः । ध्यानमेव ज्ञानसाधनं न कर्मादिकमित्यतो धीमहीतिपदं कर्मणा शुद्धान्तःकरणस्य ध्यानसम्भवादिति ।

यस्तु श्रुतिस्मृती अनादृत्य केवलतर्केण ब्रह्मणो जन्मादिकारणत्वं विघटयितुं[4] प्रत्यवतिष्ठते सोऽन्वयव्यतिरेकात्मकतर्केणापहस्तितव्य[5] इत्यतो वाऽऽह– अन्वयादितरत इति[6] । अन्वयात् अन्वयानुमानात् इतरतो व्यतिरेकानुमानात् । तौ च दर्शितौ[7] । चशब्दस्तु परोक्ततर्कस्य केवलस्य व्याप्तिशून्यत्वादस्य च प्रत्यक्षगृहीतव्याप्तिकत्वेन बलीयस्त्वादप्रतिहतः स्वार्थं साधयतीत्येतस्मिन्नर्थे वर्तते ।

ननु[8] पयोम्ब्वादेरचेतनस्य स्यन्दनादिप्रवृत्तिदर्शनात्तन्निदर्शनेन प्रधानस्य कारणत्वं किं न स्यादिति तत्राह– अर्थेष्विति । अर्थेषु घटपटादिष्वभितः सर्वतः विशेषकारणं जानातीति अभिज्ञः । प्रधानस्य जडत्वेन ज्ञानाश्रयत्वलक्षणासंभवान्नितरां न सर्वज्ञत्वम् । विष्णोस्तु सर्वज्ञत्वं श्रुतिस्मृतिसिद्धम् । 'यः सर्वज्ञः सर्ववित्' 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप' इत्यादि ।

---

१ शार्दूलवदसत्कल्पत्वेन - ख ङ । कल्पनेन - क घ च ज छ ङ, अत्रान्वयश्चिन्त्यः ।

२ विशेषतः कुतः सिद्धिरिति - छ ग घ ङ ज क ३ क्रियानेव - क च ङ ग छ । ङपुस्तकेऽपि मूलघृतः पाठः ।

४ विघटय्य - च ज घ ख क ५ अपहस्तितव्य - क ज ६ अन्वयादिति-ग ७ ते च दर्शिते - क ज ।

८ नन्विति नास्ति - घ ग छ ङ च ।

नन्वस्य हेतोः सर्वज्ञे रुद्रादावपि वृत्तेरसाधकत्वमिति तत्राह— **स्वराडिति** । स्वयमेव राजत इति स्वराट् । स्वस्य स्वयमेव राजा नान्योऽधिपतिरिति वा । अयं भावः । 'यं कामये तं तमुग्रं कृणोमि' इति रुद्रादीनां श्रीप्रसादायत्तज्ञानादिगुणवत्त्वदर्शनात् 'मम योनिरप्स्वन्तस्समुद्रे' इति श्रियश्च विष्ण्वनुगृहीतज्ञानादिमत्त्वदर्शनाद्विष्णोस्त्वनन्याधीनज्ञानादिगुणवत्त्वाच्चाद्भुतानां विशेषाणामनन्तानां[1] तैरज्ञातत्वान्न तेषां निरुपचरितसर्वज्ञत्वमतो न तेषु[2] तस्य हेतोर्व्यभिचार इति स एव सर्वकर्तेति । 'न ते विष्णो जायमानः' 'एष सर्वेश्वर एष भूताधिपतिः' इत्यादिश्रुतिरनन्याधिपतित्वे सर्वाधिपत्ये च मानम् । सुष्ठु राजान्तर[3]-रहित इति वा स्वराट् । स्वं आत्मानं स्वयमेव राजयति प्रकाशयति न परेच्छयेति वा ।

ननु श्रुतीनामनन्तत्वादेकत्र हरेरन्याधीनत्वकथनसम्भवादतः कुतो निश्चयः परोऽनन्याधीन[4] इति तत्राह— **तेन इति** । यः पर आदिकवये चतुर्मुखाय ब्रह्म सांगं वेदं हृदा स्नेहेन तेने विस्तारितवान् । तस्य सकृदुपदेशमात्रेणाशेषविशेषग्रहणसामर्थ्येऽपि[5] 'वक्तव्यं ब्रह्म गुरुणा चतुर्वारमथापि वे'त्युपदेशशास्त्रमनुसृत्य तेन इत्युक्तम् । शिष्यशिक्षायै तथोपदेशसंभवात् । चतुर्मुखस्य वेदोपदेशेन हरेरनन्याधिपतित्वस्य किमायातमिति चेन्न । 'प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूवे'ति श्रुतौ चतुर्मुखस्य निरतिशयमाहात्म्यकथनात्तदुपदेशात्तस्यानन्याधिपतित्वसिद्धेः । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा' इति श्रुतेः सकलवेदविद्योपदेशोऽपि सिद्धः । आदिकवित्वं च ब्रह्मणः 'कविर्यः पुत्रः स ईमा[6] चिकेते'त्यादिश्रुतिसिद्धम् । 'ब्रह्म वेदस्तपस्तत्त्वं ब्रह्म विप्रः प्रजापतिरि'त्यभिधानम् । 'हृत्स्नेहे मनसि स्निग्धे सुहृद्धन्वौ हरावपी'ति च । न प्रहेलिकावदुपदेश इति द्योतनाय हृदेत्युक्तम् । तेने ब्रह्मेति सर्वज्ञत्वे हेत्वन्तरं वा । सकलचेतनराश्युत्तमस्य चतुराननस्योपदेष्टुः शार्ङ्गपाणेः सर्वज्ञत्वं न्यायप्राप्तमिति भावः ॥

'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्ता'दिति श्रुतौ नारायणविषयज्ञानस्वातन्त्र्यकथनात्तदुपदिष्टज्ञानेनैव तज्ज्ञानं कथं संगच्छत इत्याशङ्क्य 'यमेवैष वृणुते तेन लभ्य' इति श्रुतेः तत्प्रसादायत्तज्ञानेन तद्विषयं[7] ज्ञानं, न तु स्वप्रतिभया[8] । अन्यथा ज्ञानमेव न स्यादुक्तहेतोरित्यभिप्रेत्याह— **मुह्यन्ति यं सूरय इति** । यं प्रति भूतभविष्यद्वर्तमानब्रह्मादयो यत्प्रसादमन्तरेण मुह्यन्ति । 'मुह वैचित्त्ये' इति धातोः । चित्तिर्ज्ञानम् । न जानन्ति, कश्चिदन्यथा च जानन्तीत्यर्थः । तस्मात् ब्रह्मादिचेतनराश्यचिन्त्यमहिमामहीधरः इति प्रमीयते[9] ।

---

१ विशेषणानाम् - ग  २ नान्येषु-क ख ग ङ च  ३ सुष्ठु अराट् राजान्तर - प
४ परो नान्याधीन - क ग घ छ ज झ च  ५ सामर्थ्येऽपि विस्तारितमिति । 'वक्तव्यं ब्रह्म - च ग ङ छ
६ इमा - छ ढ ग ज  ७ ज्ञानेनैतद्विषयं - ग ज ख  ८ स्वायत्तं - क अ  ९ प्रतीयते - ग घ ङ ढ स ।

---

नन्वीश्वरः सृष्ट्यादौ प्रवर्तनात्तः प्रयोजनार्थी सृजति[1] अन्यथा वा ? न प्रथमः । यत्प्रयोजनार्थं प्रवर्तते तस्य पूर्वं[2] तदभावादपूर्णत्वेनाशक्तत्वात् सृष्ट्यनुपपत्तेः । न द्वितीयः । प्रवृत्तिमात्रस्य प्रयोजनोद्देशेन[3] दृष्टत्वाद् वृथा तदनुपपत्तेरतो मायामयी सृष्टिरेष्टव्येत्यत आह– तेजोवारीति । तेजोवारिमृदां विनिमयो यथा तथा त्रिसर्गः । यत्र यस्मिन् भगवति विषये मृषैव पूर्वाप्राप्तप्रयोजनप्रापको न भवति । कथं तर्हि प्रवृत्तिरिति चेत् उच्यते । 'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' 'लोकवत्तु लीलाकैवल्यं' इति श्रुतिसूत्रबलादाप्तसमस्तप्रयोजनस्य हरेः लीलयैव प्रवृत्तिरिति भावः । जीवेश्वरजडानां सर्गस्त्रिसर्गः यथा एकमेव मूलं[4] तेजः स्वकार्येषु पार्थिवादिपदार्थेषु बहुधा भूत्वा प्रविशति बहिश्च मथनादिनाविर्भवति तथेश्वरोऽपि जगत्सृष्ट्वा बहुरूपीभूय जगदन्तः प्रविशति बहिश्च भक्तानुकम्पयो[5] वासुदेवादिबहुरूप आविर्भवति । अयमीश्वरसर्गः । दीपाद्दीपान्तरोत्पत्तिर्यथा तथेश्वरसर्ग इति वा । यथा सूर्यादितेजसां जलाद्युपाधिनिमित्तैर्बहूनि प्रतिबिम्बानि सूर्यकादीनि सूर्यादेर्जायन्ते तथैव सूक्ष्मस्थूलशरीराद्युपाधिनिमित्तैः प्रतिबिम्बभूता जीवा हरेरुत्पद्यन्ते । एष जीवसर्गः । यथा कुलालो मृदमुपादानीकृत्य घटादीन् सृजति तथेश्वरो जडप्रकृतिमुपादानीकृत्य[6] महदहङ्काराद्यशेषजडपदार्थान् सृजति । एष जडसर्गः । अनेन मायामयी सृष्टिरित्यस्य किमायातमिति चेदुच्यते । यत्र ईश्वर इति विशेषणात् अन्यत्र जगति अमृषा मिथ्या न भवति । तथा च योजना– यथा तेजोवारिमृदां विनिमयः कार्यं अर्थक्रियायोग्यत्वात्सद्-सद्विलक्षणो न भवति तथा यत्र यदाधारतया क्रियमाणस्त्रिसर्गो मिथ्या न भवति । अर्थक्रियानुपपत्तिरेव[7] मिथ्यात्वबाधिकेति भावः ।

ननु तेजःकार्यं केशोण्ड्रकादि, वारिकार्यं फेनादि, मृत्कार्यं घटादि यथा मिथ्या तथा यत्र जगन्मिथ्येत्यर्थः स्यात् । तथाच श्रुतिः 'वाचारंभणं विकारः' । अनुमानञ्च विमतं मिथ्या दृश्यत्वात् इत्यतो मायामयी सृष्टिरिति तत्राह[8] धाम्नेति । स्वेन धाम्ना-स्वरूपज्ञानमहिम्ना सदा नित्यं निरस्तं कुहकं इन्द्रजालादिमाया येन यस्य वा स तथोक्तः[9] तं । 'यः सर्वज्ञः' 'अथैनमाहुः सत्यकर्मेति' 'विश्वं सत्यमि'त्यादिश्रुतिविरोधादुदाहृतश्रुतेरर्थान्तरत्वसंभवादनुमानस्य च[10] व्याप्तिशून्यत्वेन तद्विरोधाभावान्नित्य-

---

१ भवति - क २. यो ह्यत्प्रयोजनार्थं....तस्य तत्पूर्वं - ख ङ ग ड ।

३ स्वप्रयोजनोद्देशेन - ख ग क घ ङ ४ मूलं - क ग ङ घ ५. भूतानुकम्पया - क ।

६ उपादाय - क ग घ ङ ड ७ अयं पाठः ङकोशस्थः । अर्थक्रियोपयोगित्वोपपत्तिरेवेति अन्यत्र ।

८ रित्यत आह - क घ ग ङ छ ९. येन स तथोक्तः - ग १० अनुमानस्य व्याप्ति - क घ ङ छ च ।

निरस्तेन्द्रजालो विष्णुर्न मायामयीं सृष्टिं विदधाति । किन्तु सत्यामेव । लोके च असमर्थः सन्निन्द्रजाला-दिकं सृजति न तु समर्थः । विष्णुस्तु नित्यपरिपूर्णशक्तिः किमर्थं तत्करोतीत्यर्थः । मुक्तव्यावृत्तये सदेत्युक्तम् । तेषां मुक्तेः पूर्वं बन्धभाक्त्वेन कुहकित्वसम्भवात्[1] । ननु विष्णोः सदा निरस्तकुहकत्वे मुक्तव्यावृत्तिर्घटते[2] तदेव कुत इत्यत आह– सत्यमिति । सत्यं निर्दुःखनित्यनिरतिशयानन्दानुभव[4]रूपम् । 'सच्छब्द उत्तमं ब्रूयादानन्दं तीति वै[3] वदेत् । येति ज्ञानं समुद्दिष्टमि'ति वचनान्नित्यनिरस्तकुहकत्वेन मुक्तव्यावृत्तिर्युज्यत इति भावः ।

एतदुक्तं भवति । उपक्रमादितात्पर्ययुक्त्युपेतसर्वश्रुतिस्मृतितात्पर्यपर्यालोचनया सर्वजगत्सृष्ट्यादि-कर्तृत्वात्सर्वज्ञत्वादनन्याधिपतित्वाच्चतुर्मुखज्ञानोपदेष्टृत्वात्तदनुग्रहमन्तरेण दुर्ज्ञेयत्वात्स्वप्रयोजनानुद्देशेन केवललीलयैव जगत्सर्जनादिप्रवृत्तिमत्त्वात्स्वत एव नित्यनिरस्तेन्द्रजालत्वेन सत्यमहिमत्वान्नित्यनिर्दुःख-निरतिशयानन्दानुभव[5]रूपत्वाच्च सर्वगुणपूर्णो विष्णुः सर्वैर्ध्येय इति तात्पर्यार्थः ।

ननु धीमहीति छान्दसप्रयोगः कस्मात् कृतः ? उच्यते । गायत्रीप्रतिपाद्यं नारायणाख्यं परं ब्रह्मैव, न सूर्यः । तस्य 'चक्षोः सूर्यो अजायत' इति श्रुत्या तदङ्गजननोक्तेरिति दर्शयितुं, यथा वेदा-ध्ययनोपक्रमे गायत्र्यधीयते[6] विशिष्टफलहेतुत्वात्तथा भागवतोपक्रमेऽपीति वा, गायत्र्याद्यशेषवेदप्रतिपाद्यो नारायण एव भागवते प्रतिपाद्यत इति वा, इतरेषां भगवत्कृतत्वेन तत्परत्वेऽपि तद्व्यावृत्तये इति वा, इतरेभ्योऽप्यस्य माहात्म्याधिक्यप्रकटनायेति वा धीमहीति छान्दसं पदं प्रायुङ्क्त भगवान् बादरायणः । तथाच मात्स्यपुराणे पुराणदानमाहात्म्यं प्रस्ताव्य[7] तन्माहात्म्यं तल्लक्षणं च प्रदर्शितम् – 'यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः । वृत्रासुरवधश्चापि यत्तद्भागवतं विदुः । लिखित्वा तच्च यो दद्याद्धेमसिंह-समन्वितम् । पौर्णमास्यां प्रोष्ठपद्यां स याति परमं पदम् । अष्टादशसहस्राणि पुराणं तत्प्रकीर्तितमि'ति । स्कान्दे च 'ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः । हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा । गायत्र्या च समारम्भो यत्र भागवतं विदुरि'ति । गारुडे च 'अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः । गायत्रीभाष्यरूपोऽसौ वेदार्थपरिबृंहितः । द्वादशस्कन्धसंयुक्तः शतविच्छेदसंयुतः । ग्रन्थोऽष्टादशसाहस्रः

---

१ कुहकत्व - क च ग ज छ ट २ मुक्तामुक्तव्यावृत्ति - क ३ घटेत - घ च ग

४ आनन्दाद्यनुभव - क च ज ग घ ट ५ आनन्दाद्यनुभव - क ६ गायत्र्यधिधीयते - क ग प ठ

७ माहात्म्यप्रस्तावे - घ

श्रीमद्भागवताभिध' इति। अन्ये चतुर्विंशत्साहस्रं भागवतमिति वदन्ति। तदसंप्रदायविदां वचनमित्युपेक्षणीयम्।

गायत्र्यर्थोऽप्यनेन श्लोकेन सूचितः। तथाहि—तत्सवितुर्देवस्येत्यस्यार्थो जन्माद्यस्य यत इति। 'वामं वरेण्यं परमि'त्यभिधानाद्वरेण्यमित्यस्य व्याख्यानं परमिति। भर्ग इत्यस्य व्याख्यानं धाम्ना स्वेन सदा निरस्तकुहकमिति। भर्गः सकलदुरितभर्जनं ज्योतीरूपम्। तत्पदार्थव्याख्यानं स्वराडिति। धियो यो नः प्रचोदयादित्यस्य विवरणं तेने ब्रह्म हृदा य आदिकवये इति। यः सविता जन्मादिकर्ता नः अस्माकं धियः बुद्धीः। उपलक्षणमेतत्। सर्वेन्द्रियाणि। स्वतत्त्वविषयं ज्ञानं गुरुमुखेनोपदिश्य तज्ज्ञानसाधनानि सर्वाणि करणानि प्रचोदयात् प्रचोदयति स्वात्मविषयतया प्रेरयति, तस्य सवितुर्देवस्य क्रीडादिगुणसम्पन्नस्य नारायणस्य अनन्याधीनतया ततत्वाद्व्याप्तत्वाच्च वरेण्यं सकलगुणाकरतया परममङ्गलं भर्गः ज्योतीरूपं भरणगमनयोगात्सर्वज्ञं वा वपुः ज्ञानानन्दगुणविरचितकरचरणाद्यवयववत् धीमहि ध्यायेम। ज्ञानमेव तत्प्रीतिजनकं, न कर्मादिकम्। तस्मात्तच्चिन्तनं कर्तव्यमित्यर्थः।

यत्तु केनचिद्विद्वन्मन्यैतैवंविधग्रन्थव्याख्यानारम्भसमये प्रजल्पितम्— 'पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना। आक्षेपश्च समाधानमितिव्याख्यानलक्षणम्। अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत्। विप्रकृष्टं च सन्दध्यादानुपूर्वीञ्च[1] कल्पयेत्[2]। लिङ्गं धातुं विभक्तिं च योजयेच्चानुलोमतः। वाक्यार्थस्यानुसारेण तेषाञ्च व्यत्ययोऽपि वे'ति[3] तदनुपासितग्रन्थसम्प्रदायवित्सज्जनचरणैस्तत्प्रेक्षितमिति[4][5] न विदुषां परिषदि सारस्यं आधत्ते। नहि[6] यथावेदादावकरित्यत्राकरोदिति पदं अशक्यनिवेशनं[7] तथात्राप्यतिरिक्तं पदं सन्त्यज्य हीनं संयोज्य व्याख्यानं तल्लक्षणं भवति[8]। तस्माद्यथास्थितग्रन्थव्याख्यानमेव सज्जनचित्तरञ्जनमिति सन्तोष्टव्यम्।

ननु नायं श्लोकार्थः किन्त्वन्य एव। तथाहि तं सत्यं धीमहि। ननु मृत्तिकेत्येव सत्यमिति मृदादेरपि सत्यत्वं श्रूयते। तद्वदत्रापीति तत्राह— **परमिति**। मृदादेः कार्यापेक्षया सत्यत्वं अयं तु पारमार्थिकः सत्यः 'तत्सत्यं स आत्मे'ति श्रुतेः। परस्य सत्यस्यावाङ्मनोगोचरस्य[9] कथं ध्यातृध्येयध्या-

---

१ अवयवमिति यावत् - क, ज  २ आनुपूर्व्यं च – क, ज  ३ प्रलयोऽपि चेति - क घ ङ ड।

४ तदुपासित - ग ङ  ५ उपेक्षितम् - ज क। अनुपासिता ग्रन्थसंप्रदायवित्सज्जनचरणा यैस्तैस्तत्प्रेक्षितमिति, उपासिता ग्रन्थसंप्रदायवित्सज्जनचरणा यैस्तैरुपेक्षितमिति पाठद्वयमपि साधु।

६ उपेक्षितमिति विदुषां परिषदि सारस्यमाधत्ते न हि। - क ज  ७ अयं क घ ज कोशस्थः।

८ तल्लक्षणं न भवति – क ग घ ज ङ।  ९ अवाङ्मनसगोचरस्य - घ। अवाङ्मनसोऽगोचरस्य - छ ग।

नादिव्यवहारगोचरत्वं नेत्याशङ्क्याह— जन्माद्यीति । अस्य जगतो जन्मस्थितिभङ्गं[1] यतः परात्स-स्यात् तं धीमहीत्यर्थः । 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतिसिद्धजगत्कारणरूपेणावाङ्मनो-गोचरस्यापि ध्यातृध्यानादिव्यवहारो घटत इति भावः ।

ननु ब्रह्मणः सिद्धरूपत्वात् प्रमाणान्तरगोचरत्वं[2] मतस्तत्र वेदान्तानामनुवादकत्वादप्रामाण्यमित्या-शङ्क्याह— अन्वयादिति । वेदान्तानां ब्रह्मण्येवान्वयात्सम्यगन्वयात्[3]तात्पर्यादित्यर्थः । तथाच श्रुति-स्मृती— 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्य' इति । प्रमाणान्तरा[4]सिद्धत्वेन ह्यननुवादकत्वं सिद्ध[5]मित्यपि ज्ञातव्यम् । न केवलं श्रुत्यन्वयात् स्मृत्यन्वयाच्चेत्याह— इतरतश्चेति । 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथे'ति स्मृतितश्चेत्यर्थः[6] । अथवा प्रतिपदोक्तविवक्षितार्थसिद्धये हेतुमाह— अन्वयादितरतश्चेति । अस्ति प्रकाशते इति ब्रह्मण एवं कार्यप्रपञ्चे मृदादेरिव घटादौ सदन्वयादित-रतोऽस्तिप्रकाशव्यतिरेकेण कदाचिदपि कस्याप्यप्रतिभासान्मृदादिव्यतिरेकेण घटादेरिवेत्यन्वयव्यतिरेकौ दर्शितौ । अथवा ब्रह्मणि कारणपक्षे महदादिकार्यदर्शनादन्यथाऽदर्शनादिति सत्तास्थित्योः अन्वयव्यतिरेकौ दर्शितौ । ननु तर्हि साङ्ख्यपरिकल्पितं प्रधानमेव जगत्कारणमस्तु किं ब्रह्मणेति तत्राह— अर्थेष्वभिज्ञ इति । उत्पाद्यत्वेनार्थेष्वभिज्ञः सः । अभितः सर्वतः सर्वं जानातीति । एवंविधस्यैव कारणत्वं नेतरस्य । प्रधानस्य जडत्वान्न सर्वज्ञत्वम् । तथाच 'यः सर्वज्ञः' इति श्रुतिः । तर्ह्यर्थेष्वभिज्ञानां जीवानामेव जगत्कारणत्वमस्त्वित्याशङ्क्याह— स्वराडिति । स्वयमेव राजत इति स्वराट् । जीवानां परिच्छिन्नज्ञानत्वेन पराधीनत्वान्न कर्तृत्वं सम्भवतीति भावः । 'एष सर्वेश्वरः एष लोकपाल' इति श्रुतेः । सर्वेश्वरस्यापि 'न तस्य कार्यं[7] करणं च विद्यते' इति श्रुत्या कार्यकरणाद्यभावात् कथं सर्वज्ञ-त्वमिति तत्राह— तेने ब्रह्मेति । आदिकवये ब्रह्मणे यः ब्रह्म ऋग्वेदादिलक्षणं साङ्गं वेदं हृदा मनसा मनोमात्रेण साधनान्तरनिरपेक्षतया तेने पूर्वप्रलये सूक्ष्मरूपेण स्वस्मिन् स्थितं वेदं सृष्ट्यादौ[8] स्वरमात्रा-वर्णपदवाक्यादिक्रमेण विस्तारितवान् । ब्रह्मणः उपाधिभूतां बुद्धिं निर्माय तत्र वेदं प्रकाशितवान् इति वाऽर्थः । अथवा हृदोपनिषदा सह सङ्कल्पमात्रेण कार्यकारणसम्बन्धरहितोऽपि भगवान् सर्वान्तर्यामी

---

१ भङ्गाः - क ख   २ प्रमाणान्तरागोचरत्वं - घ ङ च ज   ३ अयं टकोदारस्थः पाठः ।

४ प्रमाणान्तरासिद्धत्वे - ख । प्रमाणान्तरसिद्धत्वेन - क छ   ५ अनुवादकत्वं न सिद्धं - ख ।

६ अयं - टकोदारस्थः ।   ७ ब्रह्मणश्च - क घ ङ छ ग ।

८ अयं पाठः पुस्तकान्तरेषु नास्ति ।

ब्रह्मादिकार्यकारणसाक्षित्वेन सर्वज्ञ इत्यर्थः । एवं जगत्कारणे सच्चिदानन्दात्मके वेदैकवेद्ये निरवद्ये सर्वेश्वरे परैरुद्भाव्यदोषकलामात्रमपि[1] नास्तीत्यभिधत्ते– मुह्यन्तीति । यं प्रति सूरयः कपिलादयः शास्त्रप्रणेतारः मुह्यन्तीत्युक्ते तत्प्रणीतशास्त्रस्य निर्मूलत्वेनाप्रामाण्यात्तद्विरोधगन्धोऽपि[2] नास्तीत्यर्थः । "नानाऽसत्तर्ककलिलान्तःकरणदुरवग्रहवादिनां[3] विवादानवसरे, उपरतसमस्तमायामये, भगवति को नु दुर्घट." इति स्वोक्तेः । अतः परमसत्यादप्युत्पन्नस्य जगतः कुतः सत्यत्वं किन्तु मिथ्यात्वमेवेति दर्शयति– तेजोवारीति । विनिमयः कार्यं[4] । तेजोविनिमयः केशोण्डूकादिः । वारिणो विनिमयः हिमकरकादिः । मृदो विनिमयो घटादिः । यथा येन प्रकारेण तथा । कारणसत्ताप्रतीतिव्यतिरेकेण कार्यस्य पृथक् सत्ताप्रतीतिशून्यत्वमेवात्र मिथ्यात्वम् । तद्वत्तेजोवारिमृदामपि कारणसत्ताप्रतीतिव्यतिरेकेण पृथक् सत्ताप्रतीत्यभावान्मिथ्यात्वमिति भावः । किञ्च, त्रिवृत्कृतानामत्रिवृत्कृतानां चोभयेषां दृष्टान्तदार्ष्टान्तिकव्याजेन मिथ्यात्वं कथितमिति सम्प्रदायविदामभिप्रायः । ननु ब्रह्मणो जगत्कारणत्वे क्रियाकारकादिसम्बन्धाद् 'असङ्गो ह्ययं पुरुषः' इति विरुध्येतेत्यतो वाऽऽह– तेजोवारीति । त्रिसर्गस्त्रयाणां तेजोवारिमृदां[5] सर्गः । उपलक्षणं चैतत् । पञ्चानां भूतानां सृष्टिः यत्र मृषा । कथं ? यथा तेजोवारिमृदां[6] विनिमयो मिथ्या तथा जगदपि मिथ्येत्यर्थः । 'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि'ति श्रुतेः । इदानीमेवंविधप्रपञ्चकारणत्वेन कल्पितमायासम्बन्धनिबन्धनं किञ्चिदपि चिद्रूपपरमसत्यात्मके ईश्वरे स्वदृष्ट्या वस्तुगत्यापि नास्तीति दर्शयति– धाम्नेति । धाम्ना प्रकाशेन स्वरूपभूतेनात्मचैतन्येनोपचारतः कारणत्वेन कल्पितेन सदा सर्वदा निरस्तं निराकृतं कुहकं कपटं मायाख्यं येन स तथोक्तः तम् । सदेति जीवाद्वैलक्षण्यप्रदर्शनाय । अर्थादसङ्गत्वं कूटस्थत्वं चोक्तम् । तस्मादेकमेव ब्रह्मोपहितानुपहितभेदेन 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं चे'ति श्रुत्या प्रतिपाद्यते । तत्र सगुणब्रह्मोपासनाजनितेन ज्ञानेन शुद्धान्तःकरणस्य निर्गुणब्रह्मोपास्तौ बुद्धिरुपतिष्ठते । ततश्च सकलं स्वात्मानं पश्यन्नात्मव्यतिरिक्तं किञ्चिदप्यपश्यन्निर्गुण एवावतिष्ठते इत्येषोऽर्थोऽनेन प्रतिपाद्यते । नापरोऽप्रामणिक इति ।

तदेतत्कण्ठशोषणं पलालज्वलनज्वालातुल्यमिति[7] न परीक्षकाः क्षणमपि कटाक्षेण प्रेक्षन्ते । पूर्वापरपर्यालोचनया स्वोत्प्रेक्षितयुक्तिविरुद्धत्वाच्छ्रुतिस्मृतीनामतात्पर्यार्थत्वात्प्रत्यक्षादिप्रमाणप्रहरणप्रहतशिर-

---

१ कलाऽपि - क घ ग ज । २ तद्विरोधिग्रन्थो - ज क ।
३ तर्कलीनान्तः - घ छ ग । तर्कशास्त्रलीनान्तः - ड ४ इत्यर्थः - क घ ङ ड ।
५ तेजोबन्नानां - ख ट ६ तेजआदीनां - घ ख ७ शोषणप्रलापज्वलन - ख घ छ ज ट ।

धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।
श्रीमद्भागवते महामुनिकृते किं वाऽपरैरीश्वरः
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥ २ ॥

---

स्कत्वादाचार्यैस्तत्र तत्र निराकृतत्वाच्छ्रुत्यादीनां मिथ्यापरत्वे विरोधस्य दर्शितत्वादस्मदुक्तार्थे बहुप्रमाण-संवादात् ग्रन्थबाहुल्यभयान्न तन्निराकरणं प्रपञ्च्यते । - नहि 'अपरस्परसम्भूतं किमन्यत्कामहैतुकमि'ति वदतां सम्प्रदायवित्त्वमिति ॥ १ ॥

ननु जन्माद्यस्य यत इत्यनेन सकलपुराणार्थस्य[1] सङ्क्षेपतो दर्शितत्वात्किनुत्तरश्लोकेनेत्यतो ग्रन्थारम्भे मङ्गलाचरणाद्युक्त्या नारायणस्य प्रस्तुतत्वं न तु साक्षाद्विषयत्वेन । विषयस्त्वन्यः[2] एवेति संशय-निरासार्थं विषयतत्साधनाधिकारिप्रयोजनानि द्वितीयश्लोकेन दर्शयति—धर्म इति । ननु यदिष्टसाधनाव-[3] बोधकं प्रायस्तदेव प्रमाणतयोपादेयम् । अतः कथमस्य ग्रन्थस्येत्यतो वाऽऽह—धर्म इति ।

अत्र श्रीमद्भागवते प्रोज्झितकैतवः परमो धर्मः प्रतिपाद्यते । अत्र श्रीमद्भागवते निर्मत्सराणां सतां वेद्यं वास्तवं शिवदं तापत्रयोन्मूलनं वस्तु प्रतिपाद्यते । किंविशिष्टे ? महामुनिकृते । अपरैः किं वा ? शुश्रूषुभिः कृतिभिः अत्र श्रीमद्भागवते अभ्यस्यमाने ईश्वरः सद्यस्तत्क्षणात् हृदि अवरुध्यत इत्येकान्वयः ।

अत्र अस्मिन् श्रीमद्भागवते । श्रीमत्त्वं नाम श्रूयमाणरमणीयतयाऽर्थपर्यालोचनया चास्येतरेभ्यः आधिक्यम् । तथाचोक्तं—

"राजन्ते तावदन्यानि पुराणानि सतां गणे ।
यावन्न दृश्यते साक्षाच्छ्रीमद्भागवतं परमि"ति ।

ध्रियते अनेन अधः पतन् पुरुष इति धर्मः । धारयतीति धरो भगवान् सः मीयते ज्ञायते अनेनेति वा । दधाति कर्तारं रमयति मिनुते[4] हिनस्ति पापमिति वा भगवत्प्राप्तिसाधनभूतः । ननु धर्मोऽन्यत्रापि प्रतिपाद्यते, किमत्रैवेति तत्राह – प्रोज्झितकैतवः । कितवस्य भावः कैतवं, प्रकर्षेण उज्झितं त्यक्तं

---

१ पुरुषार्थस्य - क छ  २ विषयस्त्वन्यः स एवेति - ख  ३ साधनत्वाव - क छ ज ।
४ मनुते - ज क  मीनोति - घ ।

कैतवं येन सः तथोक्तः। कितवो नाम लोके मनस्यन्यदभिसन्धायान्यदभिधत्ते, अन्यदाचरति[1]। तद्वदत्रापि भगवत्प्रीतिनिमित्तेन स्वर्गादिफलं मनस्यभिसन्धाय भगवद्गुणप्रतिपादनलोलुपनिगमार्थं अन्यथावदन् स्वात्मनो देहेन्द्रियाणामीश्वराधिष्ठितत्वं ईश्वरनियम्यत्वं निगूह्य हरेः कारयितृत्वं फलदातृत्वमप्यवगम्य[2]-व्याहमेवेदं करिष्येऽर्थी समर्थो विद्वानहमेव स्वतन्त्र इति बुद्ध्या कुर्वन्। तेन[3] क्रियमाणो धर्मः कैतवं[4] इत्युच्यते। अतोऽफलकामनयैव धर्मः कर्तव्य इत्ययमर्थोऽत्र प्रतिपाद्यत इत्यर्थः। "तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये" इति श्रीविष्णुपुराणे। तर्ह्येतावता पूर्यत इति तत्राह – परम इति।

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणमिति" स्मृतेः

भगवदर्पणतः परमो भवतीत्यर्थः। परः परमात्मा मीयतेऽनेनेत्येतदभिप्रायेण परम इत्यन्वयादि[5]। 'परोऽरिपरमात्मनो'रित्यभिधानात्। परः शत्रुः संसारः मीयते प्रमीयते प्रलीयत इति वा। 'मीङ्[6] हिंसायाम्'। 'प्रमया[7] हिंसा च संज्ञपनमि'त्यभिधानम्। किञ्च यतोऽधिकतमः सुखहेतुर्न भवति[8] स परमो धर्मः। स च भक्तियोगलक्षण एव। तथाच भारते, भीष्मयुधिष्ठिरसंवादे – 'को धर्मः सर्वधर्माणां भवतः परमो मतः' इति पृष्टे,

"एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदे"त्युक्तम्।
"एतावानेव लोकेऽस्मिन् पुंसां धर्मः परः स्मृतः।
भक्तियोगो भगवति तन्नामग्रहणादिभिः॥"
"नृणामयं परो धर्मः सर्वेषां समुदाहृतः।
त्रिशल्लक्षणवान्साक्षात्सर्वात्मा येन तुष्यतीति॥"

स्वोक्ते[9] केषामधिकारः कश्च साक्षाद्विषय इति तत्राह— **निर्मत्सराणामित्यादिना**। भावप्रधानो निर्देशः। निर्गतं मात्सर्यं येषां ते तथोक्ताः तेषाम्।

१ अन्यदेवाचरति - ख छ ङ।
२ अयं पाठः क ङ कोशस्थः। अन्यत्र - अगम्यमपेव।
३ 'कुर्वन् तेन' इतिस्थाने कितवेन - ग घ ङ छ ४ कैतवमिति भाष्यम्।
५ अयं घ ङ कोशस्थः। अन्यत्र कोशेषु - अभिधायि। ६. मीञ् - ग छ।
७ छपाठेऽप्येवम्। प्रमुया - ङ। प्रमृया - घ। प्रमीया - क ज। प्रमाया - च।
८ योऽधिकतमः सुखहेतुर्भवति - ङ। यतोऽधिकतमः सुखहेतुर्भवति - क ग ज।
९ अयंछपाठस्थः। अन्यत्र 'स्वोक्तेः।' इति।

स्तां प्रशस्तकर्मणां पुरुषाणाम् । सतामपि क्वचित् कंचिन्मात्सर्यं स्याचत्र कर्तव्यं स्वोत्तमेष्विष्यते। निर्मत्सराणामित्युक्तम् । वेद्यं ज्ञेयम् । 'कृयोगे षष्ठी'ति सतामिति षष्ठी । वेदनं ज्ञानमेवार्हति[1] न कर्मादिकमित्यतो वेद्यमित्युक्तम् । वास्तवं नित्यनिरस्तदोषं गुणपूर्णम् । वस्तु अप्रतिहतनित्यं[2] अप्रतिहतनित्यत्वेन वसनशीलत्वात् इत्यर्थः । दुःखनिवृत्तिसुखप्राप्तिलक्षणस्य पुरुषार्थत्वात्तदभावात् किमनेनेति तत्राह- शिवदमिति । परमानन्दं ददातीति[3] । तापत्रयोन्मूलनं आध्यात्मिकादिसकलदुःखनिवर्तकञ्च 'वेत्ता वेद्यस्य सर्वस्य मुनिः सद्भिरुदाहृत' इत्यभिधानान्मुनयो ब्रह्मादयः । तेभ्योऽप्यतिशयितसार्वज्ञ्या महामुनिर्व्यासः साक्षान्नारायणः । 'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुमि'ति वचनात्[4] । तेन कृते प्रणीते । ननु किमिति ईश्वरतुष्टिकरो भक्तियोगलक्षणो धर्म ईश्वरश्चात्र प्रतिपाद्यो न धर्मादिरिति तत्राह- किं वेति । भक्तियोगलक्षणधर्मस्य हरेरपरोक्षज्ञानमुत्पाद्य तत्प्रसादान्तरङ्गसाधनत्वेन अपवर्गलक्षणानश्वरफलहेतुत्वात्, बहिर्मुखमनोरञ्जकत्वेन स्वर्गादिक्षयिष्णवल्पफलमुत्पाद्य[5] संसारावृत्तिहेतुत्वात् अपरैः[7] धर्मादिकथनैः किं वा प्रयोजनं न किमपीत्यतः तानन्तरेण भक्तियोगलक्षणधर्मस्तद्विषय ईश्वरश्चात्र प्रतिपाद्यत इत्यर्थः । ननु दृष्टफलप्रवृत्तिद्वारा अदृष्टफलप्रवृत्तिदर्शनात् किमत्र दृष्टफलमिति तत्राह- ईश्वर इति । अस्मिन् भागवतशास्त्रे सम्यगभ्यस्यमाने, कृतिभिः शिक्षितबुद्धिभिः । शुश्रूषुभिः मनोवाक्कायकर्मभिः गुर्वादिपरमपुरुषपरिचरणादिकुशलैः[8] साधनसामग्र्युपेतैः अधिकारिभिः[9] । ईश्वरः लक्ष्मीशादिचेतनगणादुद्र उत्तमः तत्प्रवर्तनशीलो वा परमात्मा । हृदि हृदयकमले । सद्यः शीघ्रम् । तत्क्षणात् कालव्यवधानमन्तरेण । अवरुध्यते भक्तिशृङ्खलया बद्धो दृश्यत इत्यर्थः । अत्र सद्यस्तत्क्षणशब्दौ अधिकारिविशेषद्योतकतया प्रयुक्तौ । ये साधनसामग्रीमन्तस्तेषां यस्मिन् क्षणे ग्रन्थोपक्रमस्तस्मिन् क्षण एव भगवान् दृश्यते । तदुक्तं- 'शनकैर्भगवल्लोकान्नृलोकं पुनरागत' इति । ये भविष्यत्साधनसंपत्तिसंपादनयोग्यास्तेषामपि सद्यः साधनसामग्र्यां सत्यां दृश्यते । यन्नियतं कालान्तरभावि तच्च झटिति[10] भवत्येवेति वक्तुं शक्यत्वात् । भक्तियोगलक्षणधर्मेश्वरौ विषयतया, निर्मत्सरसदधिकारिभिः प्राप्यं निर्दुःखपरमानन्दाख्यं प्रयोजनमित्येतत्त्रितयमत्र प्रतिपाद्यत इत्यभिप्रायेणात्रेति त्रिशः कथितम् । न तु सगुणं ब्रह्म, तत्तुष्टिकरः परमधर्मः, निराकारं निर्गुणं ब्रह्म चेति त्रितयाभिप्रायेणात्रेति त्रित्वमिति ।

---

१ 'अर्हति' इति नास्ति - क ग घ छ ज  २ अप्रतिहतं नित्यं - क ग घ छ ज ।
३ ददातीति च - क ग घ ज । ददाति - ख  ४ परम् - कोशान्तरेषु सर्वत्र । ५ वचनम् - क ख ग घ ज ।
६ अयं खकोशस्थः । मूले क्षयिष्णु फलम् । क्षयिष्णुवत् फलं - क ख ग घ छ ज ।
७ अयं घकोशस्थः । अन्यत्र नास्ति । ८ मनोवाक्कर्मभिः परिचर्याकरणकुशलैः - क ख ग घ छ
९ एभिः - क ग घ छ ज  १० तज्झटिति - क ख ग घ छ ज ।

निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥ ३ ॥

---

कर्मदेवब्रह्मकाण्डार्थोऽप्यत्रैव निर्णीयत इति वा । धर्म इति कर्मकाण्डार्थः । निर्मत्सराणां सतामिति देवताकाण्डार्थः । देवतानामेव मात्सर्यराहित्येन मुख्यसत्त्वेनोत्तमाधिकारित्वाच्च[1] । वेद्यमिति ब्रह्मकाण्डार्थः । तस्मान्नारायणावतारेण सर्वज्ञतमेन कृष्णद्वैपायनेनाप्ततमेन प्रणीतत्वेन प्रमाणतमत्वादिदं श्रीमद्भागवतं सर्वमुमुक्षुभिर्निरन्तरमभ्यसनीयमिति सिद्धम् ॥ २ ॥

एवं ज्ञातफलानामपि प्रेक्षावतां प्रशंसाविधिभ्यां भागवतशास्त्रश्रवणाद्यभ्यासे[2] क्षिप्रप्रवृत्तिः स्यादिति प्रशस्य, विधत्ते– निगमकल्पतरोरिति ।

भुवि, हे भावुकाः रसिकाः । यन्निगमकल्पतरोर्गलितं[3], शुकमुखादमृतद्रवसंयुतं भागवतं फलं, तस्य रसमालयं मुहुः पिबतेत्येकान्वयः । मर्त्यलोके भवनशीला रसज्ञा यूयम् । निगमयति नितरां ज्ञापयत्यपेक्षिताशेषपुरुषार्थानिति निगमो वेदः । स एव कल्पतरुः कल्पितं सङ्कल्पितं[4] भक्ताकाङ्क्षितं तरति वितरति ददातीति कल्पतरुः सुरपादपः । "उपसर्गः स्वयं धातुलीनमर्थं प्रकाशयति । न स्वत उत्पादयती"ति | धातुवृत्तिकारवचनात्[5] तरतिर्दानार्थोऽपि भवति । 'विश्राणनं वितरणं स्पर्शनं प्रदिपादनमि'त्यभिधानाच्च । तस्मात् व्यासनाम्ना मया गलितं पातितम्[6] । शिवावतारस्य मत्पुत्रस्य शुकनाम्नो मुनेर्मुखात् परीक्षिते प्रवचनादमृतद्रवेण संयुतम् । पूर्वमप्यमृतद्रवीकृतं[7] पश्चाच्छुकाचार्यमुखप्रवचनेनातीव द्रवीकृतमित्यर्थः । तथाच पाद्मपुराणे अम्बरीषं प्रति गौतमवचनं—

"अम्बरीष ! शुकप्रोक्तं श्रृणु भागवतं सदा ।
पठस्व स्वमुखेनापि यदीच्छसि भवक्षयमि"ति ॥

---

१ अयं - क ग घ छ पाठः । मूले चकाररहितः पाठः ।
२ श्रवणाभ्यासे - क ग ज । श्रवणाभ्यासे - छ ङ । ३ यदिति नास्ति - ग ।
४ नास्ति - न पुस्तके ।
५ अयं पाठः घ पुस्तकेप्यस्ति । वृत्तिकारवचनदर्शनात् - क ख । वृत्तिकारदर्शनवचनात् - ग ङ छ । वृत्तिकारदर्शनात् - ज । वृत्तिकारदर्शितवचनात् - ङ ।
६ अयं पाठः ज पुस्तकेप्यस्ति । गलितं शातितं पातितं - ख । शातितं गलितं पातितं - क ग घ छ । शातितं गलितं - ङ ।
७ पूर्वमप्यमृतवत् द्रवसंयुतं - क ज । पूर्वमप्यमृतवत् द्रवीकृतं - ग घ ङ छ ।
८ प्रवचनेन द्रवीकृतं - ग । प्रवचनेन तावद् द्रवीकृतं - ख ङ छ ।

नैमिषेऽनिमिषक्षेत्रे ऋषयः शौनकादयः ।
सत्रं स्वर्गाय लोकाय सहस्रसममासत ॥ ४ ॥

---

भागवताख्यं फलं निष्पन्नं, पक्वमिति यावत् । तस्य फलस्य मधुरं रसं, आलयं लिङ्गशरीरमोक्षपर्यन्तं, मुहुः आवृत्त्या, श्रवणाञ्जलिपुटैः पिबत पानं कुरुत । श्रवणादिनाऽऽस्वादयतेत्यर्थः । अहो इति बालानुन्मुखीकरोति अस्य फलस्यामृतरसास्वादसुखानुभवं पश्यतेति । रसशब्दस्य तिक्तादिषु षट्सु वृत्तावपि अमृतद्रवेत्युक्तेः[1], तदन्यथानुपपत्त्या मधुररसो ग्राह्यः । पानप्रारम्भसमयेऽपि[2] मधुर एवायं रसः न फलतं[3] इति वा अहो इति ।

निगमकल्पः वेदाख्यकल्पवृक्षः[4] । 'कल्पः सुरपादपेऽपि संप्रोक्त' इति वचनात् । तमवतारयति[5] प्रकाशयतीति निगमकल्पतरुः । तस्माच्छुकाचार्याननात् गलितं व्याख्यातम् । परीक्षित इति शेषः । अमृतं कैवल्यम् । तस्य द्रवो गतिः, तया युक्तम् । कैवल्यप्रापकमिति यावत् । रससंपत्तेर्निवासस्थानं[6] भागवतं फलं पिबतेति वा । अत्र पिबतिर्भक्षणार्थः । अनेकार्थत्वाद्धातूनाम । न चायमाचार्योक्तोऽर्थो नेत्यश्रद्धेयम् । चतुर्मुखमुखलेख[7]बुद्धिगोचरापरिमितार्थभागवततात्पर्यार्थं[8] दर्शयतां पूर्णप्रमतीनामाचार्याणामप्ययं कश्चित् बुद्धिसमुद्रार्थतरङ्ग[9] इति निश्चित्य वक्तुं शक्यत्वात् । भुवि गलितमिति वा । देवलोके देवैः पेपीयमानं[10] सज्जनमनुजकृपया भुवि [11]पतितमित्यर्थः ॥ ३ ॥

ननु "ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा । अथवा स्नानमात्रेण [12]गौतम्यां कृष्णसन्निधावि"ति स्मृतेः, प्रकारांतरेणापि पुरुषार्थः स्यात्, किमनेनेत्यतोऽनेनैव पुरुषार्थो नान्येनेति ख्यापनाय अस्य ग्रन्थस्य शिष्टपरिगृहीतत्वज्ञापनाय, श्रोतृप्रवक्तृणां महापुण्यफलवत्त्ववेदनाय च शौनकादिमुनिवर्ग सूतप्रश्नप्रतिवचनरूपामाख्यायिकामाह – नैमिष[13] इति ।

---

१ अमृतद्रवेत्यादिस्तोक्तेः क घ ज  २ समयेति - क ग घ ङ छ ज ।
३ न फलत इति नास्ति - क ज  ४ कल्पकवृक्षः - ख ।
५ तमेव तारयति - क ख ग घ छ ज  ६ रसनिष्पत्तेः - छ ।
७ चतुर्मुखलेख - ग  ८ तात्पर्यं – छ ग घ ङ ।
९ समुद्रतरंगः - क ख ग घ ङ छ ज ।  १० पीयमानं - क ख ग घ ङ ज झ ।
११ पातितं - क ग घ ढ छ ज  १२ गोमत्यां - क ख ग छ ङ छ ज ।
१३ अत्र सर्वत्र 'नैमिष' 'निमिषे'तिस्थाने 'नैमिश' 'निमिशे'ति पाठः – ख ।

त एकदा तु मुनयः प्रातर्हुतहुताशनाः ।
सत्कृतं सूतमासीनं पप्रच्छुरिदमादृताः ॥ ५ ॥

---

शौनकादय ऋषयः अनिमिषक्षेत्रे नैमिषे स्वर्गाय लोकाय सहस्रसमं सत्रं आसतेत्येकान्वयः । शुनकस्यापत्यं शौनकः । तदेव तस्य नाम । शौरिरितिवत् । स आदिर्येषां ते तथोक्ताः । ऋषयस्त्रिकालदर्शिनः, मन्त्रद्रष्टारो वा । अनिमिषक्षेत्रे श्रीनरहर्यादिसुरवरसन्निधानावासे । निमिषाः ऋषिनिषेव्यफलाः वृक्षविशेषाः, तेऽस्मिन्[1] सन्तीति नैमिषम् । "चित्रकृन्निमिषो नेनिश्चवञ्चुलोऽयायुगच्छद"[2] इत्यभिधानात् । विशिष्टक्षेत्रदर्शनाय देवप्रहितस्य सुदर्शनस्य नेमिर्यस्मिन् व्यशीर्यत[3] तन्निमिषं तदेव नैमिषमिति यत् तच्चिन्त्यम् । निमिषनाम्ना ऋषिणा यत्र तपश्चीर्णं तत्सम्बन्धाद्वा नैमिषं तस्मिन् नैमिषारण्ये । स्वरतो विष्णुः, तेन गतो लोको वैकुण्ठाख्यः तस्मै । सदानन्दमूर्तित्वात्स्वर्गो विष्णुः, लोक आश्रयः तदर्थमिति वा । स्वरिति विष्णुस्तं गमयति प्रापयति ज्ञापयतीति स्वर्गः । 'लुकृ प्रकाशन' इति धातोर्लोकः प्रकाशः ज्ञानम् । विष्णुविषयज्ञानार्थमिति[4] वा । न तु "मनःप्रीतिकरः स्वर्गो नरकं[5]स्तद्विपर्यय" इति दुःखासम्भिन्नदेवसेव्यदेशविशेषायेति वाच्यम्[6] । तस्य नश्वरत्वश्रुतेः[7] । सहस्रं समा यस्मिंस्तत्तथोक्तम् । वर्षसहस्रसमाप्यमित्यर्थः । सतः सुजनान् त्रायत इति, सतो ब्रह्मणस्त्राणमस्येति वा सत्तरं प्रशस्ततरं कर्मसु श्रेष्ठमिति वा सत्रं बहुकर्तृकं यागविशेषम् । आसत उपाविशन् । अदीक्षयन्नित्यर्थः ॥ ४ ॥

ये सत्रयागे दीक्षितास्ते मुनयः, सर्वज्ञा अपि एकदा कस्मिंश्चित्काले । स्वाश्रमं प्रत्यागतं, सत्कृतं तद्योग्यसत्कारैः पूजितम् । आसीनं सुखं पीठे उपविष्टम् । सूतं इदं स्वबुद्धिस्थितम् । पप्रच्छुः । किंविशिष्टाः ? आदृताः विनीताः । तेनापि पूजिता वा । हुतं हविरश्नातीति हुताशनोऽग्निः । प्रातःकाले हुतः हुताशनो यैस्ते[8] तथोक्ताः । हुतेन पयआदिद्रव्येण हुतोऽग्निर्यैस्ते हुतहुताग्नय इत्यसत् । हुतशब्दस्य पयआदिष्वपाठात्[9] । तुशब्दो[10] लोकानुकम्पाद्योतकः । पृच्छतेर्द्विकर्मकत्वात् सूतमिदं पप्रच्छुरिति कर्मद्वयं युज्यते ॥ ५ ॥

---

१ तस्मिन् - क घ ङ छ ज　　२ वञ्चुलो - ख　　३ विशीर्यते - क घ न ङ छ ।

४ विष्णुविषयपुराणधर्मज्ञानार्थं - क ज ।　　५ नरकं - ख ।　　६ वाच्यमिति नास्ति - ङ ज ।

७ नश्यत्वश्रुतेः घ छ ज　　नाश्यत्व श्रुतेः - न ङ　　नश्यत्वमिति श्रुतेः - क ।

८ प्रातःकाले स हुतो यैस्ते - ख　　९ मूले 'यज्ञादि' इत्यासीत् ।

१० शब्द इति नास्ति - क न ङ छ ज ।

ऋषय ऊचुः —

त्वया खलु पुराणानि सेतिहासानि चानघ ।
आख्यातान्यप्यधीतानि धर्मशास्त्राणि तान्युत ॥ ६ ॥

यानि वेदविदां श्रेष्ठो भगवान् बादरायणः ।
अन्ये च मुनयः सूत परावरविदो विदुः ॥ ७ ॥

वेत्थ त्वं सौम्य तत्सर्वं तत्वतस्तदनुग्रहात् ।
ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥ ८ ॥

---

प्रशंसितः प्रवक्ता सूतः स्वप्रश्नोत्तरं सन्तुष्य सम्यग्वक्तीति हृदि कृत्वा प्रष्टव्यार्थं पृष्टतः कृत्वा तं प्रशंसन्ति शौनकादय इत्याह- त्वया खल्विति । हे अनघ "दुःखेनोव्यसनेष्वघमि"त्यभिधाना न्निरस्तसमस्तकार्यव्यसन । त्वया, सेतिहासानि भारतादीतिहाससहितानि पुराणानि । चशब्दादुप- पुराणानि । अधीतानि वेदवत् पठितानि । आख्यातानि व्याख्यातान्यपि । यानि मनुयाज्ञवल्क्यादि- प्रणीतानि धर्मशास्त्राणि तानि । उत अपि । अधीत्य व्याख्यातानीत्येकान्वयः ॥ ६ ॥

तस्य ज्ञानैश्वर्यं वदन्तीत्याह- यानीति । वेदविदां श्रेष्ठः बादरायणो भगवान् यानि वेद, अन्ये च परावरविदः मुनयः तान्येव विदुः । किञ्च ते मुनयो वेदादन्यत्र यानि विदुः हे सौम्य ! त्वं तदनुग्रहात्[2] तत्वतः तत्सर्वं वेत्थेत्येकान्वयः । वेदवादरा नां वादिनामाश्रयत्वात् बादरायणः, वबयोः सावर्ण्यात् । बदराणां संबन्धित्वात्[3] बादरं अयनं स्थानं यस्य स तथोक्त इति वा । परं ब्रह्म अवरं ब्रह्म च विदन्तीति परावरविदः । अतीतानागतविदो वा । हे सौम्य! भक्तिज्ञानलक्षण- सोमार्ह । 'विद कृतावि'ति धातोः भगवान् यानि वेद चकार, अन्ये च मुनयो यानि चक्रुः तत्सर्वं जानासीति वा । गुरवः स्निग्धस्य स्नेहलक्षणभक्तिसंपन्नस्य शिष्यस्य गुह्यं अतिगोप्यं[4] ब्रूयुः । उत अपि, तत्संभावितमित्यन्वयः । ब्रूयुरपि ब्रूयुरेवेत्यर्थ इति वा ॥ ७ ॥ ८ ॥

---

१ मूलश्लोके टीकायां च परापरेति - क । मूलश्लोके परापरेति टीकायां परावरेति - घ ङ ज ।
२ इदं नास्ति - क ग घ ङ छ ज ।
३ संबन्धि यत् - क ज ४ गुह्यमतिगोप्यमपि - घ ज । गुह्यनपि अतिगोप्यमपि - क ।

तत्र तत्राञ्जसाऽऽयुष्मन्! भवता यद्विनिश्चितम् ।
पुंसामेकान्ततः श्रेयस्तन्नः शंसितुमर्हसि ॥ ९ ॥

प्रायेणाल्पायुषो मर्त्याः कलावस्मिन् युगे जनाः ।
मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः ॥ १० ॥

भूरीणि भूरिकर्माणि श्रोतव्यानि विभागशः ।
अतः साधोऽत्र यत्सारं समुद्धृत्य[3] मनीषया ।
ब्रूहि भद्राय भूतानां येनात्माऽऽशु प्रसीदति ॥ ११ ॥

---

इदानीमभिमतार्थमाहुरित्याह– तत्रेति । आयुष्मन्! प्रशस्तायुरुपेत[1] सूत । भवता तत्र तत्र पुराणादिषु अञ्जसा ऋजुमार्गेण यत् पुंसां एकान्ततः श्रेयः विनिश्चितं तत् नः शंसितुमर्हसीत्यन्वयः ॥ ९ ॥

ननु किमिति संक्षिप्य कथनं, विस्तरेण किन्न स्यादिति तत्राह– प्रायेणेति । अस्मिन् कलौ युगे जनाः अल्पायुषः । अत एव मर्त्याः मरणशीलाः । मन्दाः कर्मकरणशक्तिशून्याः । सुमन्दमतयः अत्यल्पप्रज्ञाः । मन्दभाग्याः अल्पपुण्यभागिनः । कुष्ठभगन्दरादिव्याधिभिरुपद्रुताः । प्रायेणेति प्रत्येक [illegible]न्वय्यते । बहुलमेवं,[2] कश्चिदेवोक्तार्थादन्यथा स्यादित्यर्थे वर्तते । इत्यन्वयः ॥ १० ॥

आयुष्मादीनां[4] अत्यन्तं दुर्बलानां श्रेयःसाधनशास्त्राणि हित्वा अर्थादिविषयानेकशास्त्रश्रवणं दुःशकमित्याह[5]– भूरीणीति । अन्यथा[6] विभागशः प्रत्येकं विभक्तानि पृथक्कृतानि[7] । भूरीणि बहूनि । भूरिकर्माणि बहुव्यापारवन्ति । श्रोतव्यानि अर्थादिविष[illegible]शास्त्राणि सन्ति यत् इत्यन्वयः । प्रश्नार्थं निगमयति– अत इति । यत एवमर्थादिविषयशास्त्रज्ञानं दुःशकं, श्रेयःपरिपन्थि च, आयुरादिकं चाल्पम् अतः साधो! हीनजात्युत्पन्नत्वेऽपि निर्दोष! अत्र एषु शास्त्रेषु यत्सारं तत् मनीषया बुद्ध्या समुद्धृत्य इदमेवोपादेयमिति उपादाय[8] नः ब्रूहि । किमर्थं? भूतानां भद्राय । येन भवदुक्तसारश्रवणेन आत्मा हरिः आशु प्रसीदति अनुग्रहोन्मुखो भवतीत्येकान्वयः ॥ ११ ॥

---

१ प्रशस्तायुष - क ज । आयुषेत - ग घ ङ ।

२ बाहुल्येनैव - ङ ३ मूलश्लोके टीकायां च समुद्गृह्येति - ख ङ ।

४ अयं ख पाठः । मूलकोशे - अल्पायुष्यादिना । अल्पायुष्यादिनिः - क ज ।

५ दुःशकमित्याहुरित्याह - क घ ज । ६ अन्यथेति नास्ति - क ज । अन्यथेति स्थाने यथेति - घ ङ ।

७ तथाभूतानि - ग ८ उपादायेति नास्ति - क ग घ ङ ज ।

सूत जानासि भद्रं ते भगवान् सात्वतां पतिः ।
देवक्यां वसुदेवस्य जातो यस्य चिकीर्षया ॥ १२ ॥

तन्नः शुश्रूषमाणानामर्हस्यङ्गानुवर्णितुम् ।
यस्यावतारो भूतानां क्षेमाय विभवाय च ॥ १३ ॥

---

तारश्च हरेः कृष्णावतारकथैवेत्याशयवन्तः पुनराहुरित्याह– सूतेति । भोः सूत ! जानासि, सकलमिति शेषः । ते तुभ्यं भद्रं मङ्गलमस्तु । ते तव योग्यं[1] बिम्बभूतं भद्रं सर्वमङ्गलं भगवन्तं, जानासीति वा । सात्वतां पतिर्भगवान्, यस्य कार्यविशेषस्य चिकीर्षया वसुदेवस्य सकाशाद्देवक्यां जातः तद्द्वारा प्रकाशितः । यस्यावतारो, भूतानां क्षेमायैहिकामुष्मिकसुखाय विभवाय चाभिवृद्धये च[2] भवति । अङ्ग ! हे वत्स ! तस्य कृष्णस्य, तं कार्यविशेषं चरितापरपर्यायं शुश्रूषमाणानां श्रोतुकामानां नः[3] अस्माकं, अनुवर्णितुं सम्यग्वक्तुमर्हसीत्येकान्वयः ।

सात्वतामिति । सत् ब्रह्म कृष्णाख्यमुपास्यत्वेनैषामस्तीति सत्वन्तः, त एव सात्वन्तः । प्रज्ञादित्वात् स्वार्थे अण् । तस्यादर्शनं छान्दसम् । यद्वा सातिः सौत्रो धातुः सुखार्थः । वाऽसरूपन्याये[4] क्विपि सात्,[5] परमात्मा । स एषामस्तीति सात्वन्तो भक्तास्तेषां पतिः । मरुत्वानितिवत् सात्वानिति प्रातिपदिके सुगमः[6] ॥ यद्वा सात्वतप्रातिपदिके[7] 'तत्करोति तदाचष्ट' इति णिचि कृते, 'क्विप् चे'ति क्विपि च कृते, णिचो लोपे, अतो लोपे च कृते आमि च सात्वतामिति रूपसिद्धिः । सात्वतां पञ्चरात्रोक्तानुष्ठानकारिणाम् । यादवानां वा ॥ १२ ॥ १३ ॥

---

१ योग्यमिति नास्ति - क ख ग घ ङ ज  २ विभवाय चाभिवृद्धये चेति चकारद्वयं कोशान्तरेषु नास्ति ।
३ श्रोतुकामानां नः इति पाठान्तरेषु नास्ति ।  ४ वाऽसरूपोऽस्त्रियामिति सूत्रेणेत्यर्थः । यद्यपि क्विप् सामान्यविहितः । सातेः शप्रत्ययस्तु तदपवादः । तथापि वाऽसरूपविधिना क्विबपि भवतीति भावः ।
५ एतदनन्तरं 'सखा' इत्यधिकः पाठः - क ज ।
६ मरुत्वतामितिवत् सात्वतामिति प्रातिपदिके सुगमः - ग ङ । मरुत्वतामितिवत् सात्वतामितिरूपसिद्धिः - क ज ।
७ प्रातिपदिकात् - क ज ।

आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ।
ततः सद्यो विमुच्येत यं बिभेति स्वयं भवः ॥ १४ ॥

यत्पादसंश्रयाः सूत मुनयः प्रशमायनाः ।
सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुनीवानुसेवया ॥ १५ ॥

को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः ।
शुद्धिकामो न शृणुयाद्यशः कलिमलापहम् ॥ १६ ॥

तस्य कर्माण्युदाराणि परिगीतानि सूरिभिः ।
ब्रूहि नः श्रद्दधानानां लीलया दधतः कलाः ॥ १७ ॥

---

सारत्वात् कृष्णचरितमेवानुवर्णनीयं नान्यत्, यतस्तस्य वासुदेवादिनामोच्चारणादखिलबन्ध-निवृत्तिः, तत्र किं वक्तव्यं तच्चरितश्रवणमननाभ्यामित्याशयवन्त आहुरित्याह– आपन्न इति । भवः संसारः । अहङ्काररूपेण बन्धको रुद्रो वा । यं प्रति बिभेति भयादपसृतो भवति । यन्नाम यस्य नाम । गृणन् उच्चारयन् । विवशः वह्वभ्यासात् । घोरां संसृतिमापन्नः पुरुषः । ततः घोर-संसारात् । सद्यस्तदानीमेव विमुच्येत विशिष्टां मुक्तिमाप्नोति ॥ १४ ॥

किञ्च यत्पादसंश्रयाः यस्य पादावेव संश्रयो येषां ते तथोक्ताः । प्रकृष्टः शमो भगवन्निष्ठैव अयनमाश्रयो येषां ते प्रशमायनाः मुनयः यैः प्राणिभिरुपस्पृष्टास्तान् सद्यः पुनन्ति पवित्रीकुर्वन्ति । यत्पादसंश्रयादिति पाठे यच्चरणनिषेवणादात्मानं पुनन्तीत्यर्थः । तत्र निदर्शनम्– अनुसेवया अनुसेवनेन निषेवणेन उपस्पर्शनस्नानाचमनादिना ॥ स्वर्धुनी गंगा इव यथा लोकं पुनाति तथेत्यन्वयः । स्वर्धुन्याप इति पाठे गङ्गाजलपरमाणवः चिरकालसेवया, मुनयः सद्य इति विशेषः ॥ १५ ॥

पुण्यश्लोकैर्ब्रह्मादिभिः ईड्यं स्तुत्यं कर्म कंसवधादिचरितं यस्य स तथा । पुण्यश्लोकश्लाघ्य-मीड्यकर्मेति वा । तस्य हरेः, कलिमलापहं कलिनिमित्तं मलं पापलक्षणमपहन्तीति । यशः चरि-तापरपर्यायम् । शुद्धिकामः अन्तःकरणनिर्मलतां कामयमानः, को वा पुरुषः न शृणुयादित्येका-न्वयः ॥ १६ ॥

न केवलं कृष्णकथैव वक्तव्या । मत्स्याद्यवतारान्तरकथाऽपीत्याहुरित्याह– तस्य कर्माणीति । लीलया मत्स्यादिकलाः दधतः तस्य हरेः, सूरिभिर्ब्रह्मादिभिः परिगीतानि, उदाराण्यक्लिष्टानि । उद्धतदोषाणि वा । कर्माणि ब्रूहीत्येकान्वयः ॥ १७ ॥

अथाख्याहि हरेर्धीमन्नवतारकथाः शुभाः ।
लीला विदधतः स्वैरमीश्वरस्यात्ममायया ॥ १८ ॥

वयं तु न वितृप्याम उत्तमश्लोकविक्रमैः ।
यच्छृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे ॥ १९ ॥

कृतवान् किल वीर्याणि सह रामेण केशवः ।
अतिमर्त्यानि भगवान् गूढः कपटमानुषः ॥ २० ॥

कलिमागतमाज्ञाय क्षेत्रेऽस्मिन् वैष्णवे वयम् ।
आसीना दीर्घसत्रेण कथायां सक्षणा हरेः ॥ २१ ॥

---

तदेवास्माकं वर्णनीयमित्यभिप्रेत्याहुरित्याह— अथेति । यत एवं प्रच्छद्यमानानामस्माकं कलिमलापहं, अथ तस्मात् आत्ममायया स्वरूपभूतेच्छया स्वैरं यथेष्टं लीलाः प्रलयजलविहारादि-क्रीडाः विदधतः ईश्वरस्य स्वतन्त्रस्य हरेः, शुभाः मङ्गलाः अवतारकथाः, हे धीमन्! अस्माकमा-ख्याहीत्येकान्वयः ॥ १८ ॥

भवतां बहुशः श्रुतहरिकथानां किमित्ययमुत्कण्ठाविशेष इत्यत उच्यते— वयमिति । वयमुत्तम-श्लोकस्य हरेर्विक्रमैः श्रुतैर्न वितृप्यामः । अन्येषां तृप्तिरस्तु वा, नास्माकमलम्बुद्धिरित्येतस्मिन्नर्थे तुशब्दः । यद्विक्रमजातं शृण्वतां रसविवेकविदुषां नः स्वादु स्वाद्वतिमधुरं भवतीत्येकान्वयः । 'रसो रागे विषे वीर्ये तिक्तादौ पारदे द्रवे' इति विशेषज्ञाः रसज्ञाः ॥ १९ ॥

संप्रति कृष्णावतारचरितश्रवण एव उत्कण्ठाविशेष इत्यभिप्रेत्याहुरित्याह—कृतवानिति । स्वम-हिम्ना गूढः कपटमानुषः केशवो भगवान् रामेण सह यानि मर्त्यवीर्यमतिक्रम्य विद्यमानानि वीर्याणि वीरकर्माणि[1] पराक्रमलक्षणानि कृतवान् किल तान्यस्माकं ब्रूहीत्येकान्वयः । मानुषेष्वपि कं सुखं पटति प्राप्नोतीति कपटमानुषः इत्येषोऽर्थोऽपि ग्राह्य इति ॥ २० ॥

दीर्घसत्रे दीक्षितानामस्माकं हरिकथाश्रवणावसरोऽस्तीत्याहुरित्याह—कलिमागतमिति । आगतं प्रविष्टं कलिमाज्ञायास्मिन् वैष्णवे क्षेत्रे दीर्घसत्रेणासीना व्यापारान्तरं विहाय स्थिताः । वयं, हरेः कथायां कथाश्रवणे । सक्षणाः सावसरा इत्येकान्वयः ॥ २१ ॥

---

1 अयं ख पाठः ।

त्वन्नः सन्दर्शितो धात्रा दुस्तरं निस्तितीर्षताम् ।
कलिं सत्वहरं पुंसां कर्णधार इवार्णवम् ॥ २२ ॥

ब्रूहि योगेश्वरे कृष्णे ब्रह्मण्ये धर्मकर्मणि ।
स्वां काष्ठामधुनोपेते धर्मः कं शरणं गतः ॥ २३ ॥

---

पुंसां सत्वगुणहरं, दुस्तरं तर्तुमशक्यं कलिं, निस्तितीर्षतां नितरां तर्तुमिच्छतां नः, हे सूत! त्वं धात्रा दैवेन सन्दर्शितः। क इव ? दुस्तरमर्णवं निस्तितीर्षतां सांयात्रिकाणां[1] कर्णधार इव। कर्णधारः कूपकाग्रस्थायी पुरुषः ॥ २२ ॥

प्रश्नान्तरं कुर्वन्तीत्याह– ब्रूहीति। अधुना, धर्मरूपाणि कर्माणि यस्य सः धर्मकर्मा तस्मिन्। ब्रह्मण्ये ब्राह्मणहितकारिणि। अणिमाद्यष्टयोगेश्वरे। भक्तिज्ञानलक्षणयोगयोः ईश्वरे वा[2]। 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते'' इति वचनात् सच्चिदानन्दलक्षणे कृष्णे, स्वां काष्ठां गुणपूर्णत्वमूलरूपम्। उपेते गतवति सति। पूर्वनिर्दिष्टो धर्मः भक्तिज्ञानलक्षणः, कं पुरुषं शरणं गत इति तं अस्माकं ब्रूहीत्येकान्वयः ॥ २३ ॥

'पुंसामेकान्तत' इति श्रेयःसाधनविषयः, 'ब्रूहि भद्राये'ति प्रत्यगात्मविषयः, 'अर्हस्यङ्गानुवर्णितुमि'ति कृष्णावतारविषयः, 'ब्रूहि नः श्रद्दधानानामि'ति यशोविषयः, 'अथाख्याही'त्यवतारान्तरविषयः, 'ब्रूहि योगेश्वर' इति धर्मविषयः, इति षट् प्रश्नाः ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुविरचितायां[3]
प्रथमस्कन्धे प्रथमोऽध्यायः ॥

---

१ सायन्त्रिकाणां - ग घ ङ छ  २ भक्तिज्ञानयोगेश्वरे वा - क ज।
३ एतदनन्तरं 'पदरत्नावल्यां' इत्यधिकं - क ज।

## अथ द्वितीयोऽध्यायः ।

इति सम्प्रश्नसम्पृष्टो विप्राणां रौमहर्षणिः ।
प्रतिपूज्य वचस्तेषां प्रवक्तुमुपचक्रमे ॥ १ ॥

सूत उवाच —

यं प्रव्रजन्तमनुपेतमपेतकृत्यं
द्वैपायनो विरहकातर आजुहाव ।
पुत्रेति तन्मयतया तरवोऽपि नेदु-
स्तं सर्वभूतहृदयं मुनिमानतोऽस्मि ॥ २ ॥

---

शौनकादिविप्राणां, इति = पूर्वोक्तैः षड्भिः । समीचीनैः प्रश्नैः सम्यक् पृष्टः । रोमहर्षणस्य अपत्यं रौमहर्षणिः सूतः । तेषां शौनकादीनाम् । वचः प्रतिपूज्य प्रवक्तुं व्याख्यातुं उपचक्रम इत्येकान्वयः । एतद्व्यासवचनम् ॥ १ ॥

शौनकादिप्रश्नपरिहारतया भागवतपुराणं व्याकर्तुकामः उग्रश्रवाः[1] सूतः स्वेष्टगुरुं लक्ष्म्यावतारं श्रीशुकमुनिं प्रणमति—यमिति । विरहकातरः पुत्रवियोगकातरः[2] अधीर इव स्थितः । स द्वैपायनो यदा प्रव्रजन्तमनुपेतं यं पुत्रेति आजुहाव तदा तन्मयतया तरवोऽपि नेदुः अहं सर्वभूतहृदयं तं[3] मुनिं सर्वज्ञमानतोऽस्मीत्येकान्वयः ।

द्वीपो नदीमध्यप्रदेशः । स अयनमाश्रयः यस्य सः तथा द्वीपायनः । स एव द्वैपायनः । द्वीपस्यापत्यं द्वैपायनः । नदीद्वीपे समुत्पन्नत्वात्तदपत्यत्वव्यपदेशः[4] औपचारिकः । तद्वत पराशर-सुतत्वमप्यौपचारिकमिति ज्ञापयितुं एतदेव प्रसिद्धनामाकरोत् । प्रव्रजन्तं सर्वपरित्यागरूपाश्रममाश्र-यन्तम् । तत्र कारणमाह— अनुपेतं देहाद्यभिमानशून्यम् । न उपेतः केनापि सख्या, तं[5] एकाकिन-मिति वा । न चोपनयनशून्यः अनुपेतो । अनुपनीतस्य प्रव्रजनायोगात् । न च प्रव्रजनं न सन्न्यासः, किन्तर्हि प्रकर्षेण गमनमेवेति वाच्यम् । 'यदहरेव विरजेत्तदहरेव प्रव्रजेदि'ति गौतमसूत्र-

---

१ उरुश्रवाः - क ग ज, गुरुश्रवाः - घ ङ छ   २ वियोगे कातरः - क घ ङ छ ज ।
३ 'तम्' इति ङ पाठस्थः ।   ४ निर्देशः - क ग घ ङ छ ज   ५ अनुपेतं- केनापि सख्या रहितम् - घ ।

अपेतकृत्यंयं

यः स्वानुभावमखिलश्रुतिसारमेक-
मध्यात्मदीपमतितीर्षतां तमोऽन्धम् ।
संसारिणां करुणयाऽऽह पुराणगुह्यं
तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥ ३ ॥

---

विरोधात् । अपगतं कृत्यं यस्मात्सः अपेतकृत्यः तं कृतकृत्यम् । अपेतं निराकृतं कृत्यं छेदनादिकर्म येन स तथा । अवाप्ताहिंसालक्षणाश्रमत्वात्तमिति वा । पुत्रेति दूरादाह्वाने प्लुताभावश्छांदसः । सर्वगतत्वज्ञापनाय वा । तन्मयतया अहङ्कारात्मकरुद्रावतारशुकस्य व्याप्तिमत्तया वृक्षा अपि प्रतिशब्दं [२]नेदुः, किमुत शरीरिण इति द्योतयितुं 'अपि'शब्दः । सर्वभूतानां हृत्स्थानमयते गच्छतीति सर्वभूत-हृदयः तम् । अहङ्कारतत्वाभिमानित्वेन सर्वत्र स्थितमित्यर्थः ॥ २ ॥

पुनरपि भक्त्युद्रेकात्तमेव प्रणमति— य इति । यः स्वानुभावं अनन्याधीनसामर्थ्यं [३]ब्रह्म माऽऽह[४] उपादिशत्, यश्च अन्धन्तमः अन्धत्वापादकमज्ञानं अतितितीर्षतां[५] तर्तुमिच्छतां संसारिणां जीवानां करुणया अखिलानां श्रुतीनां अर्थज्ञापकतया सारमुत्तमम् । अखिलस्य जगतः श्रुतेः श्रवणेन्द्रियस्य सारं सुखदं वा एकं सकलपुराणोत्तमं देहादीश्वरपर्यन्ततत्वानि दीपयति प्रकाशयतीत्यध्यात्मदीपं पुराणगुह्यं पुराणेषु गोप्यम् । पुराणस्य भगवतः सन्निधातुं योग्यमिति वा भागवताख्यं पुराणं मम व्याचख्यौ, मुनीनां गुरुं तं व्याससूनुं शुकम् । उपयामि शरणं गच्छामीत्येकान्वयः ।

अखिलश्रुतीः सरति गच्छति विषयतयेति आखिलश्रुतिसारः । कर्मण्यण् प्रत्ययः । वेदार्थेषु सारभूतमिति वा । अध्यात्मं देहः तत्र दीपवद्वर्तमानं, पुराणेषु गोपितं स्वानुभावं[६] ममोपदिदेशेति वा ॥ ३ ॥

---

१ अयं न ङ कोशस्थः । २ नेदुः - क ग घ ज छ ङ ३ ज्ञपाठोऽयम् ।

४ ख पाठः । अन्यत्र - ममाऽऽह ।

५ तितीर्षतां - क ग घ ङ । अयं पाठः मूलश्लोकाननुगुणः । तत्र 'अतितितीर्षतां' इति - क ग घ ङ ज । किन्तु छन्दोननुगुणः । अतितीर्षतामिति मूलश्लोकपाठः श्रीधर्या अपि सम्मतः । रेफषकारयोर्विश्लेषणं छान्दसमिति श्रीधर्याह । द्वित्वाभावोऽपि छान्दस इति वक्तव्यम् ।

६ एतदनन्तरं 'ब्रह्म'त्यधिकं - घ ।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो ग्रन्थमुदीरये ॥ ४ ॥

मुनयः साधु पृष्टोऽहं भवद्भिर्लोकमङ्गलम् ।
यत्कृतः कृष्णसंप्रश्नो येनात्माऽऽशु प्रसीदति ॥ ५ ॥

स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे ।
अहैतुक्यव्यवहिता ययात्माऽऽशु प्रसीदति ॥ ६ ॥

---

इष्टदेवताशास्त्रगुर्वादीन् प्रणमति– **नारायणमिति** । नारायणं शास्त्रप्रतिपाद्यम् । तथा तमेव शास्त्रकर्तृत्वाद्गुरुं व्यासञ्च नमस्कृत्य सकलभाग्याभिमानिकां श्रियं देवीं तथा परमगुरुं नरोत्तमं वायुं तथा विद्याभिमानिनीं सरस्वतीं तथा उपसाधकं नरं शेषञ्च प्रणम्य, ततस्तेषां प्रसादात् श्रीभागवताख्यं ग्रन्थमुदीरये व्याख्यास्ये, भवत्प्रश्नपरिहारत्वेनेति शेषः, इत्येकान्वयः । श्रीभागवतादिसर्वशास्त्र-प्रवक्तृश्रोतृभिर्म्तेऽवश्यं नमस्कार्या इति द्योतयितुमेवेत्युक्तिः ॥ ४ ॥

संप्रति सूतः शौनकादिप्रश्नसंहृष्टस्तत्प्रश्नं स्तौतीत्याह– **मुनय इति** । कृष्णविषयः समीचीनः प्रश्नः कृत इति यत् यस्मात् अतोऽहं भवद्भिः साधु सर्वसाधनेभ्यूत्तमं साधनं प्रति पृष्टः । न केवलं उभयेषामस्माकं साधु, किन्तु लोकमङ्गलं, लोकं जनं मङ्गलयतीति श्रवणमननाभ्यां कल्याणजनकत्वा दित्यर्थः । कुतः ? येन कृष्णसंप्रश्नेन आत्मा परमात्मा मनो वा प्रसीदति तस्मादित्येकान्वयः ॥ ५ ॥

भगवद्भक्तिजनकत्वात् कृष्णसंप्रश्न एव परमधर्म इत्याह– **स वा इति** । यतः कृष्णसंप्रश्नात् अधोक्षजे अहैतुकी अव्यवहिता भक्तिर्भवति, पुंसां परो धर्मः स वा इत्येकान्वयः । अक्षजन्यज्ञानमधः कृत्यातीत्य वर्तत इत्यधोक्षजः । भगवत्प्रसादमन्तरेण काम्यफलहेतुशून्या अहैतुकी । विक्षेपादन्य-प्रसङ्गादिव्यवधानशून्याऽव्यवहिता । न च 'अन्योऽसावन्योऽहमस्मी'ति 'नाविष्णुः कीर्तयेद्विष्णुमि'त्यादि श्रुतिस्मृतिनिषिद्धत्वात् भेदबुद्ध्यपरपर्यायव्यवधानशून्येत्यर्थ इति । 'व्यवधानं तिरोधानमपिधान मथोच्यत' इत्यभिधानविरोधात् । न च श्रुतिस्मृतिविरोधः । अनयोरन्यार्थत्वात् । अविष्णुः न विष्णुर्यस्य स तथा, तदभक्त इत्यर्थः । अन्यः स्वतन्त्रः । अप्रतिहतेति पाठेऽस्खलितेत्यर्थः । यया भक्त्या आत्मा आशु प्रसीदति । समुद्गृह्य मनीषयेत्युक्तं दर्शयति– **स इति** । स एव परो धर्मः यतो धर्मात् अधोक्षजे भक्तिर्भवतीति वा ॥ ६ ॥

---

१ चकारो नास्ति - क ख ङ छ ज । २ अंतद्भक्त - क ख ङ ज झ ।

वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानञ्च यदहैतुकम् ॥ ७ ॥
धर्मः स्वनुष्ठितः पुंसां विश्वक्सेनकथाश्रयाम् ।
नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥ ८ ॥
धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायेह कल्पते ।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ॥ ९ ॥

---

भक्तिरपि वैराग्यद्वारेण अपरोक्षज्ञानसाधनमित्याह- वासुदेव इति । वासुदेवे भगवति प्रयोजितः भक्तियोगः वैराग्यं यदहैतुकं ज्ञानं तच्च जनयतीत्येकान्वयः । वसति सर्वत्र,स्वस्मिन् सर्वं वासयतीति वासुः । देवनात् क्रीडादिकरणात् देवः । वासुश्चासौ देवश्चेति वासुदेवः । तस्मिन् भक्तिलक्षण उपायः भक्तियोगः । वैराग्यं विषयेष्वसारताबुद्धिम् । अकारवाच्यविष्णुप्रसाद एव हेतुर्निमित्तं यस्य तत्तथोक्तम् । द्रव्यलाभादिहेतुसंबन्धीन्द्रजालादिज्ञानं न भवतीति वा ॥ ७ ॥

ननु नित्यनैमित्तिकादिधर्माणां सत्वात् कथमस्यैव परमत्वमित्याशङ्क्य तेषामपि कृष्णकथा-रतिजनकतया तत्साधनत्वेन परमत्वमित्याह- धर्म इति ।

यः पुरुषैः स्वनुष्ठितो धर्मः विष्वक्सेनकथाश्रयां रतिं यदि नोत्पादयेत्तर्हि पुंसां सः केवलं श्रम एव हीत्येकान्वयः । शास्त्रोक्तसदाचारद्रव्यदेशकालादिमत्त्वया[1] सुष्ठु अनुष्ठितः स्वधर्मः । यन्नाम्नि कीर्तिते विष्वक् सर्वतः अञ्चति दैत्यसेनामिति विष्वक्सेनः, तस्य कथासु रतिं निरन्तराभ्यासरूपाम् । केवलं श्रम एव क्रियाकाले उत्तरकालेऽपि दुःखरूपत्वात् आयास एवेत्यर्थः । हिशब्देन 'अनेवं-वित् महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत' इति श्रुतिप्रसिद्धिं दर्शयति ॥ ८ ॥

ननु धर्मस्य भगवत्कथारत्यजनकत्वे कथं श्रमैकफलत्वम्? धर्मादर्थः अर्थात्कामः कामात्सुखं इत्यर्थशास्त्रादौ प्रसिद्धेरिति तत्राह—धर्मस्येति ।

अपवर्गो मोक्षः तत्साधनमापवर्ग्यं, तस्य धर्मस्य इहार्थः काञ्चनादिद्रव्यं अर्थाय फलाय न कल्पते हि यस्मात् तस्माद्धरिकथारतिजनकत्वमेव फलमित्यर्थः । धर्म एवैकान्तं[2] नियमेन फलं यस्य स धर्मैकान्तः, तस्य धर्मसाधनस्यार्थस्य कामो लाभाय प्रयोजनाय न स्मृतः । विद्वद्भिरिति शेषः । अत्रापि हिशब्दो हेतौ ॥ ९ ॥

---

१ देशकालादिनियततया - क ज । देशकालानियुक्ततया - घ ।
२ एवेति इकोशस्थः ।

कामस्य नेन्द्रियप्रीतिर्लाभो जीवति यावता ।
जीवस्यातत्वजिज्ञासोनार्थो यश्चेह कर्मभिः ॥ १० ॥

वदन्ति तत्तत्वविदस्तत्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते । ११ ॥

सत्तामात्रं तु यत्किञ्चित्सदसच्चाविशेषणम् ।
उभाभ्यां भाष्यते साक्षाद्भगवान् केवलः स्मृतः ॥ १२ ॥

---

कामस्य इन्द्रियप्रीतिर्लाभो न भवति । तर्हि अशनाच्छादनाद्यभावेन[1] क्षुधादिना मरणमेव स्यात् इति चेत्तत्राह– जीवतीति । यावता अर्थादिना जीवति शरीरयात्रानिर्वाहको[2] भवति, तावानेव विषयभोगरूपः संपादनीय इति शेषः । तस्मादर्थशास्त्रादौ प्रतिपादितकामो[3] बहिर्मुखानामिति भावः । ब्रह्मार्पणबुद्ध्या कृतस्य[4] कर्मणः भगवत्कथारतिसाधनत्वमित्याह– जीवस्येति । इह कर्मभिः योऽर्थः सोऽतत्वजिज्ञासोर्जीवस्य न भवति । भगवत्तत्वमजानतः पुरुषस्य तदनर्पणबुद्ध्या कृतैः कर्मभिः फलं ऐहिकामुष्मिकं न स्यादिति भावः ॥ १० ॥

ननु अतत्वजिज्ञासोरित्युक्तम् । किन्तत्तत्वम् । येन तदज्ञस्य कर्मभिः पुरुषार्थो न स्यादिति तत्राह–वदन्तीति । यत् अद्वयं असमाधिकं. ज्ञानं ज्ञानस्वरूपं, देशकालादिषु बृंहितत्वात् सर्वान्तर्यामित्वात् ऐश्वर्यादिगुणित्वात् ब्रह्मेति, परमात्मेति, भगवानिति शब्द्यते । यच्च सत्तामात्रं– केवलानंददेहं अत एव यत् किंचित् लोकविलक्षणं तत् तत्वविदः तत्वं वदन्ति त्रिकालेप्यनन्यथाभूतमेकविधं ब्रुवते । न ब्रह्मणो ज्ञानस्वरूपत्वं युक्तिमत्, लोके ज्ञानस्य विषयापेक्षयोत्पत्तिविनाशदर्शनात् अस्यापि तथात्वेन अनित्यत्वप्रसङ्गादिति तत्राह– सदसदिति । सत् कार्यं असत् कारणं च अविशेषणं न स्वनियतविशेषापादकम् । यस्येति शेषः । विषयापेक्षया अनुत्पाद्यमपि उभाभ्यां सदसद्भ्यां भाष्यते मृत्स्रष्टृघटस्रष्टृमृज्ज्ञातृघटज्ञात्रित्याद्यनन्तकार्यकारणविशिष्टतया व्यवह्रियते । अतो भगवान् साक्षात्केवलः प्रकृतिसम्बन्धविधुरः स्मृतः ॥

---

१ अशनाच्छादनाद्यभावे - क घ ङ ज । अनशनादिना मरणमेव स्यात् - छ ।
मरणमेव स्यात्तत्राह - क ।

२ निर्वर्तको - ख ३ प्रतिपादितक्रमः - क ख ग घ ङ ।

४ अकृतस्य कर्मणः न भगवत् - घ अकृतस्य कर्मणः अभगवन् - क ज ।

तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया ।
पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतिगृहीतया ॥ १३ ॥
अतः पुम्भिर्द्विजश्रेष्ठाः वर्णाश्रमविभागशः ।
स्वनुष्ठितस्य धर्मस्य संसिद्धिर्हरितोषणम् ॥ १४ ॥
तस्मादेकेन मनसा भगवान्सात्वतां पतिः ।
श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥ १५ ॥

---

'यद्विषयज्ञानं भक्तियोगो[1] जनयेत् तद् ब्रह्म किं प्रमाणगोचरः उत अगोचरः ? गोचरश्चेत् घटादिवदब्रह्मत्वं, अगोचरश्चेन्नास्त्येवेत्याशङ्क्योभयदोषपरिहारायाह– वदन्तीति । न वयं प्रमाणैः अनुमिमीमहे । न चैतावता नास्ति, किन्तर्हि यद् ज्ञानमद्वयं ज्ञातृज्ञेयलक्षणरहितं तत्वविदस्तत्त्वं जगदाकारेण विवर्तत इति वदन्ति तदेव वेदान्तिभिः[2] ब्रह्मेति परमात्मेति भगवानिति शब्द्यते तत्रायं विभागः । बृहत्त्वात् ब्रह्मेति वेदान्तिनः, परं केवलं आदानादिकर्तृत्वात् आत्मेति योगिनः षड्गुणयुक्तत्वात् भगवानिति पौराणिकाः । तत्र किं तत्सत्यं इति तत्राह–सत्येति । तस्मादत्र सगुणं प्रमाणत्रेयं न निर्गुणमिति शास्त्रमथितार्थ' इति केचिद् व्याचक्षते तदसारं, अत्रैव पूर्वापरवाक्यार्थ-पर्यालोचनया स्वविरोधात् ॥ ११ ॥ १२ ॥

तदाह–तदिति । एवमुक्तप्रकारेण ब्रह्म परमात्माद्यनन्तवैदिकादिपदवाच्यतया सगुणः सर्वज्ञः सर्वजगत्कर्ता परमात्मैव तत्वमिति यत् यस्मात् तत् तस्मान्मुनयो ज्ञानिनः श्रद्दधानाः शास्त्रोक्तवस्तुनि आस्तिक्यबुद्धियुक्ताः, श्रुतिगृहीतया वेदान्तशास्त्रश्रवणेन दृढगृहीतया तत्वज्ञानेन विषयवैराग्येण च युक्तया भक्त्या तमेवात्मानं परमात्मानं आत्मनि हृदि पश्यन्ति । चकारस्तु 'आत्मन्येवात्मानं पश्येत्' इति श्रुतिप्रसिद्धिद्योतकः । न तु आत्मनि क्षेत्रज्ञे जीवे आत्मानं परमात्मानं पश्यन्ति, परमात्मानि क्षेत्रज्ञञ्चेति समुच्चयार्थः । तस्माज्जगदाकारेण विवर्तितं तत्वमन्यन्निर्गुणमन्यत्तत्वमिति नार्थः ॥ १३ ॥

उपसंहरति – अत इति । हे द्विजश्रेष्ठाः, संसिद्धिः फलम् ॥ १४ ॥

कृष्णसंप्रश्नस्य परमधर्मत्वं निगमयति – तस्मादिति । यतः कृष्णसम्प्रश्नस्यैव परमधर्मत्वं तस्माद्धेतोः एकेन एकाग्रेण । चकारौ परस्परसमुच्चयार्थौ । श्रवणादि तत्तत्काले कर्तव्यं न क्वचित् कालो वृथा यापनीय इत्यस्मिन्नर्थे नित्यदाशब्दः ॥ १५ ॥

---

१ अयं ख छ कोशस्थः । कोशान्तरेषु भक्तियोगमिति ।
२ अयं क ज पाठः । अन्यत्र वेदान्तैरिति ।

यदनुध्यायिनो युक्ताः कर्मग्रन्थिनिबन्धनम् ।
छिन्दन्ति कोविदास्तस्य को न कुर्यात्कथारतिम् ॥ १६ ॥
शुश्रूषोः श्रद्दधानस्य वासुदेवकथारतिः ।
स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात् ॥ १७ ॥
शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्तनः ।
हृद्यन्तस्थो ह्यभद्राणि विधुनोति सुहृत् सताम् ॥ १८ ॥
नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया ।
भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी ॥ १९ ॥
तदा रजस्तमोभावाः कामलोभादयश्च ये ।
चेत एतैरनाविद्धं स्थितं सत्वे प्रसीदति ॥ २० ॥

---

फलदर्शनं पुरोधाय प्रवृत्तिदर्शनात् श्रवणादिना किं फलमिति तत्राह – यदिति ।

यं भगवन्तं अनुसवनं निरन्तरं ध्यातुं शीलमेषामिति यदनुध्यायिनः । युक्ताः मनोयोगयुक्ताः । कर्मग्रन्थ्या कर्मपाशेन यत् नितरां बन्धनं तत् छिन्दन्ति । तस्य कथासु रतिं को न कुर्यात् ? अत्र श्रवणादिफलमपरोक्षज्ञानद्वारा मुक्तिरेव ॥ १६ ॥

हरिकथारतिः केन स्यादिति तत्राह– शुश्रूषोरिति । हे विप्राः! शुश्रूषोः गुर्वादिपरिचर्याशीलस्य वेदादिषु श्रद्दधानस्य महतां सेवया पुण्यतीर्थानां भागवतादिसच्छास्त्राणां, गङ्गादितीर्थानां च नितरां सेवनाच्च वासुदेवकथारतिः स्यादित्येकान्वयः ॥ १७ ॥

श्रवणफलमाह– शृण्वतामिति । सुहृत् अनिमित्तबन्धुः । पुण्ये श्रवणकीर्तने यस्य स तथा ॥ १८ ॥

सर्वामङ्गलनाशफलमाह– नष्टेति । लिङ्गशरीरभङ्गपर्यंतमभद्राणां संभवात् प्रायेष्वित्युक्तम् । नैष्ठिकी अचला । उत्तमः उद्गतदोषः श्लोकः कीर्तिः यस्य सः तथोक्तः तस्मिन् ॥ १९ ॥

भक्तिफलमाह– तदेति । यदा हरावचला भक्तिः तदा ये रजआदयः भावाः एतैः अनाविद्धं असंसक्तम् । शुद्धसत्वे स्थितं, बलज्ञानसमाहारवति हरौ स्थितं वा । चेतः प्रसीदति सकलदोषविधुरतया निरन्तरं परमात्मानं स्मरतीत्यर्थः । रजस्तमोभ्यां भाव उत्पत्तिर्येषां ते तथोक्ताः कामलोभादयः । चकारात्प्रमादादय इति वा ॥ २० ॥

---

१ क ब कोशयोरप्ययमेव पाठः । वल्लभाचार्यवीरराघवयोरपि सम्मतः ।
संत्कथां - ग । सत्कथाः - छ । तत्कथाः - ङ । स्वकथाः - मूलकोशः ।

एवं प्रसन्नमनसो भगवद्भक्तियोगतः ।
भगवत्तत्वविज्ञानं मुक्तसङ्गस्य जायते ॥ २१ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे ॥ २२ ॥
अतो वै कवयो नित्यं भक्तिं परमया मुदा ।
वासुदेवे भगवति कुर्वन्त्यात्मप्रसादनीम् ॥ २३ ॥

---

निरन्तरहरिस्मरणफलमाह— **एवमिति** । भगवत्तत्वविज्ञानं स्वबिंबापरोक्षज्ञानम् ॥ २१ ॥

अपरोक्षज्ञानफलमाह— **भिद्यत इति** । आत्मनि हृत्कमलकर्णिकामध्ये स्वबिम्बे सर्वेश्वरे दृष्टे सत्येव तस्मिन् क्षण एव हृदयग्रन्थ्याख्यलिङ्गं मनो भिद्यते । तस्मिन् भिन्ने सति ईश्वरादि-तत्वविषयाः सर्वसंशयाः छिद्यन्ते । तेषु छिन्नेषु सत्सु अन्यं[1] पूर्वकृतपापकर्माणि च क्षीयन्ते, उत्तराणि न श्लिष्यन्त इत्येकान्वयः । संसारच्छेद एव अपरोक्षज्ञानफलमिति भावः ॥

आत्मनि जीवे ईश्वरे ब्रह्मणि दृष्टे ब्रह्मणि जीवे दृष्टे चेति परस्परभेदनिरासेनाहमेव ब्रह्मेत्येवं दृष्टे व्यतिहारन्यायेन हृदयग्रन्थिरहङ्कारः भिद्यत इति केचित् । तदयुक्तं श्रुतिस्मृतिविरोधात् । 'सत्य आत्मा सत्यो जीवः' 'द्वा सुपर्णा' 'विद्याऽऽत्मनि भिदाबोधः' भेददृष्ट्याभिमानेनेति भागवते[2] एव अद्वैतज्ञाननिषेधाच्च ॥ २२ ॥

निगमयति— **अत इति** । अतः निःशेषदुःखनिवृत्त्यलम्बुद्धिगोचरसुखानुभवलक्षणमोक्षाख्य-पुरुषार्थलाभाद्धि कवयः परमया मुदा आत्मप्रसादनीं[3] भक्तिं वासुदेवे भगवति कुर्वन्तीत्येकान्वयः । आत्मप्रसादनीं मनसो नैर्मल्यापादनीं विष्णुप्रसादजननीं वा । मुक्तामुक्ताश्चेत्युभयेऽपि[4] हरौ भक्तिं कुर्वन्तीत्येतस्मिन्नर्थे वैशब्दः ॥ २३ ॥

---

१ अस्येति ख कोशस्थः पाठः । अन्यत्र नास्ति ।

२ भागवतज्ञानादद्वैतज्ञान - क ग घ ज । भेदज्ञानादद्वैतज्ञान - ङ ।

३ प्रसादिनीं - ग घ ङ च ज ४ मुक्ता अमुक्ताश्चेति भाव्यमिति भाति ।

सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तै-
र्युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादये हरिविरिञ्चिहरेति सञ्ज्ञाः
श्रेयांसि तत्र खलु सत्त्वतनौ नृणां स्युः ॥ २४ ॥

---

उक्तश्रवणभक्त्यादिलभ्यमुक्तौ कोऽधिकारीत्याशङ्क्य सात्विकप्रकृतिरेव तत्राधिकारीति वक्तुं सत्त्वादिगुणान् तदाश्रयांश्चाह— सत्त्वमिति । सत्त्वं रजस्तम इति एते त्रयः गुणाः जडप्रकृतेः स्वरूपभूताः चित्प्रकृत्यभिमताः हरेः जगदुत्पत्तौ उपादानभूताः । तैः गुणैः स्वयं अगुणः सन्नपि तत्प्रवर्तकतया युक्तः परः पुरुषोऽस्य जगतः स्थित्यादये पालनसृष्टिसंहारान्कर्तुं हरिविरिञ्चिहरेति संज्ञाः नामानि एक एव धत्ते । विष्णुर्ब्रह्मा शिव इति संज्ञावत्त्वेनावतरति । तत्र सत्त्वगुणसंबन्धविधुरोऽपि सत्त्वगुणप्रवर्तनेन जगत्पालयन् विष्णुसंज्ञो हरिरनन्याविष्टिततया पृथगेव स्थितः । चतुर्मुखस्थो ब्रह्माख्यो विष्णुः स्वयमरजा अपि रजोगुणमुपादानीकृत्य जगत्सृजन्नास्ते । शिवाख्यो विष्णुः स्वयमतमा अपि तमोगुणप्रवर्तकतया जगत् संहरन् शिवे तिष्ठति । तत्सन्निधानविशेषादेव कमलासनवृषासनयोर्ब्रह्मशिवनामवत्त्वम् । तस्माद्धरेरेव त्रिसंज्ञाः, न तु लोकप्रसिद्धहरिविरिञ्चिहराणां स्वरूपभेदनिरासेन संज्ञाः । तथात्वे 'ब्रह्मविष्ण्वीशरूपाणि त्रीणि विष्णोर्महात्मनः । ब्रह्मणि ब्रह्मरूपः सन् ..' इत्यादिवामनपुराणविरोधात् । एवं त्रयोऽपि[2] गुणा विष्ण्वाश्रयाः; तथापि सात्त्विकराजसतामसशरीरिणां नृणां मध्ये सत्त्वतनौ सात्त्विकशरीरिणि देवप्रकृतौ जीवराशावेव श्रवणभक्त्यादिश्रेयांसि स्युः । न राजसतामसशरीरिषु मिश्रमनुष्येषु असुरेषु च इत्येकान्वयः ।

'सत्त्वतनोर्विष्णोः कैवल्यं भवतीति दर्शयितुं मूर्तित्रयस्वरूपमाह— सत्त्वमिति । सत्त्वादयः प्रकृतेः मायायाः गुणास्तैर्युक्त एकः परः पुरुषः हर्यादित्रिसंज्ञा धत्ते । किमर्थं ? जगतः स्थितिसृष्टिभङ्गार्थम् । तत्र तेषां त्रयाणां मध्ये । 'सत्त्वगुणः तनुः शरीरं यस्य स सत्त्वतनुः, तस्माद्विष्णोः श्रेयांसि स्युरि'ति वार्णी न युक्ता, 'केवलो निर्गुणश्च' इति श्रुतिव्याकोपात् । न चास्याः सर्वगुणराहित्यमर्थः । 'सत्यं ज्ञानमनन्तं ब्रह्म' 'गुणाः सर्वेऽपि वेत्तव्या ध्यातव्याश्च न संशयः' 'आनन्दादयः प्रधानस्य इति श्रुतिस्मृतिसूत्रैर्ज्ञानादिगुणविधानात् । अत्रापि 'साक्षी चेता केवल' इत्यादिसाक्षित्वादिगुणप्रतीतेश्च । तस्मात् सत्त्वादिगुणराहित्यमेवास्य अर्थ इति सन्तोष्टव्यम् । किञ्च हरिविरिञ्चिहरा

---

१ हरिब्रह्मशिवभेद - क ग घ ङ छ ज   २ त एव त्रयोऽपि - ख ।

पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः।
तमसस्तु रजस्तस्मात्सत्त्वं यद् ब्रह्मदर्शनम् ॥ २५ ॥

भेजिरे मुनयोऽथाग्रे भगवन्तमधोक्षजम्
सत्त्वं विशुद्धं क्षेमाय कल्पते नेतराविह ॥ २६ ॥

---

इत्युक्तिं विहाय हरेरुक्तेः प्रमाणसिद्धः कश्चिदर्थविशेषोऽस्तीति विज्ञायते। स च सकलसुरवरपुरट-मकुटपटलकोटितटपरिघट्टितचरणकमलपरागैः श्रीमद्बादरायणान्तेवासिप्रवरैः श्रीमदानन्दतीर्थभगवत्पादाचार्यैर्दर्शित इति नास्माभिरत्र प्रयतितव्यम् ॥ २४ ॥

ननु त्रयाणां गुणानां प्राकृतत्वाविशेषेण कथं सत्वस्यैव श्रेयःप्राप्तिहेतुत्वमित्याशंक्य सात्विकानामेवोत्तमत्वेन ब्रह्मविद्याधिकारित्वप्रतिपादनाय गुणत्रितये सत्वगुणस्य उत्तमत्वं सोदाहरणमाह - **पार्थिवादिति।**

अत्र उत्तम इति पदमध्याहृत्य व्याख्येयम्। पार्थिवात् पृथिवीकार्यात्। दारुणः वृक्षात्। पार्थिवो धूम उत्तमः, लोकोपकारकमेघरूपत्वात। तस्मात् धूमात् पार्थिवोऽग्निरुत्तमः। कीदृशः? त्रय्या मीयते प्रतिपाद्यत इति त्रयीमयः, सकलपदार्थप्रकाशकः। अत्र यथा वृक्षधूमाग्नीनां पार्थिवत्वाविशेषेऽप्यग्निराधानेन संस्कृतो विशिष्टपुरुषार्थसिद्धये याज्ञिकैरुत्तमत्वेन पूज्यते, तथा प्राकृतात् तमसस्तमोगुणाद्रजोगुण उत्तमः, तस्मात् सत्वं परब्रह्मादिसकलदेवतातत्वप्रकाशकः सत्वगुण उत्तमः। यद्यस्मात् सत्वगुणाद्ब्रह्मदर्शनं ब्रह्मज्ञानं, भवतीति शेषः। यत्सत्वं ब्रह्म दर्शयति अपरोक्षयतीति वा। तस्मात् सात्विका एव ब्रह्मज्ञानाधिकारिण इति सिद्धम्। अनेन चेतनानामपवर्गनरकतमःप्राप्तियोग्यानां त्रैविध्यं सूचितम् ॥ २५ ॥

उक्तार्थे शिष्टाचारं दर्शयति– **भेजिर इति।** अथ तस्मात् सात्विकानां उत्तमाधिकारित्वात्। अग्रे पूर्वम्। मुनयो ज्ञानिनो ब्रह्मादयः। अधोक्षजं भेजिरे। तस्मादिह गुणेषु विशुद्धं सत्वं क्षेमाय मोक्षाय कल्पते[1] नेतरौ-तमोरजोगुणौ मुक्तये न कल्पेते इत्येकान्वयः ॥ २६ ॥

---

१ कल्प्यते - ख ङ।

मुमुक्षवो घोरमूढान् हित्वा भूतपतीनथ ।
नारायणकलाः शान्ता भजन्ति ह्यनसूयवः ॥ २७ ॥
रजस्तमःप्रकृतयः समशीलान् भजन्ति वै ।
पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः ॥ २८ ॥
वासुदेवपरा वेदा वासुदेवपरा मखाः ।
वासुदेवपरा योगा वासुदेपराः क्रियाः ॥ २९ ॥

---

इदानीमपि सदाचारं दर्शयति[3]– मुमुक्षव इति । ब्रह्मादिपरमसात्विका वासुदेवं भेजिर इति यतोऽथ तस्मात्, असूयादिदोषरहिता दुस्तरसंसारात् मुमुक्षवो वर्तमानभविष्यत्सात्विका अपि घोरमूढान् राजसतामसान् भूतपतीन् रुद्रादीन् हित्वा शान्ताः परिपूर्णसुखात्मिकाः वासुदेवकलाः भगवन्मूर्तीः संप्रति भजन्ति भजिष्यन्ति हि=च इत्येकान्वयः ॥ २७ ॥

इदानीं प्रसङ्गात्तामसराजससेव्यानाह– रज इति । श्रियैश्वर्यप्रजेप्सवः रजस्तमःप्रकृतयः पुरुषाः समशीलान् पितृभूतप्रजेशादीन् भजन्ति वा इत्येकान्वयः[4] । 'निर्दोषं हि समं ब्रह्म' इति वचनात्[5] समं ब्रह्म तच्छीलान्, यस्यैवकस्य यच्छीलं सेव्यस्यापि तच्छीलमस्तीति वा समशीलान् । श्रीकामाः[6] प्रजेशान् ऐश्वर्यकामाः भूतपतीन् प्रजाकामाः पितृीशान्[7] श्रियं च ऐश्वर्यं च प्रजाश्च प्राप्तुमिच्छन्तः श्रियैश्वर्यप्रजेप्सवः ॥ २८ ॥

सकलशास्त्रतात्पर्य[9]पर्यालोचनया सकलैरवश्यं सेव्यः श्रीनारायण एवेत्यभिप्रेत्याह– वासुदेवपरा इति । अत्र वेदा वासुदेवपरा इत्यादि प्रतिपदं[10]मन्वेतव्यम् । वासुदेवगुणोत्कर्षप्रतिपादनतात्पर्यवन्तः ।

---

१ अयं ख छ ज ङ पाठः । अन्यत्र-घोररूपान् । राजसतामसानितिटीकानुगुण्याय घोरमूढानित्येव स्यात् ।

२ टीकानुगुण्याय यादुपत्यानुगुण्याय च वासुदेवकलेति पाठेन भाव्यमिति भाति ।

३ एतदनन्तरं 'मोक्षार्थं भगवत एव भजनीयत्वे शिष्टाचारं प्रमाणयति मुमुक्षव इति । हि यस्माद् भजन्ति तस्माद् वासुदेव एव भजनीय इति शेषः' इति कुण्डलान्तर्गतः पाठः चकोशे, यादुपत्यादुद्धृतः स्या

४ अयं ख ङ पाठः । भजन्तीत्येकान्वयः - क ग ङ ज झ । ५ वचनादीत नास्ति - ग घ ङ ज ।

६ श्रीकामः ऐश्वर्यकामः इत्यादिएकवचनान्तः पाठः - ग घ ङ । ७ अयं ख ङ पाठः । अन्यत्र - पितृनिति ।

८ श्रिया सहैश्वर्यं प्रजाश्चेप्सन्तीति श्रीधरादिव्याख्यानम् । यादुपत्येऽपि तथा । 'इयङादेशे श्रियमैश्वर्यं च प्रजाश्चेति वा' इत्यपि व्याख्यानान्तरं यादुपत्ये । इदं टीकानुगुणम् । श्र्यैश्वर्येति वक्तव्ये श्रियैश्वर्येति क्षेप्रसंयोग विश्लेषः वैदिकव्याकरणसिद्ध इति बन्नञ्जे गोविन्दाचार्याः ।

९ तात्पर्येति नास्ति- ख ग । १० पद- ख ग ङ ।

वासुदेवपरं ज्ञानं वासुदेवपरं तपः ।
वासुदेवपरो धर्मो वासुदेवपरा गतिः ॥ ३० ॥

स एवेदं ससर्जाग्रे भगवानात्ममायया ।
सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः ॥ ३१ ॥

तया विलसितेष्वेषु गुणेषु गुणवानिव ।
अन्तःप्रविष्ट आभाति विज्ञानेन विजृम्भितः ॥ ३२ ॥

यथा व्यवहितो वह्निर्दारुष्वेकः स्वयोनिषु ।
नानेव भाति विश्वात्मा भूतेषु च तथा पुमान् ॥ ३३ ॥

---

मखाः संसारमदं खनन्ति नाशयन्तीति मखाः अग्निष्टोमादयः, वासुदेवोद्देश्याः नान्योद्देश्याः । योगा अष्टाङ्गाः वासुदेवविषयाः । श्रुतिस्मृतिविहिताः सन्ध्योपासनादिकाः क्रियाः ॥ ज्ञानं औपनिषदं, तपः कृच्छ्रचान्द्रायणादिकायक्लेशः । धर्मो दानादिः । गम्यत इति गतिः फलं परलोकः । अनेन हरेरखिलऋग्वेदादिशास्त्रमुख्यविषयत्वेन सर्वोत्तमत्वं उक्तम् ॥ २९ ॥ ३० ॥

अत्र हेतुमाह— स एव इति । यः सर्ववेदान्तादिमुख्यविषयः परमसात्विकब्रह्मादीष्टदेवता वासुदेवः सोऽसावेवागुणः सत्वादिगुणविधुरः, मुख्यकारणं वा । विभुः व्याप्तः भगवान् नारायणः, अग्रे सृष्टेः पूर्वं, आत्ममायया स्वेच्छया निमित्तकारणरूपया, सदसद्रूपया व्यक्ताव्यक्तरूपया, गुणमय्या सत्वादिगुणात्मिकया जडप्रकृत्योपादानकारणरूपया चेदं जगत् ससर्जेत्येकान्वयः । अतो विष्णुरेव सत्यजगत्स्रष्टृत्वात् सर्वोत्तम इत्यर्थः ॥ ३१ ॥

नियन्तृत्वमपि तदेकनिष्ठमित्याह— तयेति । स हरिः तया सदसद्रूपया विलसितेषु भूतभौतिकदेहेन्द्रियाद्यात्मना परिणतेष्वेषु गुणेषु अन्तःप्रविष्टो गुणवान् जीव इव आभाति । अज्ञानामिति शेषः । कुतः ? विज्ञानेन विजृम्भितः विज्ञानपूर्णः । इदं हेतुगर्भविशेषणम् । नानाकर्मविपाकिनां जीवानां विज्ञानाभावादस्य तत्पूर्णत्वात्[1], तेन नियम्यत्वं तेषामिति भावः ॥ ३२ ॥

न च स्थानभेदादद्वयस्य हरेर्भेदाशङ्का कार्येत्याह— यथेति । यथैको वह्निः स्वयोनिषु स्वस्य व्यक्तिस्थानेषु दारुषु व्यवहितः भूतानामदृश्यतया स्थितः नानेव भाति । मथनादिनेति शेषः । दारूणां आनन्त्यात्, तथैको विश्वात्मा विश्वव्याप्तः पुमान् भूतेषु प्रविष्टो नानेव भाति । न तु नाना ।

---

१ अस्य च विज्ञानपरिपूर्णत्वात् - घ अस्य परिपूर्णत्वात् - क ग ङ ज ।

असौ गुणमयैर्भावैर्भूतसूक्ष्मेन्द्रियात्मभिः ।
स्वनिर्मितेषु निर्विष्टो भुंक्ते भूतेषु तद्गुणान् ॥ ३४ ॥
भावयन्नेष सत्वेन लोकान् वै लोकभावनः ।
लीलावतारानुगतस्तिर्यङ्नरसुरादिषु ॥ ३५ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे द्वितीयोऽध्यायः ॥

---

'नेह नानाऽस्ति किञ्चन' इति श्रुतेः । अग्नेः किञ्चिद् विशेषसंभवेऽपि नास्य कश्चिद्विशेष इति च-शब्दार्थः ॥ ३३ ॥

न च दुर्भगशरीरेषु प्रविष्टस्य जीववत् दुःखभोगः सम्भाव्यते[1] इत्याह– असाविति । असौ परमात्मा गुणमयैः सत्वादिगुणविकारैः भूतसूक्ष्मेन्द्रियात्मभिः पञ्चमहाभूत–पञ्चतन्मात्रा–दशेन्द्रिय-मनोभिर्भावैः तत्वैरुपादानरूपैः, स्वनिर्मितेषु स्वेन तत्वेषु प्रविष्टेन विरचितेषु भूतेषु, शरीरेषु निर्विष्टः योगैश्वर्यादसङ्गतया प्रविष्टस्तद्गुणानन्दादीनेव भुंक्ते, नतु दोषनिमित्तदुःखादीन् । तस्मात् दुर्भग-शरीरस्थत्वेऽपि न दुःखादिभोगस्तस्य, स्वातन्त्र्यादित्यर्थः ॥ ३४ ॥

उत्तराध्याये 'अथाख्याहि' इति प्रश्नं परिहरिष्यन् तदर्थं संक्षेपतो दर्शयति– भावयन्निति ॥ लोकभावनः जगदुत्पादकः । सत्वेन गुणेन इतरगुणावभिभूय[2] लोकान् भावयन् पालनेन वर्धयन् एष परमपुरुषस्तिर्यङ्नरसुरादिषु तिर्यक्षु वराहादिजातिषु नरेषु मनुष्येषु सुरेषु देवेषु आदि-शब्दात् स्तम्भादिषु लीलावतारानुगतो, भवतीति शेषेणान्वयः । लीलयैवावतारान् अनुगच्छति नतु पूर्व-कर्मणा । यो योऽवतारो जगदवनादावनुकूलः स्याच्च तमवतारं गृह्णातीत्यस्मिन्नर्थे अनुशब्दः ॥ ३५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुविरचितायां
प्रथमस्कन्धे द्वितीयोऽध्यायः ॥

---

१ संभावितः-ङ ।
२ गुणानभिभूय - क ग घ ज ।

## अथ तृतीयोऽध्यायः

सूत उवाच-—

जगृहे पौरुषं रूपं भगवान् महदादिभिः ।
सम्भूतं षोडशकलमादौ लोकसिसृक्षया ॥ १ ॥
यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः ।
नाभिह्रदाम्बुजादासीद्ब्रह्मा विश्वसृजां पतिः ॥ २ ॥

---

भावयन्नेष सत्त्वेनेति द्वितीयाध्यायान्ते सूचितानवतारान् कथयितुं प्रथमतः परमपुरुषाख्य-भगवदभिव्यक्तिप्रकारमाह — जगृहे इति । भगवानादौ लोकसिसृक्षया महदादिभिः सम्भूतं षोडशकलं पौरुषं रूपं जगृहे इत्येकान्वयः । प्रलयकालीनस्वगूहकतमःपानेन परमपुरुषाख्यं निजं रूपं आविष्चक्रे तत्तु विराड्रूपम् । महदादिभिः प्रलयकाले स्वोदरनिविष्टैर्महदहंकारादिसप्तप्रकृतिविकृतिभिः शरीरस्थानीयाभिः सम्भूतं सहितम् । 'कलाश्च पञ्चभूतानि ज्ञानकर्मेन्द्रियाणि च । पञ्च पञ्च मनश्चेति षोडशोक्ता महर्षिभिरि'ति, षोडशकला अन्तर्गता यस्मिन्निति तत् षोडशकलम् । 'यस्मिन्नेताः षोडशकलाः प्रभवन्ति' इति श्रुतेः प्राणादिषोडशकलासहितं वा । सिसृक्षया स्रष्टीच्छया । यः प्राक्[2] जगत् संहृत्य सूक्ष्मरूपतया स्वोदरे निवेश्य प्रलयोदके श्रीपर्यङ्के श्रीभुजान्तरगतः प्रकृतिमयतमसा निगूढः स्थितः स एव परमपुरुषः पुनरुत्पत्तिकाले स्वगूहकं तमः पीत्वा स्वात्मानं प्रकाशितवानित्येतदेवात्र पुरुषरूपग्रहणमभिप्रेतं न तु[3] रामकृष्णादिवत् लोकव्यक्त्यभिप्रायोऽपि इत्युक्तं भवति ॥ १ ॥

एवं स्वगूहकतमःपानेन प्रकाशितः परमपुरुषः महदादितत्वान्युत्पाद्य तैर्ब्रह्माण्डं सृष्ट्वा तदण्डान्तः प्रविश्य अन्तरुदके शेषपर्यङ्कशायी स्वनाभेर्लोकात्मकं पद्मं निर्माय पद्मनाभनामा भूत्वा तस्मात् पद्माच्चतुर्मुखमजनयदित्याह[4] — यस्येति । अम्भसि शयानस्य योगनिद्रां वितन्वतः यस्य भगवतः नाभिह्रदाम्बुजाद्विश्वसृजां दक्षादीनां पतिर्ब्रह्मा आसीत् ॥ २ ॥

---

१ अहंकारादिभिः सप्त - ङ । २ यः स्रष्टीच्छयाः प्राक् - घ ।
३ 'न तु' इति नास्ति - क ग घ ङ । ४ इत्यभिप्रेत्याह - क ग ङ छ ज ।

यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः ।
तद्वै भगवतो रूपं विशुद्धं सत्वमूर्जितम् ॥ ३ ॥
पश्यन्त्यदो रूपमदभ्रचक्षुषः सहस्रपादोरुभुजाननाद्भुतम् ।
सहस्रमूर्धश्रवणाक्षिनासिकं सहस्रमौल्यम्बरकुण्डलोल्लसत् ॥ ४ ॥

---

स एव पुनर्ब्रह्माण्डे 'नाभ्या असीदन्तरिक्षं' इत्यादिना अन्तरिक्षादिलोककल्पकावयववान् पुरुषाख्यो अवततारेत्याह – यस्येति । पातालमित्यादिलोकविस्तरः चतुर्दशभुवनविस्तारः[1] । यस्य पुरुषनाम्नाऽवतीर्णस्य अवयवसंस्थानैश्चरणाद्यवयवविन्यासैः कल्पितः तदुत्पन्नत्वेन तदाधारत्वेन विद्वद्भिर्निरूपितः न तु तदात्मत्वेन ।

'सच्चिदानन्दरसं ब्रह्मचैतन्यं अविद्यादर्पणे प्रतिबिम्बितं सत्[2] जीव इत्यभिधीयते । तदेव ब्रह्म वशीकृतमायं ईश्वर इति । तत्र सच्चिदद्वयानन्द[3]ब्रह्मलक्षणपुरुषो भगवान् ईश्वरः पौरुषं रूपं जगृहे । पौरुषं रूपं विराड्रूपम् । स्वमायाकल्पित[4]महदहंकारादिभिः संभूतं उत्पन्नं अत एव पञ्चभूतादिषोडशकलोपेतम् । किमर्थं ? अनेन लोकसिसृक्षया । कोऽसौ भगवानित्यपेक्षयामाह– यस्येति । स्वमायया परिणत[5]भूतसूक्ष्मेषु शयानस्य तत्तद्रूपेण व्याप्तस्य योगनिद्रां जगत्कारणमायाशक्तिं वितन्वतो विस्तारयतः स्रष्टौ प्रेरयतो यस्य नाभिह्रदाम्बुजात् पञ्चीकृतभूतनिष्पन्नलोकपद्मात् ब्रह्माऽऽसीत् । यस्य ब्रह्मोत्पादकजगत्पद्मस्यावयवविन्यासैः पद्मदलायमानैर्लोकविस्तरः[6] कल्पितः न वस्तुतः सत्यः । तद्भगवतस्त्रैलोक्यात्मकं प्रथमं रूपं' इति केचित् ।

तद् दूषयति– तदिति । भगवतस्तद्रूपं पुरुषादिरूपत्रयं विशुद्धं निर्दोषं ऊर्जितं उद्रिक्तं, सत्वं[7] संपूर्णबलज्ञानादिसर्वगुणसमृद्धम्[8] । वै इति पदेन परकृतापव्याख्यानस्य प्रमाणविरोधं स्वविरोधं[9] च दर्शयति । 'निरनिष्टो निरवद्य' इति श्रुतेर्नित्यनिरस्ताविद्याविलासस्य ब्रह्मणोऽविद्यादर्पणे प्रतिबिम्बीभूय जीवत्वं न घटते । नहि नित्यनिर्मुक्तशिरोवेदनो लीलया कदाचित्तद्वान् स्यामिति कामयते । पञ्चीकरणमपि स्वकल्पनामन्तरेण न[10] प्रमाणपदवीं अध्यास्ते । अत उपेक्षणीयमेतन्मतम् ॥ ३ ॥

इतोऽपि तन्मतमयुक्तमित्याह– पश्यन्तीति । अदभ्रचक्षुषः पूर्णज्ञानाः ब्रह्मादयः अदो रूपत्रयं पश्यन्ति । कीदृशं ? सहस्रशब्दोऽनन्त[11]वाची प्रत्येकमभिसंबध्यते । सहस्रं पादाश्च ऊरवश्च भुजाश्च

---

१ विस्तरः क ग घ ङ छ २ सः - क ग घ ङ छ ज ३ सच्चिदानन्द - क ग ङ छ ।
४ मायया कल्पित - क ग घ ङ छ ज ५ मायापरिणत - क ङ ६ विस्तारः - छ ज ।
७ सत्वं वै - ख ८ सन्नद्धम् - क ग घ ङ छ ज ९ स्वविरोधमिति नास्ति - क ग घ ङ ज ।
१० तां - ख ११ अनन्तत्ववाचो - ग ।

एतन्नानावताराणां निधानं बीजमव्ययम् ।
यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः ॥ ५ ॥

स एव प्रथमं देवः कौमारं सर्गमास्थितः ।
चचार दुश्चरं ब्रह्मा ब्रह्मचर्यमखण्डितम् ॥ ६ ॥

द्वितीयं तु भवायास्य रसातलगतां महीम् ।
उद्धरिष्यन्नुपादत्त यज्ञेशः सौकरं वपुः ॥ ७ ॥

तृतीयमृषिसर्गं वै देवर्षित्वमुपेत्य सः ।
तंत्र[3] सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः ॥ ८ ॥

---

आननानि च सहस्रपादोरुभुजाननानि तैरद्भुतम् । सहस्रं मूर्धश्रवणाक्षिनासिका यस्मिन् तत्तथोक्तम् । सहस्रमौल्यम्बरकुण्डलैरुल्लसच्छोभमानम् । निरस्तादिदैवैरुत्तमाधिकारिभिर्ब्रह्मादिभिरपरोक्षतया दृष्टत्वान्नैतद्रूपत्रयं मायाकल्पितमिति भावः ॥ ४ ॥

त्रयाणां रूपाणां मध्ये पद्मनाभाख्यं रूपमवतारकारणमित्याह– एतदिति । यत्क्षीरार्णवशायिपद्मनाभाभिधं रूपं एतन्मत्स्यादिनानावताराणां बीजं व्यञ्जकम् । निधानं अन्ततोऽत्र सर्वावतारा निधीयन्ते एकीक्रियन्त इति । न व्येतीत्यव्ययम् । यस्य पद्मनाभस्यांशांशेन सामर्थ्यैकदेशेन देवादयः सृज्यन्ते स पद्मनाभ एव सर्वावतारहेतुरित्यर्थः ॥ ५ ॥

स एव पद्मनाभो देवः प्रथमं स्वस्मादेव कौमारं सर्गं[1] सनत्कुमाराभिधमवतारं आस्थितः । ब्रह्मा बृंहितः स्वतः पूर्णोऽपि शिष्टजनशिक्षणायान्यैर्दुश्चरं ब्रह्मचर्यमखण्डितमप्रतिहतं यथा भवति तथा चचारेत्यन्वयः[2] । सनत्कुमारोऽन्यः सनकादिषु पठितः ॥ ६ ॥

रसातलगतां महीमुद्धरिष्यन्नुद्धर्तुकामो यज्ञेशः श्रीनारायणोऽस्य जगतः भवाय तु स्थित्यर्थमेव सौकरं सूकरस्य वराहस्य विद्यमानं वपुरुपादत्तेत्यन्वयः ॥ ७ ॥

ऋषिषु सर्गोऽभिव्यक्तिर्यस्य स तथोक्तः । ऋषीणां स्वभावो यस्य स वा । तं तृतीयं महिदासाभिधावतारमुपेत्य देवर्षित्वं चोपेत्य स भगवांस्तत्रावतारे सात्वतं पञ्चरात्रं नाम ग्रन्थविशेषमाचष्ट व्याचख्यौ । नारदायेति[4] शेषः । यतः सात्वततन्त्रोक्तानुष्ठानात्कर्मणां नैष्कर्म्यं मोक्षसाधनत्वं स्यादि-

---

१ सर्गमिति मूलकोशे डकोशे चास्ति । नान्यत्र । २ अन्वय इति मूलकोशे डकोशे चास्ति । नान्यत्र ।
३ तन्त्रं - क ज ४ नारदादेरिति - कोशान्तरेषु ।

तुर्ये धर्मकलासर्गे नरनारायणावृषी ।
भूत्वाऽऽत्मोपशमोपेतमकरोद्दुश्चरं तपः ॥ ९ ॥
पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् ।
प्रोवाचाऽऽसुरये सांख्यं तत्त्वग्रामविनिर्णयम् ॥ १० ॥
षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया ।
आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान् ॥ ११ ॥
ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत ।
स यामाद्यैः सुरगणैरपात्स्वायंभुवान्तरम् ॥ १२ ॥

---

त्यन्वयः । 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु' इत्यभिधानम् । श्रुत्यादिप्रसिद्धिद्योतकेन वै-शब्देन देवर्षित्वं नारदत्वमुपपत्त्येत्यपव्याख्यानमपहस्तितमिति ज्ञातव्यम् । भोः शौनकादयः, तृतीयमृषिसर्गं विचिते वा । तदवतारप्रयोजनमाह– देवर्षित्वमिति ॥ ८ ॥

भोः शौनकादयः, तुर्यं चतुर्थं शृणुत । कथं ? स पद्मनाभः धर्मनाम्नि भगवति कलासर्गे स्वांशावतारे नाम्ना नरनारायणौ इति ऋषी भूत्वा अज्ञलोकदृष्ट्याऽऽत्मनोऽन्तःकरणस्योपशमेनाधिकशान्त्या उपेतं युक्तं अन्यैः कर्तुमशक्यं तपोऽकरोदित्येकान्वयः । अत्र 'कलासर्ग' इत्युक्त्या नारायणस्यावतारत्वं नरे तु विशेषावेश एवं इति ज्ञातव्यम् । 'तुर्ये' इति केचित्पठन्ति, तत्र तुर्ये चतुर्थे धर्मकलासर्गे इति सुगमोऽन्वयः ॥ ९ ॥

पञ्चमोऽवतारोऽपि कपिलो नामेत्यन्वयः । स सिद्धेशः कपिलः कालबलेन तिरोहितं तत्त्वानां चतुर्विंशतिसंख्याकानां ग्रामः समूहः, तस्य विशेषेण निर्णयो भगवत्परत्वेन यस्मिंस्तत्तथोक्तम् । सांख्यं भगवज्ज्ञानप्रतिपादनपरं वेदार्थपरिबृंहितं नाम्नाऽऽसुरये सच्छिष्याय प्रोवाचेति पश्चादन्वयः । अत्राज्ञलोकप्रसिद्धसांख्यशास्त्रप्रणेता कपिलः, तच्छिष्यः आसुरिश्चान्य[3] एवेति सतां सम्प्रदायः ॥ १० ॥

यः पद्मनाभः अनसूयया नत्रिपत्न्या वृतः अत्रेर्ऋषेरनसूयायामपत्यत्वं प्राप्तः, आन्वीक्षिकीं तर्क-विद्यामलर्काय शिष्याय प्रह्लादादिभ्यश्चोचिवान् । तमवतारं षष्ठं विद्य ॥ ११ ॥

ततः स पद्मनाभः सप्तमे रुचेः ऋषेः आकृत्यां पत्न्यां नाम्ना यज्ञो अभ्यजायत । जातः स यज्ञो, नाम्ना यामा आद्या येषां ते तथा तैः सुरगणैः सह स्वायम्भुवमन्वन्तरमपात् अरक्षदित्यन्वयः । प्रति-मन्वन्तरं देवानां नामभेदाद्यामा इत्युक्तम् ॥ १२ ॥

---

१ अयं ख ड पाठः । अन्यत्र एवकाररहितः ।
२ संख्यानां - ग छ　　३ आसुरिरप्यन्यः - ड　　४ तत्व - क ग　　५ सप्तमो - क

अष्टमो मेरुदेव्यां तु नाभेर्जात उरुक्रमः ।
दर्शयन्वर्त्म धीराणां सर्वाश्रमनमस्कृतम् ॥ १३ ॥
ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः ।
दुग्धवानोषधीर्विप्रास्तेनायं स उशत्तमः ॥ १४ ॥
रूपं स जगृहे मात्स्यं चाक्षुषान्तरसंप्लवे ।
नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम् ॥ १५ ॥
सुरासुराणामुदधिं मथ्नतां मन्दराचलम् ।
दध्रे कमठरूपेण पृष्ठ एकादशं विदुः ॥ १६ ॥
धान्वन्तरं द्वादशमं त्रयोदशममेव च ।
अपाययत्सुरानन्यान् मोहिन्या मोहयन् स्त्रिया ॥ १७ ॥

---

य उरुक्रमः नाभेराग्नीध्रपुत्रात् मेरुदेव्यां पत्न्यां जातः सर्वाश्रमनमस्कृतं धीराणां विचारतानां वर्त्म पारमहंस्याश्रमं दर्शयन्नभूत् तस्य सोऽष्टमोऽवतारः । न शुक्रशोणितमिश्रतयाऽस्य जननं, किन्तु द्वारमात्रमित्यस्मिन्नर्थे तुशब्दः ॥ १३ ॥

ऋषिभिः प्रार्थितः पद्मनाभः नवमावतारं पार्थिवं पृथुचक्रवर्तिशरीराविष्टं रूपं भेजे । हे विप्राः ज्ञानिनः, गोरूपिण्याः भुव ओषधीः क्षीरात्मिकाः दुग्धवान्, इति येन तेन कर्मणाऽयं भगवानुशत्तमः सत्यकामेषु श्रेष्ठः । उश-इच्छायां । चशब्दो दोहनकर्मणोऽमानुषत्वं द्योतयति ॥ १४ ॥

स भगवान् चाक्षुषान्तरसंप्लवे चाक्षुषमन्वन्तरप्रलये, मात्स्यं मत्स्यस्य विद्यमानं रूपं जगृहे । किञ्च महीमय्यां नावि तरीस्थानीयभूमौ वैवस्वतं मनुमारोप्यापादित्यन्वयः ॥ १५ ॥

सुरासुराणामुदधिं समुद्रं मथ्नतां सतां यो भगवान् पातालं आविशन्तं मन्दरं पर्वतं कूर्मरूपेण पृष्ठे दध्रे बभारेत्येकान्वयः । तमवतारमेकादशं विदुरिति ॥ १६ ॥

द्वादशममवतारं धान्वन्तरं धन्वन्तर्याख्यरूपसम्बन्धिनं विदुः । स हरिर्यस्मिन् अवतारे मोहिन्या मोहकशक्तिमत्या स्त्रिया स्त्रीमूर्त्याऽन्यानुसारान् मोहयन् सुरान् सुधामपायय तं त्रयोदशममेव विदुरित्येकान्वयः । चशब्दो मोहयन्नित्युक्त्या मायामयं तद्रूपमिति शङ्कानिरासार्थः ॥ १७ ॥

---

१ पार्थवं - क  २ स - ज  ३ पार्थवं - क  ४ प्रविशन्तं - ग

चतुर्दशं नारसिंहं बिभ्रद्दैत्येन्द्रमूर्जितम् ।
ददार करजैरूरावेरकान् कटकृद्यथा ॥ १८ ॥

पञ्चदशं वामनकं कृत्वाऽगादध्वरं बलेः ।
पदत्रयं याचमानः प्रत्यादित्सुस्त्रिविष्टपम् ॥ १९ ॥

अवतारे षोडशमे पश्यन्ब्रह्मद्रुहो नृपान् ।
त्रिःसप्तकृत्वः कुपितो निःक्षत्रामकरोन्महीम्[1] ॥ २० ॥

ततः सप्तदशे जातः सत्यवत्यां पराशरात् ।
चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ॥ २१ ॥

नरदेवत्वमापन्नः सुरकार्यचिकीर्षया ।
समुद्रनिग्रहादीनि चक्रे वीर्याण्यतःपरम् ॥ २२ ॥

---

नरसिंहरूपसम्बन्धिविग्रहं बिभ्रत् स भगवान् करजैर्नखैरूर्जितं दैत्येन्द्रं हिरण्यकशिपुं ऊरौ अङ्के निपात्य तथा ददार यथा कटकृत् तृणास्तरणकर्ता एरकान् दीर्घाकारान् तृणविशेषान् दारयति । तमवतारं चतुर्दशं विदुरित्येकान्वयः ॥ १८ ॥

त्रिविष्टपं त्रैलोक्यं प्रत्यादित्सुः बलेराच्छिद्य इन्द्राय दातुकामः, तदर्थं बलिं पदत्रयं याचमानः स पद्मनाभः पञ्चदशमवतारं वामनसम्बन्धिनं कृत्वा बलेरध्वरं यज्ञमगादित्यन्वयः ॥ १९ ॥

षोडशमे अवतारे स भगवान् जमदग्निसुतो भूत्वा ब्रह्मद्रुहः ब्राह्मणद्रोहिणो नृपान् पश्यन् घ्नन्, त्रिःसप्तकृत्वः एकविंशतिवारं महीं निःक्षत्रियां क्षत्रियजातिरहितामकरोदित्येकान्वयः । कुपित इति कुपिताकारं दर्शयन्न तु कुपितः । नहि ईश्वरस्य कोपः संभवति अशक्तस्य हि सः । 'कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्' इति हेयत्वाच्चस्येति ॥ २० ॥

ततः स हरिः सप्तदशेऽवतारे पराशरात्सत्यवत्यां जातोऽल्पमेधसः अल्पप्रज्ञान् पुरुषान् दृष्ट्वा वेदतरोः शाखाश्चक्रे कृतवान् ॥ २१ ॥

अतः परं सप्तदशात्परं पश्चादष्टादशावतारे देवकार्यकरणेच्छया नरदेवत्वं राजत्वं प्राप्तः समुद्रनिग्रहादीनि सेतुबन्धनपूर्वाणि वीर्याणि वीरकर्माणि कृतवानित्येकान्वयः ॥ २२ ॥

---

१ टीकानुगुण्याय 'ऽकरोन्निःक्षत्रियां महीम्' इत्यन्तिमपादेन भाव्यमिति भाति ।

एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी ।
रामकृष्णाविति भुवो भगवानहरद्भरम् ॥ २३ ॥

ततः कलौ सम्प्रवृत्ते सम्मोहाय सुरद्विषाम् ।
बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति ॥ २४ ॥

अथासौ युगसन्ध्यायां दस्युप्रायेषु राजसु ।
जनिता विष्णुयशसो नाम्ना कल्की जगत्पतिः ॥ २५ ॥

अवतारा ह्यसंख्येया हरेः सत्वनिधेर्द्विजाः ।
यथा विदासिनः कुल्याः सरसः स्युः सहस्रशः ॥ २६ ॥

ऋषयो मनवो देवा मनुपुत्रा महौजसः ।
कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः ॥ २७ ॥

---

स भगवानेकोनविंशे विंशतिमे चावतारे वृष्णिषु नाम्ना रामकृष्णाविति जन्मनी प्राप्य भुवो भरं भारं असुरपृतनालक्षणमहरदित्येकान्वयः । 'जन्मनी' इति द्विवचनाद्बलभद्र विशेषावेशो ज्ञातव्यः ॥२३॥

ततः कलौ युगे सम्प्रवृत्ते सति सुरद्विषां त्रिपुरवासिनां दैत्यानामन्योन्यानां वेदमार्गे प्रवर्तमानानां मोहाय नाम्ना बुद्धः कीकटेषु [1]मगधविषयेषु जिनसुतः जिनेन सुतत्वेन वृतः भविष्यतीत्यन्वयः ॥ २४ ॥

अथ बुद्धावतारादनन्तरं असौ जगत्पतिः पद्मनाभो युगसंध्यायां प्राप्तायां राजसु दस्युप्रायेषु बहुलं चोरेषु सत्सु नाम्ना कल्की, नाम्ना विष्णुयशसो विप्राज्जनितोत्पत्स्यत इत्येकान्वयः ॥ २५ ॥

हरेरवताराणामनन्तत्वादनन्तपुरुषायुषेऽपि समापयितुं नास्माकं शक्तिरस्तीत्यभिप्रेत्याह– **अवतारा** इति । हे द्विजाः ! सत्वनिधेर्बलज्ञानादिमहागुणनिधानस्य हरेरवतारा असंख्येया, हि यत्नाच्च्सा-त्प्राधान्यतः संख्याताः, न साकल्येन समापयितुं शक्याः । तत्रोदाहरणमाह– **यथेति** । यथा विदासिन उन्नतस्थलात् भिन्नाद्वा सरसः सहस्रशः कुल्याः क्षुद्रनद्यः स्युरिति । इदं मन्दमतीनपेक्ष्योक्तं, न तु योगिनः । क्षुद्रनदीनां तैः संख्येयत्वेऽपि न हरेरवताराः संख्यातुं शक्यंत इत्यतो बुद्धयवतारार्थ-मिति ज्ञातव्यम् ॥ २६ ॥

इदानीं प्रतिविंबांशानाह – **ऋषय इति** । मनुपुत्राः प्रियव्रतादयः, प्रजापतिभिर्दक्षादिभिः सहिता एते ऋष्यादयः हरेः कलाः भिन्नांशाः स्मृताः स्मृतिषु उक्ताः ॥ २७ ॥

---

[1] मागध - ग ज ।

एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे ॥ २८ ॥

जन्म गुह्यं भगवतो य एवं प्रयतो नरः ।
सायम्प्रातर्गृणन् भक्त्या दुःखग्रामाद्विमुच्यते ॥ २९ ॥

एतद्रूपं भगवतो ह्यरूपस्य चिदात्मनः ।
मायागुणैर्विरचितं महदादिभिरात्मनि ॥ ३० ॥

---

तर्हि के स्वरूपांशा इति तत्राह– एत इति । 'स एव प्रथममि'त्यारभ्य 'अथासावि'त्यंतेन प्रोक्ता एते शेषशायिनः परमपुरुषस्य स्वांशकलाः स्वरूपांशावताराः, न तत्रांशांशिनोर्भेदः[1] प्रतिबिंबांशवत् । किमुक्तं भवति ? कृष्णो मेघश्यामः शेषशायी नूलरूपी पद्मनाभो भगवान् स्वयं तु स्वयमेव । न शाखिशाखावत् भेदाभेदोऽपीति भाव इत्याह– इन्द्रारीति । इन्द्रारिभिर्दैत्यैर्व्याकुलं जनं[2] तत्स्थानं च युगे युगे अवतीर्य मृडयन्ति रक्षन्तीत्यन्वयः ॥ २८ ॥

फलमाह– जन्मेति । प्रयतः प्रकर्षेण निर्जितेन्द्रियग्रामो यो नरो ज्ञानी एवमुक्तप्रकारेण जन्मरहस्यं सायंप्रातर्भक्त्या गृणन् पठन् सः सांसारिकदुःखसमूहात् मुच्यत इत्यन्वयः ॥ २९ ॥

इदानीं प्रतिमारूपमाह– एतदिति । मायागुणैः प्रकृतिविकारैः महदहङ्कारादिभिरुपादानकारणैः आत्मनि सर्वगते हरिणा विरचितं एतत् जडं ब्रह्माण्डमरूपस्य प्रकृतिविकृत[3]रूपरहितस्य, चिदात्मनः केवलज्ञानरूपस्य भगवतो रूपं प्रतिमास्थानीयम् । हिर्हेतौ[4] । यस्मात् एतत् जडं तस्मात्प्रतिमैव, न साक्षात्स्वरूपम् ।

'चिदेकरूपस्य भगवतो मायाकल्पितसत्वादिगुणैर्महदाद्याकारेण परिणतैरेतत्प्रतीयमानं विराड्रूपमात्मनि चिद्रूपे कल्पितम् । अत एव तन्मिथ्या । अतस्मिंस्तद्बुद्धेरि'ति यत्[5] कैश्चिदुच्यते तन्न युक्तं प्रमाणविरोधादित्यस्मिन्नर्थे[6] वा ॥ ३० ॥

---

१ अंशांशिनां - कोशान्तरेषु सर्वत्र । २ जनः - कोशान्तरेषु सर्वत्र ।
३ विकृति - कोशान्तरेषु सर्वत्र । ४ हिशब्दो हेतौ - ङ ५ यैः - कोशान्तरेषु सर्वत्र ।
६ एतदनन्तरं 'हिः' इति - क घ ङ छ । च हिः - ग ज ।

यथा नभसि मेघौघा रेणुर्वा पार्थिवोऽनिले ।
एवं द्रष्टरि दृश्यत्वमारोपितमबुद्धिभिः ॥ ३१ ॥
अतः परं यदव्यक्तमव्यूढगुणबृंहितम् ।
अदृष्टाश्रुतवस्तुत्वात्स जीवो यः पुनर्भवः ॥ ३२ ॥

---

प्रतिमात्वकल्पनामन्तरेण साक्षाद्रूपत्वं किं न स्यादित्याशंक्य सा भ्रान्तिरिति सोदाहरणमाह– यथेति । यथा मेघौघा नभस्यारोपिता मेघौघान् दृष्ट्वाऽयमाकाश इति कल्पयन्ति विवेकशून्याः, यथा अनिले वायौ पार्थिवो रेणुरारोपितः, वायुनोद्धूयमाननूर्ध्वमुखं रेणुं दृष्ट्वाऽयं वायुरिति । आकाशवाय्वो-श्चाक्षुषत्वाभावाद्भ्रान्तिरेव सा[1] । एवं द्रष्टरि सर्वज्ञे भगवति प्रतिमां दृष्ट्वा मांसदृष्ट्यगोचरे[2] अबुद्धिभि-रज्ञैर्भ्रान्त्या दृश्यत्वं जडरूपत्वं आरोपितं कल्पितम् । तस्माच्चभ्रान्तम् । अतो न साक्षाद्रूपं, प्रतिमैवेति भावः ॥ ३१ ॥

एवं हरेर्वासुदेवादि परमं रूपं ब्रह्माण्डाख्यं प्रतिमारूपं च निरूप्य जैवं रूपमाह– अत इति । यज्जैवं रूपमतः उक्तयोः जडेश्वररूपयोः परं अन्यत् अव्यक्तं सूक्ष्ममव्यूढगुणबृंहितं अनादिकालात् कदाचिदप्यनपगतसत्वरजस्तमोगुणपूर्णं, यश्च अदृष्टाश्रुतवस्तुत्वादश्रुतामतानुपासितानपरोक्षितपरमात्मस्वरूप-त्वात्पुनःपुनः भवः उत्पत्तिर्यस्य स तथोक्तः पुनः पुनर्जायमानो म्रियमाणश्च स जीवः । तस्माद्[3]ब्रह्मादि-वदत्यन्तेश्वरवशं जैवं रूपमिति भावः ।

'अतः कार्यरूपात् परं व्यतिरिक्तं यदव्यक्तं अनभिव्यक्तं रूपादिभिः व्यक्तिसाधनैः[4] शून्यं अव्यूढं अनभिव्यक्तं गुणानां बृंहितं कार्यं यस्मिन् तदव्यूढगुणबृंहितं, अत एव अदृष्टाश्रुतवस्तु तस्माद-व्यक्तं, स प्रसिद्धो जीवो यद्यस्मात्पुनर्भवति । जीवेन सह वर्तमानः, पुनर्भवतीति पुनर्भवः, देहादि-प्रपञ्चलक्षणः संसारो यस्माद्भवतीति वा । तत्कारणमि'ति यद् व्याख्यानं तददृष्टाश्रुतवस्तुत्वादिति हेत्वभिधानविरुद्धम्[5] । तस्मिन् पक्षे यददृष्टादिविशेषणैर्विशिष्टं तद्वस्तु मूलकारणमिति वक्तव्यम् । प्रकृतानुपयुक्तं च । अत्र देहादि[6]प्रपञ्चस्य मिथ्यात्ववाचिपदं प्रक्षेप्यं, अतो यत्किञ्चिदेतत् ॥ ३२ ॥

---

१ अचाक्षुषत्वात् - ग

२ अयं ख ङ पाठः । अन्यत्र - मनुष्यदृष्ट्यगोचरे । ३ एतदनन्तरं 'निर्विवादमि'त्यधिकः पाठः कोशान्तरेषु सर्वत्र ।

४ अयं ङ पाठः । अन्यत्र सर्वत्र - 'यदनभिव्यक्तं रूपादिभिः व्यक्तिकारणसाधनै'रिति ।

५ हेत्वभिधान-विरोधि - ङ । हेत्वभिधाने विरुध्येत - क ग घ । हेत्वभिधानं विरुध्येत - छ ज ।

६ देवादि - क ग घ ।

यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा ।
अविद्ययाऽऽत्मनि कृते इति तद्ब्रह्मदर्शनम् ॥ ३३ ॥

यद्येषोपरता देवी माया वैशारदी मतिः ।
संपन्न एवेति विदुर्महिम्नि स्वे महीयते ॥ ३४ ॥

एवं जन्मानि कर्माणि ह्यकर्तुरजनस्य च ।
वर्णयन्ति स्म कवयो वेदगुह्यानि हृत्पतेः ॥ ३५ ॥

---

जीवस्यैवंविधानादिबन्धनिवर्तकं ब्रह्मज्ञानमेव, न कर्मादिकमित्यभिप्रेत्याह– यत्रेति ॥ यत्र परमात्मनि सदसद्रूपे व्यक्ताव्यक्तप्रकृतिप्राकृतरूपे[1] स्वसंविदा स्वरूपज्ञानेन प्रतिषिद्धे अनादित एव निवृत्ते अविद्यया अज्ञानेन आत्मनि जीवे कृते इति यद्दर्शनं ज्ञानं तद्ब्रह्मज्ञानं, संसारनिवर्तकमिति शेष इत्येकान्वयः ॥ ३३ ॥

कण्ठोक्त्याऽऽह– यदीति । यदि सम्यगपरोक्षज्ञानोदयसाध्योत्तमप्रसादरूपेषा विशारदस्य हरेर्विद्यमाना देवी द्योतमाना मतिर्ज्ञानरूपा माया इच्छा अपरोक्षज्ञानदानेन 'नैनं जीवं संसारयामी'त्युपरता तस्मान्निवृत्ता तर्हि तं जीवं संपन्न एवेति परं ब्रह्म प्राप्त एवेति विदुः । किञ्च स्वे स्वरूपे ज्ञानानन्दाद्यात्मके महिम्नि स्थितः स्थावरमुक्तजनैर्महीयते पूज्यत इत्यन्वयः ।

महीयत इत्युक्त्या 'एषा कार्यकारणलक्षणप्रपञ्चविवर्तरूपा देवस्य विष्णोः सम्बन्धिनी माया वैशारदी विघटमानसंसारघटने[2]रूपा मतिर्बुद्धिर्यद्युपरता, तदा स्वात्मरूपं ब्रह्म संपन्नं तदैक्यमापन्नं विदुरि'त्येतन्निरस्तम् । भेदनिष्ठत्वात्पूज्यपूजकभावस्येति भावः ॥ ३४ ॥

हरेरेवंविधावतारकर्मभिराप्तकामत्वेन प्रयोजनाभावेऽपि जीवानां प्रयोजनमस्तीत्याह –एवमिति । अनन्याधीनकर्तृत्वात्फलोद्देशाभावाद्वाऽकर्तुरजनस्य जननरहितस्य जनविलक्षणस्य वा हृत्पतेः मनःप्रेरकस्य विष्णोरेवंविधानि वेदगुह्यानि उपनिषत्प्रतिपाद्यानि जन्मानि कर्माणि च कवयः संसारमोक्षाय वर्णयन्तिस्म। हिशब्देन हरेः साकल्येन क्रियाराहित्यं प्रतिषेधति । अन्यथोत्तरश्लोकविरोधादित्येकान्वयः । तस्माज्जीवानां संसारमोक्ष एव भगवदवतारप्रयोजनमित्यर्थः ॥ ३५ ॥

---

१ व्यक्ताव्यक्तमिति प्रकृत - क ग च छ घ ज । २ अयं ख घ ङ पाठः । अन्यत्र घटनेति नास्ति ।

स वा इदं विश्वममोघलीलः सृजत्यवत्यत्ति न सज्जतेऽस्मिन् ।
भूतेषु चान्तर्हित आत्मतन्त्रः षाड्वर्गिकं जिघ्रति षड्गुणेशः ॥ ३६ ॥

न चास्य कश्चिन्निपुणं विधातुरवैति जन्तुः कुमनीष ऊतिम् ।
नामानि रूपाणि मनोवचोभिः सन्तन्वतो नटचर्यामिवाज्ञः ॥ ३७ ॥

---

फलाभिसन्ध्यभावादकर्तृत्वं, न कर्तृत्वाभावादिति यत्तत्स्पष्टमाह– स वा इति । अमोघलीलः सत्यकामलक्षणक्रीडः स पद्मनाभ एव इदं विश्वं सृजति, अवति रक्षति, अत्ति संहरति । न रुद्रादिः । तथाप्यस्मिन् जगति न सज्जते लौकिककर्तृवत्फलासक्तो न भवति । अतोऽकर्ता, न तु कर्तृत्वाभावात् । अभोक्तृत्वमपि दुःखाभोगादेव न तु भोगाभावात्, सुखभोक्तृत्वसंभवादित्यभिप्रेत्याह– भूतेष्विति । पंचभूतैः संभूयोत्पन्नत्वात् भूतेषु शरीरेष्वन्तर्हितः मनःश्रोत्रादिषडिन्द्रियवर्गग्राह्यशब्दादिविषयसारं जिघ्रति भुंक्ते, नतु दुःखादिकं[1] । कुतः ? आत्मतन्त्रः । नहि स्वतंत्रस्य दुःखादनं घटते । इतोऽपि नेत्याह – षडिति । षड्गुणेशः षडिन्द्रियविषयेशः अतश्च सारभुक् । तस्मादभोक्तृत्वं नाम दुःखाभोगादेव, न तु भोक्तृत्वाभावादित्यर्थः[2] ।

'आत्मतन्त्र' इत्यनेन विशेषणेन 'ईश्वर एव देहे[3] प्रविष्टो जीवो भवति, नान्य इत्ययमर्थः स वा इदमित्यनेन समर्थ्यत' इत्येतत् दूषितम् । नहि सुखमेव स्याद् दुःखमण्वपि न स्यादिति कर्तुं समर्थ ईश्वरः सुखदुःखपात्रीभूतं जीवत्वमभिकांक्षेते[4] ईश्वरत्वविरोधात् ॥ ३६ ॥

एवंविधमिथ्याज्ञानी तत्स्वरूपाज्ञानाद्भगवद्भजनादावनधिकारीत्याह – न चेति । वचोभिः संकीर्तनयोग्यानि नामानि, मनोभिः स्मरणयोग्यानि रूपाणि, सन्यक् तन्वतः विस्तारयतः मनोवचोभिर्नामरूपात्मकं प्रपञ्चं सृजतो वा सतां निपुणं भद्रं विधातुः अस्य हरेः ऊतिं अभिप्रायं गतिं वा कश्चिदपि नावैति न जानाति । कीदृशः ? कुमनीषः मिथ्याज्ञानी जन्तुः कृमिसदृशः । जन्तुरिति पुनः पुनर्जायमानो म्रियमाणः मिश्रबुद्धिः संसारी । कुमनीष इति कुत्सितं प्रमाणविरुद्धं सर्वमिथ्यात्वं मनसा मन्यते, न तु युक्त्या वक्तुं शक्नोतीत्यद्वैतवादी वा । कथमिव ? नटस्यांगुल्याद्यभिनयविशेषाज्ञो नटचर्यां भारतादिकथात्मिकां[5] यथा न जानाति तथाऽयमिति भावः ॥ ३७ ॥

---

१ दुःखादानं - मूलकोशपाठः । २ दुःखाभोग एव, न तु भोक्तृत्वाभाव इत्यर्थः । - घ ङ ।
३ देह - ग घ ङ छ ट ४ अभिकांक्षति - क घ ज ५ भरतादि - ख ग घ ङ छ ।

स वेद धातुः पदवीं परस्य दुरन्तवीर्यस्य रथाङ्गपाणेः ।
योऽमायया सन्ततयाऽनुवृत्त्या भजेत तत्पादसरोजगन्धम् ॥ ३८ ॥

अथेह धन्या भगवन्त इत्थं यद्वासुदेवेऽखिललोकनाथे ।
कुर्वन्ति सर्वात्मक आत्मभावं न यत्र भूयः परिवर्त उग्रः ॥ ३९ ॥

इदं भागवतं नाम पुराणं ब्रह्मसंमितम् ।
उत्तमश्लोकचरितं चकार भगवानृषिः ॥ ४० ॥

---

तर्हि कीदृशो वेदेति तत्राह— स इति । यो वेदप्रमाणकः[1] अमायया अव्याजेन, इदमखिलं मायाकल्पितमनिर्वाच्यं न भवतीति भावेन वा सन्ततया निरन्तरया प्रवाहरूपया अनुवृत्त्या सेवया हृत्कमलमध्यनिवासिनस्तस्य पादसरोजयोर्गन्धं भजेत अत्रैवास्वाद्य मग्नमना भवेत् स पुरुषः दुरन्तवीर्यस्य असंख्यातपराक्रमस्य परस्य पूर्णस्य धातुः पोषणादिकर्तुः रथाङ्गपाणेः श्रीनारायणस्य पदवीं मार्गं स्वरूपस्थितिं वेदेत्येकान्वयः । धातुरित्युक्ते चतुर्मुखोऽपि स्यादित्यतः परस्येति । चतुर्मुखपरत्वमप्यक्षरस्यास्ति अतो रथांगपाणेरिति । तस्माद्भागवता एव भगवदापरोक्ष्यं लभन्ते नेतर इति सिद्धम् ॥ ३८ ॥

भागवता अपि भवादृशा एवेत्याशयवानाह— अथेति । हे भगवन्तः पूजावन्तः, भाग्यवन्तो वा, यत्र यस्मिन् भगवत्यात्मभावे स्वामिभृत्यभावे क्रियमाणे सति भूयः पुनः उं रुद्रमपि ग्रसतीति उग्रः क्रूरः परिवर्तः संसारः मरणं वा न स्यात् तस्मिन्नखिललोकनाथे सर्वात्मके सर्वान्तर्यामिणि वासुदेवे इत्थमुक्तप्रकारेणात्मभावं कुर्वन्तीति यत् यस्मात् अथ तस्मादिह चेतनराशौ यूयं धन्या निरपेक्षगुणपूर्णाः कृतकृत्या इत्येकान्वयः । यत्र यस्मिन्नात्मभावे क्रियमाणे परिवर्तो न स्यात् तमात्मभावमिति वा ॥ ३९ ॥

धर्मः कं शरणं गत इति प्रश्नं परिहरति— इदमित्यादिना । ऋषिः सर्वज्ञो व्यासो भगवान् ब्रह्मणा वेदेन संमितं तुलितं उत्तमश्लोकचरितं उत्तमश्लोकस्य हरेश्चरितानि यस्मिन् सन्ति तत्तथोक्तं इदं बुद्धिस्थं भागवतं पुराणं चकार ॥ ४० ॥

---

१ प्रमाणिकः - घ ड छ ज ।

निःश्रेयसाय लोकस्य धन्यं स्वस्त्ययनं महत् ।
तदिदं ग्राहयामास सुतमात्मवतां वरम् ॥ ४१ ॥
सर्ववेदेतिहासानां सारं सारं समुद्धृतम् ।
स तु संश्रावयामास महाराजं परीक्षितम् ॥ ४२ ॥
प्रायोपविष्टं गङ्गायां परीतं परमर्षिभिः ।
तस्य कीर्तयतो विप्रा राजर्षेर्भूरितेजसः ॥ ४३ ॥
अहं चाध्यगमं तत्र निविष्टस्तदनुग्रहात् ।
सोऽहं वः श्रावयिष्यामि यथाऽधीतं यथामति ॥ ४४ ॥
कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह ।
कलौ नष्टदृशां पुंसां पुराणार्कोऽधुनोदितः ॥ ४५ ॥

इति श्रीमद्भागवते तृतीयोऽध्यायः ॥

---

किमर्थं ? लोकस्य निःश्रेयसाय मोक्षाय । धन्यं पुष्टिकरं स्वस्त्ययनं सर्वमङ्गलानामालयं, अर्थतः शब्दतोऽपि महत् यदेवंविधं तदिदं स व्यास आत्मवतां वशीकृतमनसां वरं सुतं शुकं ग्राहयामास ॥ ४१ ॥

कुत एतदेवाग्राहयदिति तत्राह – सर्वेति । वेदादिसर्वशास्त्रोत्तमत्वादिदमेव ग्राहितमिति भावः । स तु शुकः परमऋषिभिः परीतं समन्वितं गङ्गायां प्रायोपविष्टं अनशनव्रतमाचरन्तं परीक्षितं नाम महाराजं चक्रवर्तिनं श्रावयामास । किं चाहं च विप्राः हे विप्राः ! तदनुग्रहात्तत्र गङ्गायां तदन्तिके निविष्टः मम योग्यस्थाने उपविष्टः, भूरितेजसः क्षात्रतामरूपोपेतस्य ब्रह्मापरोक्षज्ञानवतो वा तस्य राजर्षेरर्थे कीर्तयतः शुकादध्यगमं पठितवानस्मि । योऽहं तत्राध्यगमं सोऽहम् । तत्र, 'तत्रेत्यादि'प्रश्नपरिहाराय सर्ववेदेतिहासादिसारत्वेन भगवतोद्धृतं श्रीभागवतं वः युष्माकं श्रावयिष्यामि । कथं ? यथापठितं यथाप्रज्ञम् । इत्येकान्वयः ॥ ४२ ॥ ४३ ॥ ४४ ॥

यत्पृष्टं 'धर्मः कं शरणं गत' इति तत्रोत्तरं धर्मज्ञानादिभिः सह कृष्णे स्वधाम वैकुण्ठं प्राप्ते सति, कलियुगे नष्टज्ञानानां पुंसां सर्वसद्धर्मप्रकाशकश्रीभागवतपुराणार्कोऽधुना वेदव्यासेन उदितः उदयं प्रापितः । तस्मात्स धर्मः स्वच्छास्त्रैर्ज्ञानसद्धर्मप्रवर्तकं तमेव व्यासरूपिणं कृष्णं शरणं गत इति भावः ॥ ४५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुविरचितायां
प्रथमस्कन्धे तृतीयोऽध्यायः ॥

## अथ चतुर्थोऽध्यायः

इति ब्रुवाणं संस्तूय मुनीनां दीर्घसत्रिणाम् ।
वृद्धः कुलपतिः सूतं बह्वृचः शौनकोऽब्रवीत् ॥ १ ॥

शौनक उवाच —

सूत सूत महाभाग वद नो वदतां वर ।
कथां भागवतीं पुण्यां यामाह भगवान् शुकः ॥ २ ॥

कस्मिन् युगे प्रवृत्तेयं स्थाने वा केन हेतुना ।
कुतः संचोदितः कृष्णः कृतवान् संहितां मुनिः ॥ ३ ॥

तस्य पुत्रो महायोगी समदृक् निर्विकल्पकः ।
एकान्तगतिरुन्निद्रो गूढो मूढ इवेयते ॥ ४ ॥

---

'सोऽहं वः श्रावयिष्यामि' इति सूतेनोक्तोऽपि शौनकः श्रीभागवतश्रवणे श्रद्धालुत्वदर्शनाय विशेषप्रश्नाय च सूतमाह[1] – इतीति । दीर्घसत्रिणां प्रशस्तं दीर्घकालीनं सत्रमेषामस्तीति तेषां मध्ये ज्ञानवयोवृद्धः ऋषिकुलाचाररक्षकः बह्वृचः ऋग्वेदेषु निष्णातः शौनकः इति ब्रुवाणं सूतं संस्तूय तमब्रवीदित्यन्वयः ॥ १ ॥

महाभाग भक्तिभाग्[2]युक्त, सूतसूतेति तात्पर्ये[3] द्विरुक्तिः । एकत्र पुण्यकर्मवासनेति वा[4] । शुको भगवान् पूजावान् पुनातीति पुण्यां यां भागवतीं कथां आह, परीक्षित इति शेषः, हे वदतां वर ! तां कथां नोऽस्माकं वदेत्यन्वयः ॥ २ ॥

विशेषप्रश्नं दर्शयति – कस्मिन्निति । चतुर्णां युगानां मध्ये कस्मिन्निव प्रवृत्ता, कस्मिन् वा स्थाने देशे, केन कारणेन, कस्माद्धेतोः संचोदितः कृष्णद्वैपायन इमां संहितां कृतवानित्यन्वयः ॥ ३ ॥

शुकः परीक्षितं श्रावयामासेति त्वद्वचनमनुपपन्नमेव, केनापि श्रीशुकावगमनस्यासुलभत्वादित्याशयवानाह– तस्येति । तस्य व्यासस्य पुत्रः शुकः महायोगी महाज्ञानी महाध्यानी वा अत एव सर्वदेशकालवस्तुषु ज्ञानादिसर्वगुणैः समं एकप्रकारं ब्रह्म पश्यतीति समदृक् । मया श्रिया सह वर्तत इति वा समम् । अत एव निर्विकल्पकः इदं मदीयं, तद् तदीयमिति भेदबुद्धिमपहाय सर्वमीश्वराधीनमिति

---

१. आहेत्याह– इति पाठेन भाव्यमिति भाति ॥

२ महा - ग  ३ तात्पर्यात् - ग  ४ द्विरुक्तिमध्ये एकत्र सूतशब्दे सु उतेति पदच्छेदे सु पुण्यं उतं कर्मवासना यस्येति बहुव्रीहावयमर्थो लभ्यते ।  ५ शुद्धात्ममस्य - ङ ।

कथमालक्षितः पौरैः संप्राप्तः कुरुजाङ्गलम् ।
उन्मत्तमूकजडवद्विचरन् गजसाह्वये ॥ ५ ॥

कथं वा पाण्डवेयस्य राजर्षेर्मुनिना सह ।
संवादः समभूत्तात यत्रैषा सात्वती श्रुतिः ॥ ६ ॥

स गोदोहनमात्रं हि गृहेषु गृहमेधिनाम् ।
अवेक्षते महाभागस्तीर्थीकुर्वंस्तदाश्रमम् ॥ ७ ॥

---

स्थितः । अत एव एक एवान्तः एकान्तः तस्मिन् हरौ मनसा सन्ततगतिर्यस्य[1] स तथा । अत एवोद्गता निद्रा अज्ञानादिदोषपरंपरा यस्मात्स तथा । भस्मना अवगुंठिताग्निरिव गूढः मूढ इव[2] अज्ञ इव, ईयते दृश्यते, जनैरिति[3] शेषः । तस्मात्तद्दर्शनमसुलभमिति मन्य इत्यन्वयः ॥ ४ ॥

कुरुजांगलं कुरुविषयं प्राप्तः गजसाह्वये हस्तिनपुरे क्वचिदुन्मत्तवत् क्वचिन्मूकवत् क्वचिज्जडवद्वि-चरन् मुनिः पुरवासिभिः कथमालक्षितः, शुकत्वेनेति शेषः । पौरैरपि तज्ज्ञानं दुःशकं, किंपुनरन्तः पुरवासिभिः[4] ॥ ५ ॥

किंच परीक्षितः[5] तद्दर्शनानन्तरकालीनस्तेन सह संवादः सुतरामसुलभ इत्याशयवानाह— कथ-मिति । यत्र ययोः संवादे सात्वतो हरिः तत्संबंधिनी श्रुतिर्वर्तते तादृशः संवादः पाण्डवेयस्य राजर्षेः परीक्षितः तेन मुनिना सह कथं वा समभूत् । न कथमपि घटत इत्येकान्वयः ॥ ६ ॥

इतोऽपि तस्य तेन सह संवादो दुर्घट इत्याशयवानाह— स इति । तदाश्रमं तेषां गृहस्थानां सतां गृहं तीर्थीकुर्वन् स्वपादक्रमणेन पवित्रीकुर्वन् स महाभागः शुकः गृहमेधिनां गृहं गत्वा पाणिभिक्षामाचरन् गोदोहनमात्रं ततो नाधिकं अवाङ्मुखतया ईक्षमाणः[6] तिष्ठति, ततः परमन्यतो याति हि यस्मात्तस्मात् तद्दर्शनमसुलभमित्येकान्वयः ॥ ७ ॥

---

१ मनसः सन्ततगतिः - क घ छ ज । २ भस्मनावगूढः मूढ इव - क ग घ ङ ज ।
३ अज्ञेनेति - ग घ ङ छ ज ४ अन्तःपुरवासिनः परीक्षितः - ङ ५ अयं क ङ ड पाठः । अन्यत्र किंच परीक्षित इति पूर्वश्लोकव्याख्याने प्रविष्टम् । ६ एकमनाः - क ग घ छ ङ छ ज ।

अभिमन्युसुतं सूत प्राहुर्भागवतोत्तमम् ।
तस्य जन्म महाश्चर्यं कर्माणि च गृणीहि नः ॥ ८ ॥

स सम्राट् कस्य वा हेतोः पाण्डूनां मानवर्धनः ।
प्रायोपविष्टो गङ्गायामनादृत्याधिराट्श्रियम् ॥ ९ ॥

नमन्ति यत्पादनिकेतमात्मनः शिवाय चानीय धनानि शत्रवः ।
कथं स धीरः श्रियमङ्ग दुस्त्यजानियेष चोत्स्रष्टुमहो सहासुभिः ॥ १० ॥

शिवाय लोकस्य भवाय भूतये य उत्तमश्लोकपरायणा जनाः ।
जीवन्ति नात्मार्थमसौ परां श्रियं मुमोच निर्विद्य कुतः कलेवरम् ॥११॥

---

किञ्च हे सूत ! प्राज्ञाः अभिमन्युसुतं परीक्षितं भागवतश्रेष्ठं प्राहुः, ततः किमिति तत्राह – तस्येति । तस्य परीक्षितः महाश्चर्यं, श्रोतृणामिति शेषः । जन्म कलिबन्धनादीनि कर्माणि च अस्माकं गृणीहीत्यन्वयः ॥ ८ ॥

तस्य वैराग्यहेतुं पृच्छति– स सम्राडिति । पाण्डवानामभिमानवर्धनः सः सम्राट् अप्रतिहताज्ञश्चक्रवर्ती कस्य वा हेतोरधिराट्श्रियं चक्रवर्तिपदलक्ष्मीमनादृत्य तृणवत्कृत्वा गंगायां प्रायोपविष्टोऽभूदित्यन्वयः ॥ ९ ॥

एवंविधश्रीसंत्यागे महता कारणेन भवितव्यं, तत्किमित्याशंक्य इत्याह – नमन्तीति । शत्रवः मण्डलपतयः, आत्मनः शिवाय स्वकल्याणाय धनानि चानीय यस्य परीक्षितः पादयोर्निकेतं पीठाख्यस्थानं नमन्तीत्यन्वयः । अङ्ग सूत ! स धीरः असुभिः सह दुस्त्यजां श्रियं अधिराज्यसंज्ञां उत्स्रष्टुं हातुं इयेष ऐच्छत् अहो आश्चर्यमेतत् । अतो महता हेतुना भवितव्यं, तत्किमिति भावः ॥ १० ॥

पुनरपि तदेव पृच्छति – शिवायेति । ये उत्तमश्लोकपरायणा जनाः ते लोकस्य शिवादिप्राप्तये जीवन्ति । न स्वार्थं जीवन्तीत्यन्वयः । तस्मात्परार्थैकजीवनोऽसौ कस्मात्कारणात् परामुत्कृष्टां श्रियं निर्विद्य विरज्य कलेवरं देहं मुमोचेत्यन्वयः ॥ ११ ॥

---

१ संपद - क घ २ अयं जपाठः टीकानुसारी । अन्यत्र - वीरः ।
३ श्रीसङ्गत्यागे - क ग घ ङ छ ज ४ आशङ्क्याह - क ख ग ङ छ ५ स्वार्थे - ग घ

तत्सर्वं नः समाचक्ष्व पृष्टो यदिह किञ्चन ।
मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात् ॥ १२ ॥

सूत उवाच —
द्वापरे समनुप्राप्ते तृतीये युगपर्यये ।
जातः पराशराद्योगी वासव्यां कलया हरेः ॥ १३ ॥

स कदाचित्सरस्वत्या उपस्पृश्य जलं शुचिः ।
विविक्त एक आसीन उदिते रविमण्डले ॥ १४ ॥

परावरज्ञः स ऋषिः कालेनाव्यक्तरंहसा ।
युगधर्मव्यतिकरं प्राप्तं भुवि युगे युगे ॥ १५ ॥

---

इहास्यामवस्थायां प्रश्नराशौ वा[1], यत् किंचनप्रश्नैरूपं पृष्टस्त्वं तत्सर्वं किञ्चनेत्यनुवेरीकृत्य सम्यगाचक्ष्व । कुतः ? छान्दसाद्वेदविषयादन्यत्र पुराणादौ, वाचां विषये स्नातं निष्णातं मन्य इति यस्मात्त्वमादित्यन्वयः ॥ १२ ॥

कस्मिन् युगे इति प्रश्नं परिहरति– द्वापर इति । कृतयुगापेक्षया तृतीये द्वापरे युगे युगपर्यये युगपर्यवसाने समनुप्राप्ते सति हरेः कलयांशेन पराशरात् पराकृतः शरो हिंसा येन स तथोक्तः, तस्मात् वासव्यां वसोरुपरिचरस्य पुत्र्यां सत्यवत्यां योगी नित्यज्ञानी नाम्ना व्यासो जातोऽवतीर्णः । अतो द्वापरे युगपर्यवसाने भागवतप्रवृत्तिरिति भावः ॥ १३ ॥

अवतारप्रयोजनमाह– स कदाचिदिति । स व्यासो भगवान् शुचिः शुद्धः, कदाचित्सरस्वत्याः नद्याः जलं उपस्पृश्य सन्ध्याक्रियादिकं निवर्त्य, पश्चाद्रविमण्डले उदिते सति तत्तटे विविक्ते एकान्ते स्वाश्रम एवासीन एकाकी ॥ १४ ॥

परावरज्ञः कालत्रयज्ञानी स= सर्वतः सारः, सर्वोत्तमः ऋषिः ऋषिकुलावतीर्णः । परावरज्ञत्वे हेतुर्वा[3] । त्रिकालदर्शित्वादिति । अव्यक्तरंहसा अनभिव्यक्तवेगेन । भुवि युगे युगे प्राप्तं युगधर्मव्यति-

---

१ वाकारो नास्ति - क ग घ ङ छ ज    २ यत्किञ्चन पुनः प्रश्न - ङ ।

३ त्रिकालदर्शित्वाद्वेति - क ग घ ज छ ङ ।

भौतिकानां च भावानां शक्तिह्रासं च तत्कृतम् ।
अश्रद्दधानान्निःसत्वान् दुर्मेधान् ह्रसितायुषः ॥ १६ ॥
दुर्भगांश्च जनान्वीक्ष्य मुनिर्दिव्येन चक्षुषा ।
सर्ववर्णाश्रमाणां यद्दध्यौ चिरममोघदृक् ॥ १७ ॥
चातुर्होत्रं कर्मशुद्धिं[4] प्रजानां वीक्ष्य वैदिकम् ।
व्यदधाद्यज्ञसन्तत्यै वेदमेकं चतुर्विधम् ॥ १८ ॥
ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वार उद्धृताः ।
इतिहासपुराणं च पञ्चमो वेद उच्यते ॥ १९ ॥

---

करं युगधर्मसांकर्यं[1] तथा तत्कृतं कालकृतं, भौतिकानां भूतकार्याणां भावानां पदार्थानां शक्तिह्रासं चात एव जनांश्चाश्रद्दधानान् तात्पर्यशून्यान्निःसत्वान्निरुत्साहान्, दुष्टा मेधा येषां ते दुर्मेधास्तान् धारणा[2]शक्तिशून्यान् वा । 'एध' शब्दवदयमप्यकारान्तः । ह्रसितायुषः अल्पायुषः दुष्टभाग्यान्वीक्ष्य मुनिर्मौनवान् दिव्येन चक्षुषा अपरोक्षज्ञानेन सर्ववर्णाश्रमाणां यद्धितं तच्चिरं दध्यौ चिन्तितवानित्ये-कान्वयः । सर्वज्ञस्य चिरध्यानमज्ञदृष्ट्यपेक्षया दुष्टमोहनाय चेति ज्ञातव्यम् । अमोघदृक् अवन्ध्य-ज्ञानः[3] ॥ १५ ॥ १६ ॥ १७ ॥

एवं विचिन्त्यै[5] किं हितमपश्यदिति तत्राह– चातुर्होत्रमिति । चत्वारो होतारो होत्रध्वर्यू-द्गातृब्रह्माणो यस्मिंस्तत्तथोक्तम् । दशहोत्रादिचा[6]तुर्होत्रपर्यन्तैर्मन्त्रैः प्रकाश्यं वा अग्निष्टोमादिकं कर्म । प्रजानां वैदिकीनां शुद्धिं शुद्धिकरं, रागादिप्रयु[7]क्तिवर्जितं वा वीक्ष्य यज्ञसन्तत्यै अग्निष्टोमादियज्ञपरं-पराप्रवर्तनाय एकमविभक्तं वेदं ऋगादिभेदेन चतुर्विधं व्यदधादित्येकान्वयः । आदिमध्यावसानेषु हरिस्तुत्या तत्पूजात्वेन क्रियमाणं कर्म प्रजानां ज्ञानद्वारा शुद्धिकरमपश्यदिति भावः ॥ १८ ॥

कथं विभक्ता इति तत्राह – ऋगिति । वेदव्यासेन मूलवेदसमुद्रात् ऋग्यजुःसामाथर्वाख्या-श्चत्वारो वेदा उद्धृताः न तु कृताः । तदर्थज्ञानाय कृतं इतिहासपुराणं च वेदार्थविदकत्वात्पञ्चमो वेद इत्युच्यत 'पञ्चमो वेद' इत्युक्तेः । इतिहासादीनां शब्दतो रचनं, न त्वर्थतः तस्य नित्यत्वादिति ज्ञातव्यम् ॥ १९ ॥

---

१ युगधर्मव्यतिकरकालकृतं - ग ङ छ । २ धारण - ङ ।
३ एतदनन्तरं अचिन्त्य इत्यधिकपाठः - ग छ ङ ज । ४ शुद्धं - मूलश्लोके व्याख्याने च क ग पाठः ।
५ एवं विचिन्त्येति घपाठः, अन्यत्र नास्ति । ६ चतु - ग घ ङ ज । ७ प्रयुक्तीति क कोशे नास्ति ।

तत्रर्ग्वेदधरः पैलः सामगो जैमिनिः कविः[2] ।
वैशंपायन एवैको निष्णातो यजुषां ततः[1] ॥ २० ॥

अथर्वाङ्गिरसामासीत्सुमंतुर्दारुणो मुनिः ।
इतिहासपुराणानां पिता मे रोमहर्षणः ॥ २१ ॥

त एव ऋषयो वेदं स्वं स्वं व्यस्यन्ननेकधा ।
शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन् ॥२२॥

त एव वेदा दुर्मेधैर्धार्यन्ते पुरुषैर्यथा ।
एवं चकार भगवान् व्यासः कृपणवत्सलः ॥ २३ ॥

---

तत्र तेषां वेदानां मध्ये ऋग्वेदप्रवर्तकः पैलोऽभूदिति प्रत्येकमन्वयः । जिमिनेस्सापत्यं जैमिनिः । साम गायति शिष्येषु गमयति प्रवर्तयतीति वा सामगः । कविः सूक्ष्मज्ञानी । ततो जैमिनेरनन्तरं एकः प्रधानः वैशंपायन एव यजुर्वेदानां निष्णातः । प्रवर्तकतयेति शेषः । एव-शब्देन सूर्यादन्यः प्रतिषिध्यते, न तु सूर्यः तथा सति वक्ष्यमाणविरोधात्[3] ॥ २० ॥

वारुणो वरुणपुत्रः सुमन्तुर्नाम मुनिरथर्वाङ्गिरसां निष्णातः[4] अथर्ववेदानां प्रवर्तक आसीत् । मे पिता रोमहर्षणः इतिहासपुराणानां प्रवर्तकः ॥ २१ ॥

भगवदाज्ञापूर्वकं[5] चतुर्णां वेदानां शाखोपशाखाभेदेन ऋषिकृतविभागमाह– **त एवेति** । त एव पैलादयः ऋषयः स्वं स्वं वेदमनेकधा व्यस्यन् व्यभजन्नित्यन्वयः । ते वेदाः शिष्यप्रशिष्यादिभिः शाखिनः तन्नामपूर्वकशाखावन्तोऽभवन्नित्यन्वयः ॥ २२ ॥

व्यासनामनिर्वचनाशयवानाह[6]– **त एवेति** । दुर्मेधैः अल्पप्रज्ञैः पुरुषैः त एव वेदा यथा धार्यन्ते पठिताः अवधृतार्थाः क्रियन्ते एवं तथा शिष्यप्रशिष्यादिभिः शाखोपशाखाभेदेन चकार व्यस्यत्[7] । तस्मात् व्यास इति । किमर्थमिति तत्राह– कृपणवत्सलः दीनजनस्निग्धः ॥ २३ ॥

---

१ मुने - क छ २ जैमिनस्य - क ख घ ङ च छ ।

३ वक्ष्यमाणाविरोधात् - छ ङ ।

४ अयं पाठः मूलकोशे, क ग कोशयोश्च । अन्यत्र नास्ति ।

५ भगवदाज्ञापूर्वप्रवर्तकं - ङ । भगवदाज्ञाप्रवर्तकं - क छ ।

६ अयं ख ङ पाठः । अन्यत्र - निर्वचनायाह । ७ व्यवस्यत् चकार-क । व्यस्यन् चकार - ख ।

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ।
इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ २४ ॥

एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः ।
सर्वात्मकेनापि यदा नातुष्यत् हृदयं ततः ॥ २५ ॥

नातिप्रसन्नहृदयः सरस्वत्यास्तटे शुचौ ।
वितर्कयन्विविक्तस्थ इदं चोवाच धर्मवित् ॥ २६ ॥

---

एवं भगवदुक्तानां त्रैवर्णिकानां वैदिककर्मानुष्ठानेन शुद्धान्तःकरणानामधोक्षजोपासनजनितज्ञानेन मुक्तिः स्यादिति व्यासेन स्थापितम् । तदनधिकारिणां स्त्रीशूद्रादीनां हरिभजनं कुत्रोक्तोपायेनेत्याकाङ्क्षायामाह—स्त्रीशूद्रेति । वेदोक्तकर्माख्यश्रेयसि पुरुषार्थसाधने मूढानामत एवानधिकारिणां स्त्रीशूद्रद्विजाधमानां त्रयी त्रयो वेदाः श्रोतुं न योग्या इति यस्मादत एवं मया करिष्यमाणभारतादिशास्त्रोक्तविधिना इह जने श्रेयो भवेदिति कृपया मुनिना सर्वज्ञेन व्यासेन भारतमाख्यानं कृतमित्यन्वयः । अत्रैतत्प्रमेयमवगन्तव्यम् । स्त्रीशूद्रादिकृपया भगवता भारताख्यानस्य कृतत्वात्तेषामेव तत्राधिकारो नान्येषामिति शङ्का माभूत् । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वचनात् ब्राह्मणादीनामपि[1] वेदार्थपरिज्ञानाय भारताद्यभ्यासस्य आवश्यकत्वेनोक्तत्वादुभयत्राधिकारो युज्यते । तेषां स्त्रीशूद्रादीनां तु गत्यन्तराभावात्तदुक्तानुष्ठानेन मुक्तिरिति भावः ॥ २४ ॥

केन हेतुना कुतः संचोदितः इति प्रश्नं परिहरिष्यन् प्रायः कृतावतारकार्यस्य दुर्जनान् मोहयतो व्यासस्य लोकानुकरणप्रकारमाह— एवमित्यादिना । हे द्विजाः, भूतानां सदा श्रेयसि नित्य[2]मुक्तिसाधने एवं प्रवृत्तस्यापि यदा हृदयं सर्वात्मकेन नातुष्यत् मे मनः अवतारप्रयोजनेन सर्वप्रकारेणालमित्यलंबुद्धिं नाप । ततस्तदा ॥ २५ ॥

धर्मज्ञानी नातिप्रसन्नहृदयः अवतारप्रयोजनानलंबुद्धिमान् सरस्वत्यास्तटे तत्रापि शुचौ देशे विविक्तस्थ एकान्ते तिष्ठन् लोकदृष्ट्याऽनलंबुद्धिकारणं किंवेति[4] विविधं तर्कयन् विचारयन्निदं च वक्ष्यमाणमेवात्मानं प्रत्युवाचेत्यन्वयः ॥ २६ ॥

---

१ ब्रह्मादीनामपि - ङ छ । २ नित्यं - क ।
३ प्रोवाचेत्यन्यत्र पाठः । स च टीकाननुगुणः । ४ किंवेति - क ठ छ ज ।

धृतव्रतेन हि मया छन्दांसि गुरवोऽग्नयः ।
मानिता निर्व्यलीकेन गृहीतं चानुशासनम् ॥ २७ ॥
भारतव्यपदेशेन ह्याम्नायार्थः प्रदर्शितः ।
दृश्यते यत्र धर्मो[1] हि स्त्रीशूद्रादिभिरप्युत ॥ २८ ॥
अथापि बत मे दैह्यो ह्यात्मा चैवात्मना विभुः ।
असंपन्न इवाभाति ब्रह्मवर्चस्विसत्तमः ॥ २९ ॥
किं वा भागवता धर्मा न प्रायेण निरूपिताः ।
प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः ॥ ३० ॥
तस्यैवं खिन्नमात्मानं मन्यमानस्य खिद्यतः ।
कृष्णस्य नारदोऽभ्यागादाश्रमं प्रागुदाहृतम् ॥ ३१ ॥

धृतव्रतेन लौकिकाचारापेक्षया वेदव्रतधारणवता[2] मया निर्व्यलीकेन निर्व्याजेन, चेतसेति शेषः । छन्दांसि वेदाः, गुरवोऽध्यापकाः त्रेताग्नयः मानिताः सत्कृताः, अनुशासनमाज्ञा च गृहीता । हिशब्देन विप्रादिभिर्वेदव्रतादिवैदिककर्मावश्यं कर्तव्यमिति दर्शयति ॥ २७ ॥

यत्र भारते स्त्रीशूद्रादिभिरपि त्रैवर्णिकैरुतानुष्ठेयो धर्मो दृश्यते, तस्य भारतस्य करणेनाम्नायार्थः वेदादिसंप्रदायार्थः प्रदर्शितो हि । तत्र किञ्चिदुर्वरितं नास्तीत्यर्थः ॥ २८ ॥

अथापि भारतकृत्या आम्नायार्थप्रदर्शनानन्तरमपि दैह्यो[3] देहरूप आत्मा आत्मना स्वत एव विभुर्व्याप्तो मे ममात्मावतारप्रयोजनासंपत्या असंपन्नः अप्राप्तप्रयोजन इवाभाति । कीदृशः ? ब्रह्मवर्चस्विसत्तमः वृत्ताध्ययनसम्पन्नानां मध्ये श्रेष्ठ इत्यन्वयः । 'ब्रह्मवर्चस्यसत्तम' इति पाठेप्ययमेवार्थः ॥२९॥

प्राय इदमेवानलंबुद्धौ कारणमाह— किं वेति । भागवता धर्माः प्रायेण न निरूपिताः । किं वा भारते निरूपिता अपि पुनः शास्त्रान्तरेण निरूपणीयाइत्यतः प्रायेणेत्युक्तम् । किंविशिष्टाः ? परमहंसानां प्रियाः । ततः किं ? ते परमहंसा एवाच्युतप्रिया हि यस्मात्तस्मादसंपन्न[4] इवाभातीति भावः ॥ ३० ॥

'केनचित्प्रेरित एव महापुरुषः स्वकार्ये प्रवर्तत' इति न्यायात् भागवतकृतिरेवालंबुद्धिहेतुरिति निश्चयवानपि नारदप्रेरितः भागवतमकार्षीदिति नारदस्य लोके महती कीर्तिः स्यादिति भक्तवत्सल-

---

१ धर्मादिः- क ग ङ छ ज । टीकाननुगुणोऽयं पाठः । २ धारणावता - ग ङ ।
३ प्रचलितपाठोऽयं । मूलकोशे - देह्यः । आत्मेति च तत्र नास्ति । ४ तस्मादिति नास्ति - क घ

तमभिज्ञाय सहसा प्रत्युत्थायागतं मुनिम् ।
पूजयामास विधिवन्नारदं सुरपूजितम् ॥ ३२ ॥

इति प्रथमस्कन्धे चतुर्थोऽध्यायः

* * *

अथ पञ्चमोऽध्यायः

सूत उवाच —

अथ तं सुखमासीन उपासीनं बृहच्छ्रवाः ।
देवर्षिः प्राह विप्रर्षिं वीणापाणिः स्मयन्निव ॥ १ ॥

नारद उवाच —

पाराशर्य महाभाग भवतः कच्चिदात्मना ।
परितुष्यति शारीर आत्मा मानस एव वा ॥ २ ॥

---

त्वागन्तुर[illegible]गमनमाकांक्षमाणं व्यासं प्रति तदागमनमाह– तस्येति । खिन्नं अलंबुद्धिमप्राप्तं अत एव खिद्यतः अनलं बुद्धिगतस्य ॥ ३१ ॥

अभिज्ञाय संज्ञापूर्वकं विज्ञाय, सहसा कालक्षेपमन्तरेण । सरस्वतीतीरवर्तिस्वाश्रमस्थितो भागवतधर्मज्ञापनहेतोर्नारदेन चोदितः श्रीकृष्णो भागवतसंहितामकरोदिति शौनकप्रश्नपरिहारः ॥ ३२ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुविरचितायां प्रथमस्कन्धे चतुर्थोऽध्यायः ॥

अथार्घ्यपाद्यादिसमर्हणानन्तरं सुखमुपविष्टो विस्तृतकीर्तिः वीणा महती नाम पाणौ यस्य स तथोक्तः । मन्दस्मितं कुर्वन्निव प्रसन्नवदनो देवर्षिः समीप उपविष्टं तं विप्रर्षिं व्यासं प्राहेत्येकान्वयः ॥

विज्ञातभगवदभिप्रायः तदनुकरणा[२]नुगुणानुकरणवान्नारदो नित्यकुशलं तस्य संजानन्नपि तदनु-[illegible] कुशलं पृच्छतीत्याह– पाराशर्येति । महाभाग ऐश्वर्याद्यनन्तभाग्यनिधे, पाराशर्य पराशरपुत्र, भवतः आत्मा मानसो वा, शरीररूपो मनोरूपो वा । भेदाभावादेव[illegible]युक्तिः । आत्मना अव[illegible]प्रयोजनकृ[३]त्यात्मना स्वत एव परितुष्यति कच्चित् ? स्वतन्त्रतया कृतावतारकार्यत्वात्परितुष्यती-त्यवे[४]कारार्थः ॥ २ ॥

---

[१] [illegible] पाठोऽयम् । अन्यत्र - अनलं बुद्धिनाशम् । तत्र पौनरुक्त्यम् । [२] अनुगुणेति नास्ति - ग ङ ।
[३] प्रयोजन कृत्वा - क घ ङ छ । [४] परितुष्यत्येवेत्येवकारार्थ इति भाव्यमिति भाति ।

जिज्ञासितं सुसंपन्नमपि ते महदद्भुतम् ।
कृतवान्भारतं यस्त्वं सर्वार्थपरिबृंहितम् ॥ ३ ॥
जिज्ञासितमधीतञ्च ब्रह्म यत्तत्सनातनम् ।
तथापि शोचस्यात्मानमकृतार्थ इव प्रभो ॥ ४ ॥

व्यास उवाच —

अस्त्येव मे सर्वमिदं त्वयोक्तं तथापि नात्मा परितुष्यते मे ।
तन्मूलमव्यक्तमगाधबोधं पृच्छामहे त्वाऽऽत्मभवात्मभूतम् ॥ ५ ॥

---

कुत इति तत्राह— जिज्ञासितमित्यादि । यस्त्वं धर्मादिसर्वपुरुषार्थैः बृंहितं[1] पूर्णं भारतं कृतवांस्तेन ते त्वया सुसंपन्नं-सुखपूर्णमद्भुतं सर्वस्मादाश्चर्यतमं अत्र रुद्रो यस्मादभूत्[2] यच्चदद्भुतम्[3] । महत् देशतः कालतः गुणतश्चापरिच्छिन्नं ब्रह्म जिज्ञासितं विचारितम् । अपिशब्दो वक्ष्यमाणसमुच्चये । शब्दतः अर्थतोपि महत् अद्भुतं गहनं 'व्यवहारे धने शास्त्रे वस्तुहेतुनिवृत्तिषु' इति वचनात् तन्त्रन्यायेन अर्थशब्दस्य द्विरावृत्या सर्वशास्त्रार्थपरिबृंहितं[4] कृतवानिति यत् तेन लोकानां ज्ञातुमिष्टं सुष्ठु संपूर्णम्[5] अभूदिति वा ॥ ३ ॥

किञ्च यच्च उपाध्यायपरंपरया भवता अधीतं सनातनं नित्यं वेदात्मकं शब्दब्रह्म, तदपि जिज्ञासितं विचारितम् । तस्मात् कृतावतारकार्योऽसि[6] । तत एव नातुष्टिकारणं पश्यामीत्यर्थः । तथाऽपि एवमपि कृतावतारकार्योऽपि अकृतावतारप्रयोजन इव आत्मानं शोचसि प्रकाशयसि । हे प्रभो प्रभूतज्ञान ! इत्यन्वयः ॥ ४ ॥

एवं नारदेन पृष्टोऽपरिमितज्ञानशक्तिस्वल्पोप्यज्ञवद्दुष्टजनमोहनाय तत्कारणं तमेव पृच्छतीत्याह— अस्त्येवेति । हे नारद ! त्वयोक्तमिदं सर्वं मे अस्त्येव । न किञ्चिदवशिष्टमस्ति । तथाऽपि मे आत्मा मनः न परितुष्यते । नालन्बुद्धिं प्राप्नोति । तुष्यतीति वक्तव्ये तुष्यत इति प्रयोगात् अज्ञजनमोहनार्थमेव हरिणा प्रश्नः क्रियते नाज्ञानात् इति महान् विशेषो विज्ञायते । आत्मनः विष्णोः भवतीति आत्मभवः ब्रह्मा । तस्य आत्मनः शरीरात् उद्भूतः उत्पन्नः आत्मभवात्मभूतः ब्रह्मपुत्र

---

१ पुरुषार्थबृंहित - क ग घ ङ छ ज    २ यस्माद् भवति - क ग घ ज ।
३ यस्मात्तदद्भुतं - ङ छ    ४ शास्त्रेति अर्थशब्दार्थः ।    ५ सुपूर्णम् - क ग घ ङ छ ज ।
६ कार्योऽपि - क ख ग घ ङ छ ज    ७ अयमर्थः भागवततात्पर्योक्तिः ।

स वै भवान् वेद समस्तगुह्यं उपासितो यः पुरुषः पुराणः ।
परावरेशो मनसैव विश्वं सृजत्यवत्यत्ति गुणैरसङ्गः ॥ ६ ॥
त्वं पर्यटन्नर्क इव त्रिलोकीमन्तश्चरो वायुरिवात्मसाक्षी ।
परावरे ब्रह्मणि धर्मतो व्रतैस्स्नातस्य मे न्यूनमलं विचक्ष्व ॥ ७ ॥

---

इत्यर्थः ॥ आत्मभाविनो ममेति वा[1] । तं त्वां । अव्यक्तं सूक्ष्मं तस्य अपरितोषस्य मूलं कारणं पृच्छामहे । अल्पज्ञश्चेत् प्रश्नोत्तरं कथं ब्रूयादिति तत्राह — अगाधेति । अपरिमितज्ञानं, प्रश्नोत्तरवचनसमर्थमित्यर्थः । अत्रापि समित्युपसर्गमन्तरेण पृच्छतेरात्मनेपदप्रयोगेण नारदस्य ज्ञानं चुलुके[2]जलपरिमितं, व्यासज्ञानं तु प्रत्यक्समुद्रवदपरिमितमिति तात्पर्यं शब्दज्ञैरेव विज्ञायते । आत्मभुवात्मभूतमिति केचित्पठन्ति । तत्रोवङ्भावदेशः छान्दसः ॥ ५ ॥

नारदस्य स्वात्मानलंबुद्धिहेतुवेदनकारणं वक्तीत्याह— स वा इति । यो गुणैः विरचितशरीरगतसुखदुःखादिफलसङ्गरहितः विश्वं मनसैव स्वतन्त्रसाधनान्तरनिरपेक्षतया सृजति अवति संहरति सः परावरयोः मुक्तामुक्तप्रपञ्चयोः ईष्ट इति परावरेशः । जगदुत्पत्तेः पुराप्यस्तीति पुराणः । पुरं अणतीति वा । पुरूणि कर्मफलानि सनोति ददातीति पुरुषः उपासित इति यत् अतः स भवान् समस्तगुह्यं वेद वा[3] इत्येकान्वयः ॥ एतदुक्तं भवति । चतुर्मुखप्रियपुत्रत्वात् तवैव सर्वजगत्सृष्ट्यादिकर्तृभगवदुपासकत्वेन सर्वज्ञत्वात् तत्प्रसादात् अस्मदनलंबुद्धिहेतुवेदनमस्तीति ॥ ६ ॥

भगवत्प्रसाद[4]जनितापरोक्षज्ञानेन सर्वत्राव्याहतगतिकर्मणा च योगप्रभावेन सर्वप्राणिशरीरान्तश्चरणेन च अनलंबुद्धिहेतुवित्त्वमाह — त्वमिति । त्रिलोकीं पर्यटन्नर्क इव त्रिलोक्यामव्याहतगतिः । सर्वप्राण्यन्तश्चरो वायुरिव आत्मसाक्षी सर्वजीवबुद्धिनर्तिवृत्तज्ञः त्वं परे ब्रह्मणि तथा अवरे तत्प्रतिपादकवेदाख्यशब्दब्रह्मणि च[5] धर्मतः वेदोक्तभगवद्धर्मानुष्ठानेन तदधिकारापादक[6]वेदव्रतादिमिश्च अनुष्ठापितैः लोकमोहाय च मया अनुष्ठितैः स्नातस्य कृतकृत्यस्य मे अवतारप्रयोजनं न्यूनं नितरां उर्वरितं अलं यथा भवति तथा विचक्ष्व विशिष्टतया ब्रूहीत्येकान्वयः ॥ ७ ॥

---

१ आत्मनि भवतीति वा - क । आत्मभावेति वा - ज । आत्मभवेति वा - ग घ ङ ।

२ चुलुकस्य - ङ ३ वा इति नास्ति - क ग घ ङ छ ज ।

४ तव भगवत्प्रसादेन - क घ ङ छ ज । तत्र भगवत्प्रसादेन - ग ।

५ चकारो नास्ति - क ग घ छ ज ६ तदधिकारोपपादकः - क ग घ ङ छ ज ।

नारद उवाच —

भवतानुदितप्रायं यशो भगवतोऽमलम् ।
येनैवासौ न तुष्येत मन्ये तद्दर्शनं खिलम् ॥ ८ ॥

यथा धर्मादयो ह्यर्था मुनिवर्यानुवर्णिताः[1] ।
न तथा वासुदेवस्य महिमा ह्यनुवर्णितः ॥ ९ ॥

न तद्वचश्चित्रपदं[2] हरेर्यशो जगत्पवित्रं न[3] गृणीत कर्हिचित् ।
तद्वायसं तीर्थमुशन्ति मानसा न यत्र हंसा न्यपतन्निमंक्षया ॥ १० ॥

---

नारदोपि सर्वज्ञस्य व्यासस्य हृदिस्थिताभिप्रायं विद्वान् कृष्णावतारप्रयोजनं वक्तीत्याह — भवतेति । हे व्यास ! भवता भगवतः हरेः अमलं यशः अनुदितप्रायं । बाहुल्येन[4] न प्रतिपादितम् । येन अनुदितेन यशःप्रतिपादकशास्त्रेण असौ भक्तः आत्मा नैव तुष्यते[5] । अहं तस्य यशसः प्रतिपादकं शास्त्रं खिलं उर्वरितं मन्ये इत्यन्वयः ॥ ८ ॥

भारतादिशास्त्रेषु हरियशसो बहूदितत्वात् कथं खिलं मन्य इत्युच्यत इति तत्राह यथेति । हे मुनिवर्य सर्वज्ञतम ! मुनिभिः व्रियत[6] इति वा, मुनिवरप्राप्य इति वा, मुनिवर्यः । धर्मादयः पुरुषार्थाः यथानुवर्णितास्तथा वासुदेवस्य महिमा नानुवर्णितो हि यस्मात्तस्मादनुवर्णनीयः । धर्मादीनामल्पकथनेनापि पूर्तिः स्यात् । न तथा वासुदेवस्य महिम्नः भारतादावतिकथितस्यापि । सतां तत्र तात्पर्यातिशयात् फलाधिक्याच्च । नहि सूर्योदयमाकांक्षमाणस्य खद्योतोदयेनेच्छा निवर्तत इत्येतमर्थं 'हि'शब्देनाह । द्वितीयो 'हि'शब्दो हेत्वर्थः ॥ ९ ॥

धर्मादीनां अल्पकथनेन कथं पूर्तिः स्यादिति तत्राह —नेति । यद्वचो जगत्पवित्रं जगत्पावनकरं हरेर्यशो न गृणीत कर्हिचिदपि[7] न प्रतिपादयेत् तत् चित्रपदमपि चित्राणि पदानि यस्मिंस्तत्तथोक्तं,

---

१ कीर्तिताः- क ग घ ङ  २ यद्वचः - क ग ज  ३ प्र - छ ।
४ बहुत्वेन - क ग घ ङ छ ज  ५ तुष्येत - क ग घ ङ छ ज ।
६ त्रायते - ग घ ङ छ  ७ कदाचित् - ङ छ ।

स वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि ।
नामान्यनन्तस्य[1] यशोऽङ्कितानि शृण्वन्ति[2] गायन्ति गृणन्ति साधवः ॥११॥

नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम् ॥ १२ ॥

---

[3]वचो न । वक्ति प्रतिपादयति तत्वमिति वचः, शास्त्रं तन्न भवतीत्यर्थः । कुतः तद्वायसं वयोमात्रानुजीवि तीर्थं शास्त्रं उशन्ति इच्छन्ति । यत्र काकोच्छिष्टतीर्थे मानसाः प्रेक्षावन्तः मानसाख्यसरोविहारिणो वा हंसाः परमहंसाः धवलपक्षा वा जलपयोविवेककारिणः मिमंक्षया विचारलक्षणस्नानेच्छया न न्यपतन् न निपतन्ति न प्रविशन्ति । तथा यत्र यस्मिन् तीर्थे [4]शास्त्रे मानसा ब्रह्मणो मनसो जाताः सनकादयः हंसाः निर्लेपा इति वा । तस्मात् सज्जनानादरणीयत्वेन धर्मादीनामल्पकथनेन न पूर्तिरिति भावः । निरमन्त्युशिक्क्षयाः उशिक् शुद्धं, क्षयं[5]ः स्थानं येषां ते तथोक्ताः । शुद्धं ब्रह्म तदेव क्षयो येषां ते तथोक्ता इति वेति पठित्वा केचिद्व्याचक्षते तच्चिन्त्यम् ॥ १० ॥

वासुदेवमहिम्नोऽतिकथितत्वापि कथं [6]अपूर्तिरिति तत्राह – स वागिति । यस्मिन्निबन्धे प्रतिश्लोकमपशब्दाद्यबद्धवत्यपि शाब्दिकैर्जुगुप्सिते देश–काल–गुणैरनन्तस्य हरेः पारिजातहरणाद्यात्मकयशोलाञ्छितानि नारायणादिनामानि सन्ति, साधवः परमभागवताः शुकादयो यच्च शृण्वन्ति, गायन्ति, गृणन्ति स जनतायाः जनसमूहस्याघं पापं विप्लावयति नाशयतीति जनताघविप्लवः, वाचां विसर्गः विशिष्टरचनाविशेष इत्येकान्वयः । यस्मिन् सन्ति प्रशस्तानि अनन्तस्य नामानि साधवः शृण्वन्तीति यत् यस्माच्चसावेस एव वाग्विसर्ग इति वा । जनतापापविनाशहेतुत्वात् सज्जनगृहीतत्वाच्च वासुदेवमाहात्म्यप्रतिपादकमेव शास्त्रं नान्यदतस्तदेव शास्त्रप्रणेतृभी रचनीयमिति भावः ॥ ११ ॥

न केवलं वासुदेवमहिमद्योतकयशोऽङ्कविधुरशास्त्ररचन[7]मेव मोघं किन्तु हरिभक्तिविरहितनिर्निमित्तज्ञानकर्मणी अपि निष्फले एवेति विज्ञापयतीत्याह – नैष्कर्म्यमिति । नैष्कर्म्यं स्वतो निष्कर्मणो मुक्तेः साधनं अलं निरञ्जनं विषयसं[8]सर्गार्जनमलरहितं अत्यन्तविरक्तिमत् वेदा[9]द्यर्थविषयं परोक्ष-

---

१ अनन्तानि - ङ . २ अयं ङ पाठः । अन्यत्र यच्छृण्वन्तीति ।

३ तद्वचो - घ ज । तद्वचः शास्त्रं न भवतीत्यर्थः - क ।

४ शास्त्रे इति ङ पाठः । अन्यत्र नास्ति ५ ङ ड पाठोऽयम् । अन्यत्र क्षयमिति ।

६ नपूर्तिः- क घ ङ छ ज ७ वचनमेव - ग ८ विषयसंमार्जन - क ग घ ज ।

९ ग घ छ ज ड पाठोऽयम् । अन्यत्र - वेदार्थविषयम् ।

अतो महाभाग भवानमोघदृक् शुचिश्रवाः सत्यरतो धृतव्रतः ।
उरुक्रमस्याखिलबन्धमुक्तये समाधिनाऽनुस्मर यद्विचेष्टितम् ॥ १३ ॥

अतोऽन्यथा किञ्चन यद्विवक्षितं पृथग्दृशस्तत्कृतरूपनामभिः ।
न कर्हिचित्क्वापि च दुःस्थितामतिर्लभेत वाताहतनौरिवास्पदम् ॥१४॥

---

ज्ञानमप्यच्युतभाववर्जितं भगवद्भक्तिरहितं हरावच्युततया निरन्तरभावनया मनोयोजनेन रहितं चा न शोभते अधिकारिणोभीष्टफलं न प्रकाशयति, बन्धकतया शश्वत्सर्वदाऽभद्रममंगलं ईश्वरे हरौ न चार्पितं कर्म न शोभत इति कुतः पुनः किन्तु वक्तव्यम् । यद्यप्यकारणं फलकामनादिविधुरं तथापीत्यर्थः । शश्वदभद्रमनुष्ठानकाले फलकाले च[1] अमङ्गलं यत्काम्यं कर्म तन्न शोभत इति कुतः पुनः । यदप्यकारणं नित्यं कर्म हरौ नार्पितं चेत्तच्च न शोभत इति किं वक्तव्यमिति वा । अच्युतभाववर्जितमित्यनेनापरोक्ष-ज्ञानस्य भक्तिसाध्यत्वात्परोक्षोपपदमेवात्र ज्ञानं विवक्षितमिति ज्ञायते ॥ १२ ॥

अधुनालंबुद्धिहेतुं विज्ञापयतीत्याह– अत इति । महाभाग अपरिमितभाग्यनिधे, उक्त-प्रकारेण कर्मज्ञानयोर्हरिभक्तिरहितयोर्निष्फलत्वाद्धर्मादीनामल्पकथनेनापि[2] पूर्तिर्भगवन्महिम्नातिकथितेनाप्य-पूर्तिरेवेति यतोऽतः साक्षाच्छुचिश्रवाः विष्णुरेवात एव सत्ये निर्दुःखानन्दानुभवे रतः अत एव शरणागतपालनादिधृतं व्रतं येन स तथा । अत एवामोघज्ञानोऽत एव भवान्पूज्यस्त्वं सकलसज्जनसंसार-बन्धनविध्वंसनाय उरुक्रमस्य बहुलपराक्रमस्य तव यज्जगत्सृष्टिपालनादिविशिष्टचेष्टितं तत्समाधिना दर्शनगुह्यसमाधिभेदेन त्रिधा भिन्नानां भाषाणां[3] मध्ये यथास्थितवस्तुकथनलक्षणया समाधिभाषयानुस्मर भगवन्महिमाप्रतिपादकश्रीभागवताख्यग्रन्थं कुरु । तेन कृतावताप्रयोजनालंबुद्धिर्भविष्यसीति भावः । 'अखिलधर्मगुप्तये' इति पाठे समस्तभागवतधर्मरक्षणायेत्यर्थः ॥ १३ ॥

केवलधर्मादिविषयशास्त्रकृत्यानर्थोऽपि भवतीति विज्ञापयतीत्याह– अतोन्यथेति । अतः[4] भगवन्महिम्नोऽन्यथा विरुद्धतया यद्धर्मादिपुरुषार्थकथनाय विवक्षितं तत्किञ्चन यत्किञ्चित्र पुरुषार्थोपयोगि । कुतस्तत्कृतरूपनामभिस्तस्मिन् ग्रन्थे धर्मादिफलत्वेन प्रतिपादितस्वर्गादिगतलावण्यादिरूपमदनकलि-

---

१ चकारो नास्ति - क ग घ छ ज २ धर्मादिभिरल्पकृतैरपि - ख ग ड ।
३ भाषाणामिति ड पाठः । अन्यत्र नास्ति । ४ अत एव - क ग घ ज ।

जुगुप्सितं धर्मकृतेऽनुशासनं स्वभावरक्तस्य महान् व्यतिक्रमः ।
यद्वाक्यतो धर्म इतीतरस्थितो न मन्यते तस्य निवारणं जनः ॥ १५ ॥

विचक्षणोऽस्यार्हति वेदितुं विभोरनन्तपारस्य निवृत्तितः सुखम् ।
प्रवर्तमानस्य गुणैरनात्मनस्ततो भवान्दर्शय चेष्टितं विभोः ॥ १६ ॥

---

केत्यादिनामवत्पदार्थैः पृथग्दृशः 'ते मम सुखहेतव' इति वस्त्वयथार्थज्ञानिनो रागादिदोषदुष्टत्वेन स्थिता[1] मतिः कर्हिचित्क्वापि कस्मिंश्चिद्विषयेऽपि समुद्रे वातेन वायुना आहता विघटिता नौस्तरीवास्पदमाश्रयं न लभेतेत्येकान्वयः । तस्मात्केवलधर्मादिविषयशास्त्रकृतिरनर्थकरीति भावः । अतोऽन्यथा श्रीभागवत-कृतिमन्तरेण यत्किञ्चनग्रन्थकरणं विवक्षितं, तत् ग्रन्थकल्पितरूपनामभिर्मुग्धस्येति वा । चशब्दान्नरक-पातफलमेव स्यादिति सूचयति ॥ १४ ॥

न केवलं अनर्थकार्येव[2] भवेदन्येषां निन्दिताधर्मकारि[3] चेति विज्ञापयति[4]– जुगुप्सितमिति । स्वत एव प्रवृत्तिधर्मादिषु रागिणो जनस्य प्रवृत्तिधर्मादिकृतेऽनुशासनं कुर्विति प्रेरणं जुगुप्सितम् । त्वादृशैरिति शेषः । न केवलं निन्दितं किन्तु महान्व्यतिक्रमः । वृक्षादधः पतितस्य दण्डेन ताडन-वन्निःसीमोऽन्यायः[6] । कुतः 'स यत्प्रमाणं कुरुत' इति न्यायात् । यद्वाक्यतो धर्म इति तस्य जनस्य इतरस्थितो जनो निवारणं न मन्यते इत्यन्वयः । यस्य भवादृशस्य वचनाद्धर्मोऽयमित्यनुष्ठितस्तस्य प्रवृत्तिमार्गस्थितस्य जनस्येतरस्मिन्निवृत्तिमार्गे स्थितः जनः शुकादिः 'नायं धर्मः न चरते'ति निवारणं न करोति, तस्मात्तादृशग्रन्थकृतिरनपेक्षितेति भावः[7] ॥ १५ ॥

समाधिभाषात्मकग्रन्थेऽधिकार्यभावादुपरम्यत[8] इति न वक्तव्यमिति विज्ञापयति– विचक्षण इति । निवृत्तितो गुणैः प्रवर्तमानस्यानात्मनोऽस्याऽनन्तपारस्य[9] विभोः सुखं विचक्षणो वेदितुमर्हति यस्माच्चतो भवान् पूज्यस्त्वं विभोश्चेष्टितं दर्शयेत्येकान्वयः । अनुष्ठितनिवृत्तिधर्मात्सत्त्वादिगुणैर्जगत्सृष्ट्यादौ प्रवर्तमानस्या-स्वामिकार्यस्यास्य[10] जीवस्यापरिमितपूर्तेर्विभोर्भगवतः सकाशात् यद्भविष्यत्सुखं भवति तत्सुखं विचक्षणो

---

१ दुःस्थिता - घ छ ज    २ कर्येव - ग    ३ अयं ग घ ज पाठः । अन्यत्र - कारी ।
४ जकोशेऽप्ययं पाठः । अन्यत्र ज्ञापयति ।
५ अज्ञस्य - क ग घ ङ छ ज    ६ ताडनमिव - ख
७ इतः परं 'यद्वाक्यत इति ..... कृपालोर्धर्म एवेति भावः' इत्यधिकः पाठः क कोशे स च यादुपत्यादुद्धृत्य निवेशितः ।    ८ ग्रन्थाधि - ङ । ग्रन्थोऽधि - ख ।
९ अयं ङ पाठः । अन्यत्र अस्येति नास्ति ।    १० अस्वामिकस्य - ख ङ

त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदि ।
यत्र क्व वा भद्रमभूदमुष्य को वार्थ आप्तो भजतां स्वधर्मम् ॥ १७ ॥

तस्यैव हेतोः प्रयतेत कोविदो न लभ्यते यद्भ्रमतामुपर्यधः ।
तल्लभ्यते(ऽ)दुःखवदन्यतः सुखं कालेन सर्वत्र गभीररंहसा ॥ १८ ॥

---

विशिष्टाचारः[1] सात्विकप्रकृतिर्ज्ञातुं योग्य इति यस्मात्तस्माद्विभोः सर्वगस्य हरेश्चरितं समाधिभाषात्मकग्रन्थ-करणेन ज्ञापयेत्यतोऽधिकार्यभावान्नोपरन्तव्यमिति भावः । अनात्मनो बुध्यादेर्गुणैः सत्वादिभिः शब्दादिषु प्रवर्तमानस्य जनस्य सुखाय विभोश्चेष्टितं दर्शयेति वा ॥ १६ ॥

इतोपि प्रवृत्तिधर्मोपदेशान्निवृत्तिधर्मोपदेशो वरीयानित्याह— त्यक्त्वेति । अथ स्वधर्मं त्यक्त्वा हरेश्चरणांबुजं भजंस्ततः यद्यपक्वः पतेत्तदमुष्य यत्र क्व वा भद्रमभूत् स्वधर्मं भजतां को वा अर्थ आप्त इत्येकान्वयः । भगवद्विषयस्वधर्मानुष्ठानात्मकप्रवृत्तिधर्मं त्यक्त्वा निवृत्तिधर्मविधायकशास्त्रोक्ताचारैः हरेः पादपद्मं सेवमानः पुरुषस्तत्सादनविगतापरोक्षज्ञानादितत्फलपरिपाकः रागाद्यन्तरायविहतः स्खलेत् तथाप्यमुष्य पुंसः 'क्षिप्रं भवति धर्मात्मा' इत्यादिप्रमाणाद्यत्र क्व वा जन्मान्तरे श्रीमदादिकुलोद्भूतस्य निवृत्तिधर्मात्मकं भद्रं 'एष्यत्तु निश्चितं यत्तद्गतीतत्वेन भण्यत' इति वचनादभूद्धविष्यत्येव । केवलं प्रवृत्तिधर्मं भजतामनुतिष्ठतामस्खलनेपि धर्मादिषु को वा पुरुषार्थ आप्तो न कोऽपीति भावः । तस्मा-न्निवृत्तिधर्मविधायकशास्त्रं भवान् करोत्विति प्रार्थये ॥ १७ ॥

तस्माद्विवेकिना प्रवृत्तिधर्मं विहाय निवृत्तिधर्म एवानुष्ठेय इत्याह— तस्येति । कोविदस्तस्यैव हेतोः प्रयतेत, उपर्यधो भ्रमतां यन्न लभ्यते । गभीररंहसा कालेनान्यतः सर्वत्र तद्दुःखवत् सुखं लभ्यत इत्येकान्वयः । अनन्तपारस्येति हरेर्मुख्यप्रसादलभ्य यत्सुखमुक्तं तस्यैव हेतोर्नान्यस्य । तत्सुखहेतु-निवृत्तिधर्माख्यसाधनस्यार्थे प्रयत्नं कुर्यात् यत्सुखं भूस्वर्गादिषु प्रवर्तमानानां प्रवृत्तिधर्मिणां[2] पुरुषाणां न सुलभं, निरन्तरं निवृत्तिधर्मं सेवमानानामव्यक्तवेगेनानेकजन्मपरिमितेन कालेनान्यतः सर्वजीवेभ्योऽत्यन्त-[3]भिन्नाद्धरेः सर्वदेशकालेषु निर्दुःखं स्वरूपसुखमभिव्यज्यते, तस्मान्निवृत्तिधर्म एव श्रेयानिति भावः । यथा पापिनां प्रयत्नमन्तरेण दुःखं लभ्यते तथा निवृत्तिधर्मिणामपि साधनसामग्रीं विना निरायासेन सुखं लभ्यत इत्यस्मिन्नर्थे 'दुःखवत्' इति दृष्टान्तो वा । सर्गादौ भ्रमतां यत्सुखं न लभ्यते विवेकी तस्यैव

---

१ विशिष्टाचार्यः - मूलकोशपाठः । २ डकोशेऽप्ययं पाठः । प्रवृत्तिधर्माणां - कोशान्तरेषु सर्वत्र पाठः ।
३ ...वेभ्यो - क घ ङ छ ज ट ठ ।

न वै जनो जातु कथञ्चन व्रजेन्मुकुन्दसेव्यन्यवदङ्गसंसृतिम् ।
स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रही जनः ॥ १९ ॥

इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसंभवः ।
तद्धि स्वयं वेद भवांस्तथापि प्रादेशमात्रं भवतः प्रदर्शितम् ॥ २० ॥

---

सुखस्य हेतोः प्रयतेत । एवशब्दव्यावर्त्यमाह– तदिति । अन्यतः विषयभोगात् यद्दुःखोपेतं सुखं तत् गभीररंहसा कालेन सर्वत्र लभ्यते । तस्मात् तादृशसुखार्थं न यतनीयम् । किन्तु तद्व्यतिरिक्तस्य नित्यस्य केवलस्य स्वरूपसुखस्येति वा ॥ १८ ॥

इतोपि निवृत्तिधर्म एव श्रेयानित्याह– न वा इति । अङ्ग, हे भगवन्, मुकुन्दसेवी जनोऽन्यवन्मुकुन्दमसेवमान इव जातु कदाचिदपि कथञ्चन कस्माच्चिन्निमित्तात्संसृतिं न व्रजेत् । 'वै'शब्देन न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति' इति वाक्यं प्रमाणयति । कुत इति तत्राह– स्मरन्निति । मुकुन्दस्य मनसा चरणारविन्दालिङ्गनसुखं स्मरन्ननुभवन् रसज्ञो जनः पुनर्विहातुं नेच्छेदित्यन्वयः ॥ १९ ॥

मुकुन्दस्वरूपमाह– इदमिति । स भगवानिदं विश्वमिव न तु विश्वं, किन्तु इतरः जगद्विलक्षणलक्षणः । कुतः ? जगत्स्थाननिरोधसंभव इति यतः । जगत्स्थापयति, निरोधयति संहरति, संभावयति उत्पादयतीति तथोक्तः । जगत्कर्तृत्वादिलक्षणलक्षितमैश्वर्य-सर्वस्वातन्त्र्य-सर्वशक्ति-सर्वस्वामित्वादिगुणपूर्णत्वादसर्वज्ञत्वादिगुणविशिष्टाज्जगतो भेदोऽनुभवसिद्ध इति 'हि' शब्दः । किञ्च भवान् स्वयं तद्वैलक्षण्यं वेद जानाति हि यस्मात्तस्मादैक्यकथनं प्रमाणविरुद्धमिति भावः । यद्यपि भवतः सर्वं सिद्धं न मया वक्तव्यांशोऽस्ति, तथाप्युपायापुगे बालवदव्याकृताकाशसदृशज्ञानवतः भवतः केवलप्रादेशाकाशपरिमितं ज्ञानं प्रदर्शितम् । 'मया' इति शेष इत्यन्वयः ॥ २० ॥

---

१ अयं पाठः टीकानुसारी । कोशान्तरेषु यादृपत्ये श्रीधरीयादौ च - कथञ्चनाव्रजेदिति ।

२ एतदनन्तरं वै इत्यधिकपाठः - ख ङ । ३ ङकोशेऽप्ययं पाठः । अन्यत्र - मुकुन्दासेवमानवत् ।

४ असावन्नेत्यादि - ख ङ छ ट । ५ भगवान् - क ज ।

६ तथापि - क घ छ ज ठ एतत्पादे प्रतीकग्रहणमिदम् । ७ इत्यन्वय इति नास्ति - ङ ट ।

त्वमात्मनाऽऽत्मानमवैह्यमोघदृक् परस्य पुंसः परमात्मनः कलाम्[1] ।
अजं प्रजातं जगतः शिवाय तन्महानुभावाभ्युदयोऽपि गण्यताम्[2] ॥२१॥

इदं हि पुंसस्तपसः श्रुतस्य वा स्विष्टस्य सूक्तस्य च बुद्धदत्तयोः ।
अविप्लुतोऽर्थः कविभिर्निरूपितो यदुत्तमश्लोकगुणानुवर्णनम् ॥ २२ ॥

अहं पुरातीतभवेऽभवं मुने दास्यास्तु कस्याश्चन वेदवादिनां ।
निरूपितो बालक एव योगिनां शुश्रूषणे प्रावृषि निर्विविक्षताम् ।। २३ ।।

---

'तद्धि स्वयं वेद' इत्युक्तं विविच्य विज्ञापयति— त्वमिति । हे अमोघदृक्, त्वमजमात्मानं परमात्मनः परस्य पुंसः कलां जगतः शिवाय प्रजातमात्मनाऽवैहीत्यन्वयः । आदानादिकर्तुः परमपुरुषस्यांशमवतीर्णं स्वत एव परोपदेशमन्तरेण जानासि । अत्र लोट् लडर्थे । अन्यथाऽमोघदृक्त्वमेवानुपपन्नं स्यात् । 'तद्धि स्वयं वेद' इति च विरुद्धं स्यात् । तस्मात् तन्महानुभावाभ्युदयः तस्य तव महासामर्थ्यलक्षणचरितोदयोऽपि लोकहिताय[3] गण्यतां प्राधान्येन संख्याय कथ्यतां, तेन जगतः शिवं भवतीत्यभिप्रायः ॥ २१ ॥

भगवन्महिमाभ्युदयवर्णनात्कथं जगतः शिवं स्यादिति तत्राह— इदमिति । यदुत्तमश्लोकस्य हरेर्गुणानुवर्णनमिदं हि पुंसस्तप आदेः अपरोक्षज्ञानद्वारा मोक्षसाधनत्वात्कविभिरविनष्टफलात्मकोऽर्थो[4] निरूपितः । 'हि' शब्दोऽवधारणे हेतौ वा । तपः कायक्लेशलक्षणं, श्रुतं शास्त्रश्रवणं, स्विष्टम् उत्तमकल्पतया यजनं, सूक्तमध्ययनं, बुद्धं-ज्ञानं, दत्तं-दानं । एवं हरिमहिमानुवर्णनेन सर्वस्य शिवसंभवात्तदेव त्वया कर्तव्यमिति भावः ॥ २२ ॥

इदानीं हरिकथाश्रवणादि शिवकरमिति वक्तुं स्वातीतजन्मकथनपूर्वकं स्वस्य भागवतसङ्गतिप्रकारमाह- अहमिति । 'पुरा' शब्दस्यातीतकालसामान्यवाचित्वेन निश्चयानुदयात्तदर्थमतीतेत्युक्तं । अन-

---

१ अवेहि - क । श्रीधरीयेऽपि तथा ।

२ ख ड कोशगतटीकापठानुसारोऽयं पाठः । ज कोशेऽप्यस्ति । अन्यत्र अनुगण्यतां श्रोदुपत्ये अधिगण्यतामिति पाठान्तरमपि व्याख्यातम् ।

३ अयं मूलकोश ख ड पाठः । अन्यत्र - चरितोदयस्त्रिलोक ।    ४ फलात्मकः- ट

ते मय्यपेताखिलचापलेऽर्भके दान्ते यतक्रीडनकेऽनुवर्तिनि ।
चक्रुः कृपां यद्यपि तुल्यदर्शनाः शुश्रूषमाणे मुनयोऽल्पभाषिणि ॥२४॥

उच्छिष्टलेपाननुमोदितो द्विजैः सकृच्च भुञ्जे तदपास्तकिल्बिषः ।
एवं प्रवृत्तस्य विशुद्धचेतसस्तद्धर्म एवाभिरुचिः प्रजायते ॥ २५ ॥

---

न्तरातीतजन्मनीत्यर्थः । 'तु' शब्द इतरदासीजातिवैशिष्ट्यद्योतनार्थः । योगिनां संन्यासिनाम् । 'क'-प्रत्ययः प्रशंसायां । लौल्यादिदोषरहितो बालः । प्रावृषि वर्षकाले, निर्विविक्षतां एकत्र स्थिति-मिच्छताम् ॥ २३ ॥

शिष्यगुणेन तेषां प्रवृत्तिमाह - त इति । । निरस्तसमस्तचपलस्वभावे जिह्वादीन्द्रियनिग्रहवति अत एव निरस्तबालक्रीडनसाधने अनुकूलवर्तिनि परिचरति अल्पबालविग्रहधारिणि मयि ते योगिनो अनुग्रहलक्षणां कृपां चक्रुरित्यन्वयः । किं विशिष्टास्तुल्यदर्शनाः यद्यपि तुल्यं- गुणक्रियारूपैः समं ब्रह्म पश्यन्तः, यथास्थितवस्तुदर्शिनो वा, तथापीति शेषः ॥ २४ ॥

किं तच्छुश्रूषाकर्मेति तत्राह -उच्छिष्टेति । ब्रह्मकुलोद्भवानामेव चतुर्थाश्रम इति प्रकाशनाय द्विजैरिति कथितम् । उच्छिष्टपात्रोद्धरणं गोमयोदकेन मार्जन्या वा तत्स्थललेपनं तत्रानुज्ञातः । न हि शूद्रस्य तदनुज्ञाभावे उच्छिष्टस्पर्शनं सुतरां तद्भक्षणं वा शक्यं । लिप्यन्ते - उपदिह्यन्ते सिच्यन्ते प्राणा एतैरिति लेपा ओदनास्तद्भुक्तोच्छिष्टानामोदनानामदनं प्रत्यनुज्ञात इति वा । अनेन स्वशरीर-यात्रानिर्वाहमाह । तदनुवर्तित्वं स्पष्टमाह- सकृदिति । च शब्द एवार्थे । यथा यतयः सकृदेव भुञ्जते तथाऽहमपि सकृदेव भुञ्जे । तस्मादाह- तदिति । तेन कर्मणा सकृद्भोजनेन अपास्तं निरस्तं किल्बिषं पापं यस्य स तथा । ततः किमभूदिति तत्राह - एवमिति । एवमुक्तप्रकारेण प्रवर्तमानस्य विशेषेण शुद्धान्तःकरणस्य तेषां परमहंसानां धर्मे विषयवैराग्यलक्षणे भगवत्कथाश्रवणाद्यभ्यासलक्षणे वा अभिरुचि-रुत्कण्ठा प्रजायते इत्यन्वयः सन्तताऽनुवृत्तिसूचनाय 'लट्' प्रयोगः ॥ २५ ॥

---

१. भाविणि - क ग घ छ ज ट । यादृच्छत्वे पाठद्वयमप्यङ्गीकृतम् ।

२. लेपायनु - कोशान्तरेषु पाठः । लेपस्योदनस्य अदिरदनमित्यर्थः ।

३. चपल - क ग घ ज ट ड ४. क्रीडा - ड ५. अप्यल्प - क घ ट ड ।

६ अयं पाठः ड कोशेऽप्यस्ति । अन्यत्र सर्वत्र - मार्जनं वा ।

७ अयं ड पाठः । अन्यत्र - तदनुज्ञाभावेन । ८ अयं ड पाठः । अन्यत्र यथेति नास्ति ।

९ पापं किल्लक्षणं यस्य - ख ड ।

तत्रान्वहं कृष्णकथाः प्रगायतामनुग्रहेणाश्रुणवं मनोहराः ।
ताः श्रद्धया मेऽनुसवं विश्रुण्वतः प्रियश्रवस्यङ्ग तदाऽभवन्मतिः ॥ २६॥

तस्मिंस्तदा लब्धरुचेर्महामते ! प्रियश्रवस्यस्खलिता मतिर्मम ।
ययाहमेतत्सदसत्स्वमायया पश्ये मयि ब्रह्मणि कल्पितं परे ॥ २७ ॥

इत्थं शरत्प्रावृषिकावृतू हरेर्विशृण्वतो मेऽनुसवं यशोऽमलम् ।
सङ्कीर्त्यमानं मुनिभिर्महात्मभिर्भक्तिः प्रवृत्ताऽऽत्मरजस्तमोपहा[1] ॥ २८ ॥

---

अभिरुच्या किं जातमिति तत्राह– तत्रेति । तत्र तत्प्रकाशे मनोहराः कृष्णकथा अनुदिनं प्रातःसवनादनन्तरं प्रगायतां - कीर्तयतां परमहंसानां अनुज्ञालक्षणानुग्रहेण अश्रुणवमित्यन्वयः । अंग श्री वेदव्यास, तदा श्रद्धयानुसवं त्रिसन्ध्यमपि ताः कथाः विशेषेण श्रुण्वतो मे मतिः ध्यानलक्षणोपासना प्रियश्रवसि - परममङ्गलकीर्तौ हरावभवदित्यन्वयः ॥ २६ ॥

अखण्डस्मरणोपासनाफलमाह – तस्मिन्निति । रागाद्यवद्यैरनुपहतत्वादस्खलिता निरन्तरं स्थिरतया अखण्डोपासनमभूदित्यन्वयः । ययाऽखण्डोपासनया एतत्सदसत्कार्य-कारणात्मकं जगन्नवि स्थिते विम्बभूते ब्रह्मणि-पूर्णे हरौ तत्सृष्टं, तत्पालितं, संहृतं चेति पश्ये । कथम्भूतं ? स्वमायया स्वेच्छया मदनुग्रहाभिमुख्या अत्र स्थीयतामिति कल्पितं संकल्पितमित्यन्वयः । ब्रह्मण्यध्यस्तं जगत्पश्य इत्यङ्गीकारे मिथ्याज्ञानित्वं प्रसज्जते । नहि शुक्त्यध्यस्तरजतं पश्यन् यथार्थज्ञानी भवति, किन्तु नेदं रजतं शुक्तिरेवैषेति[2] पश्यन् । तथा नेदं जगत्किन्तु ब्रह्मैवेति । न चात्र तथेत्यलमतिप्रसंगेन ।। २७ ।।

भक्त्युपासनयोरन्योन्यनिमित्त-नैमित्तिकभावोऽस्तीत्यभिप्रेत्याह– इत्थमिति । इत्थमुक्तप्रकारेण मुनिभिः सर्वज्ञैर्योगिभिः सम्यक् कीर्त्यमानं अमलं हरेर्यशः अनुसवनं शरत्प्रावृषिकावृतू विशेषेण श्रुण्वतो मम हरौ तदितरविरागवत आत्मनो-मनसो रजोगुण-तमोगुणनिमित्तरागाद्यन्यथाज्ञानादिदोषहरा महत्त्व-ज्ञानलक्षणा भक्तिः प्रवृत्ताऽभूदित्यन्वयः[3] ॥ २८ ॥

---

१ तमोहरा - ज । २ अयं ङ पाठः । अन्यत्र एषेति नास्ति ।

३ इतःपरं श्लोकत्रयव्याख्यानं ज कोशे पूर्णमुपलभ्यते । ङ कोशे गमिष्यन्तश्चातुर्मास्यव्रतं समाप्येत्याद्यनन्तरो भागः । अन्यत्र तु नास्त्येव ।

तस्यैवं मेऽनुरक्तस्य प्रश्रितस्य हतैनसः ।
श्रद्धधानस्य बालस्य दान्तस्यानुचरस्य च    ॥ २९ ॥
ज्ञानं गुह्यतमं यत्तत्साक्षाद्भगवतोदितम् ।
अन्ववोचन् गमिष्यन्तः कृपया दीनवत्सलाः ॥ ३० ॥
येनैवाहं भगवतो वासुदेवस्य वेधसः ।
मायानुभावमविदं येन गच्छन्ति तत्पदम्    ॥ ३१ ॥
एतत्संसूचितं ब्रह्मन् तापत्रयचिकित्सितम् ।
यदीश्वरे भगवति कर्म ब्रह्मणि भावितम्    ॥ ३२ ॥

---

ननु सद्गुरूपदेशमन्तरेण केवलं यशःश्रवणेनैव कथं ज्ञानोदय इति चेत्तत्राह- **तस्येति** ॥

ज्ञायतेऽनेनेति ज्ञानं– शास्त्रं । भगवतोदितं भगवत्संप्रदायादागतं अन्ववोचन् समग्रानुग्रह-पूर्वकमुपदिष्टवन्तः । गमिष्यन्तश्चातुर्मास्यव्रतं[1] समाप्य

तीर्थयात्रां करिष्यन्तः ज्ञानदीनेषु स्निग्धाः नयि केवलकृपयैव द्रवीकृतचेतसः योगिनः यत्साक्षाद्भगवता श्रीनारायणेन आदिस्रष्टे चतुर्मुखायोपदिष्टं, अहञ्च येन ज्ञानेनैव नान्येन कर्मादिना वेधसः सर्वकर्तुः वासुदेवस्य भगवतः मायानुभावं माहात्म्यविस्तारं अविदं अज्ञासिषम् । येन ज्ञानेन योगिनः तस्य वासुदेवस्य पदं स्वरूपं वैकुण्ठं वा गच्छन्ति जानन्ति प्राप्नुवन्ति वा । तत् ज्ञानमेव-मनुरक्तस्य हरौ भक्तियुक्तस्य प्रश्रितस्य विनयगुणसम्पन्नस्य हतैनसः निष्पापस्य श्रद्दधानस्य गुरुषु देवे गुरुवचने च आस्तिक्यबुध्युपेतस्य बालस्य अणुपरिमाणोपेतस्य दान्तस्य निगृहीतेन्द्रियस्य अनुचरस्य सदा शुश्रूषार्थमनुवर्तमानस्य तस्य मे मम अन्ववोचन् । यथात्मयोग्यमुपादिशन्निति एकान्वयः ॥ २९ ॥ ३० ॥

ननु यत्संसारदुःखनिवर्तकं तदेवावश्यकं ग्राह्यम् । तदस्य कथम् । येन गच्छन्तीत्युक्तेः स्तुतित्वसम्भवादिति तत्राह– **एतदिति** ॥ ३१ ॥

ब्रह्मन् सर्वगुणपूर्ण, एतन्मयोक्तं ज्ञानं तापत्रयात्मकसंसारनिवर्तकौषधं समीचीनं सूचितं, लोक-स्येति शेषः । तस्मादेतादृशं ज्ञानमेवोपादेयमिति भावः । तर्हि कर्मकरणं व्यर्थमिति तत्राह– **यदीति** । [2]वेत् यायजूकैः क्रियमाणमग्निष्टोमादि कर्म तदपि यदि ब्रह्मणि अपरिच्छिन्नगुणे ईश्वरे ईशादपि वरे हरौ भावितमर्पितं तर्हि ज्ञानमुत्पद्यते[3] तेन तापत्रयचिकित्सितं भवति । एतदुक्तं भवति । ब्रह्मार्पणबुद्ध्या

---

१ चातुर्मासी - ङ    २ यदीश्वर इति श्लोके यद् ईश्वर इति, यदि ईश्वर इति च द्वेधापि पदच्छेद इष्टः । कोशान्तरेषु यदिति नास्ति ।    ३ उत्पाद्यते - ग ट ठ

आमयोऽयं च भूतानां जायते येन सुव्रत।
तदेव ह्यामयद्रव्यं तत्पुनाति चिकित्सितम् ॥ ३३ ॥

एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ।
त एवात्मविनाशाय कल्पन्ते कल्पिताः परे ॥ ३४ ॥

यदत्र क्रियते कर्म भगवत्परितोषणम् ।
ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम् ॥ ३५ ॥

---

क्रियमाणेन कर्मणा शुद्धान्तःकरणस्य विषयविरक्तिद्वारा भगवति तीव्रया भक्त्या जनितापरोक्षज्ञानेन तापत्रयात्मकः संसारो निवर्तत इति । यत् ब्रह्मणि भावितं कर्म तदेतत्तापत्रयचिकित्सितं संभूचितमित्येकान्वयो वा ॥ ३२ ॥

ननु कर्मणां बन्धकत्वभावत्वात्[1] कथं तापत्रयभैषज्यमिति तत्राह–आमय इति । सुष्ठुनैव वृतं[2] येन स तथा, तस्य संबुद्धिः हे सुव्रत सत्यसङ्कल्पत्वादि[3]व्रतोपेतेति वा । येन द्रव्येण भूतान्नमयनामयः श्लेष्माद्यात्मकः[4] जायते तदेवामयकारणं द्रव्यं चिकित्सितमौषधीकृतं तद्रोगलक्षणं[5] पुनाति-परिहरति हि । तदिदमनुभवसिद्धमिति 'हि'शब्दार्थः । 'एव'कारस्तु तस्य प्राधान्यद्योतनार्थः, न तु द्रव्यान्तरनिषेधार्थः । कुतः औषधीकरणाय द्रव्यान्तरसंयोगदर्शनात् । 'च'शब्द उपमार्थस्तद्यथा[6] । एवं नृणां[7] संसारिणां क्रियालक्षणायोगाः उपायाः संसारहेतवः त एव क्रिया योगाः परे पूर्णे ब्रह्मणि कल्पिता-अर्पिताः आत्मविनाशाय अनेकजन्मसंचितदुष्कर्मस्व रूपनाशाय कल्पन्ते । तस्मात्केवलं कर्म बन्धकं, ब्रह्मार्पणेनौषधीकृतं, भक्तिज्ञानद्वारा संसाराख्यरोगनिवर्तकमिति भावः ॥ ३३ ॥ ३४ ॥

ज्ञानद्वारा कर्मणो मोचकत्वमाह-यदिति । अत्र कर्मभूमौ भगवदर्पणेन भगवत्परितोषणं यत्कर्म क्रियते जीवैः यत्[8] भक्तियोगसमन्वितं परोक्षापरोक्षोपपद ज्ञानं तज्ज्ञानं, तस्य कर्मणोऽधीनं हि, 'कर्मणा

---

१ बन्धस्वभावात् - क ग घ ङ ट ठ । बन्धस्वभावत्वात् - ज ।
२ अयं ठ ड पाठः । निरुक्तत्वात्साधुत्वमुपेयम् । वृत्तं - ग घ ज ट ।
३ संकल्पादि - क ग घ ङ ट छ ज । ४ श्लेष्माद्यैः - क ग घ ज ठ । ५ स्वरूपं - ङ ।
६ स यथा - क ग घ ज । ७ एवं तथा नृणां - क ग घ ज । ८ तत् - ङ छ ट ठ ।

कुर्वाणा यत्र कर्माणि भगवच्छिक्षयाऽसकृत् ।
गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च ॥ ३६ ॥
ॐ नमो भगवते तुभ्यं वासुदेवाय धीमहि ।
प्रद्युम्नायानिरुद्धाय नमः संकर्षणाय च ॥ ३७ ॥
इति मूर्त्यभिधानेन मन्त्रमूर्तिममूर्तिकम् ।
यजते यज्ञपुरुषं स सम्यग्दर्शनः पुमान् ॥ ३८ ॥

---

ज्ञानमातनोति भवति अथामृतानि कर्माणि' इति श्रुतेः । कर्मणा ज्ञानं जायते हि यस्मात्तस्मात्कर्म ज्ञानद्वारा बन्धनिवर्तकमिति भावः । अत्राग्निष्टोमादिकर्मसु यत्कर्म भगवत्परितोषणमिति वा ॥ ३५ ॥

कथंकारं कर्मणा ज्ञानमुत्पद्यते इति तत्राह- कुर्वाणा इति । यत्र यस्य यजमानस्यार्थे यस्मिन्यज्ञे हवनादीनि कर्माणि कुर्वाणा वैदिका ऋत्विगादयः 'स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित्' इति भगवच्छिक्षयाऽसकृन्निरन्तरं आदिमध्यावसानेषु वा कृष्णस्य गुणान् स्मरन्ति, नामानि च गृणन्ति ॥३६॥

यो यजमानः स्वयं च नित्यमों नमो भगवते तुभ्यं इत्यादिमूर्त्यभिधानेन मूर्तिवाचकेन मन्त्रेण मन्त्रप्रतिपाद्यमूर्तिम् अमूर्तिकं -प्राकृतवैकृतविग्रहविधुरं[1] वासुदेवादिरूपं यज्ञपुरुषं 'चत्वारि शृङ्गा त्रयो अस्य पादा' इत्यादिऋक्प्रतिपाद्याकारं भगवन्तं उद्दिश्य यजते स पुमान् यजमानः परोक्षापरोक्षज्ञानवान् भवति । ते च ऋत्विगादयः सम्यग्दर्शनाः समीचीनशास्त्रीयज्ञानाः सर्वज्ञाश्च सम्यञ्चं[2] भगवन्तं दर्शयन्ति ज्ञापयन्तीति सम्यग्दर्शनाः, सर्वेषां हरिपरायणत्वात् । ॐ सर्वगुणपूर्ण- सर्वजनरक्षकेति[3] वा । ओमिति अवते रूपम्[4] । भगवते षड्गुणपूर्णाय तुभ्यं नमः । सर्वत्र वसति दीव्यतीति वासुदेवः । बलज्ञान स्वरूपत्वाद्दैत्यनिरसनशीलत्वात् क्रीडाशीलत्वाद्वा । तस्मै धीमहि - स्मरेम । प्रकृष्टं द्युम्नं हिरण्यमिव[5] रूपं यस्य सः प्रद्युम्नः । 'हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्ण' इति श्रुतेः । तस्मै । न केनापि निरुद्ध इत्यनिरुद्धः, अनो - मुख्यप्राणः, सोऽस्यास्तीत्यनी, तेनानिना मुख्यप्राणप्रसादवता पुरुषेण- वशीकृत इति वा । अनिरुधः[6] -संसारमुक्तास्तान् दधाति -धारयति पोषयतीति वा । अनिरस्तमुख्यं नामधत्त इतिवा । 'तस्योदिति ना' श्रुतौ । तस्मै । सम्यक् पापकर्षणशीलत्वात् सङ्कर्षणः । समीचीनं करं सनोति

१ ठ ढ कोशयोरप्येवं पाठः । अन्यत्र- प्रकृतिवैकृत । २ सम्यक् - क ग घ ङ ज ट ।
३ रक्षकेति - क ग घ ङ ज ट ।
४ ॐ इत्येवं रूपं - क ग घ ङ ज झ ट । ॐ इत्येकरूपं - छ ।
५ अयं ख ठ ढ कोशेष्वपि लभ्यते । अन्यत्र - हिरण्यमेव ।
६ अयं पाठः घ ढ कोशयोरपि दृश्यते । अन्यत्र - अनिरुद्धः ।

ददातीतिवा। तस्मै। चशब्दः प्रत्येकं पृथक् मन्त्रत्वद्योतार्थः। इतिशब्दः प्रभतिवचनः। तस्मादृत्विगादिभिर्वैष्णवैः यजमाना भगवन्तं इजाना ज्ञानवन्तो भवन्तीति भावः।। ३८।।



इमं स्वधर्मनियममवेत्य मदनुष्ठितम्।
अदान्मे ज्ञानमैश्वर्यं स्वस्मिन् भावं च केशवः ॥ ३९ ॥
त्वमप्यदभ्रश्रुत विश्रुतं विभोः समाप्यते येन विदां बुभुत्सितम्।
प्रख्याहि दुःखैर्मुहुरर्दितात्मनां सङ्क्लेशनिर्वाणमुशन्ति नान्यथा ॥ ४० ॥

इति पञ्चमोऽध्यायः ॥

* * *

## अथ षष्ठोऽध्यायः

सूत उवाच —
एवं निशम्य भगवान् देवर्षेर्जन्म कर्म च।
भूयः पप्रच्छ तं ब्रह्मन् व्यासः सत्यवतीसुतः ॥ १ ॥

---

स्वानुभवसिद्धमिति विज्ञापयति। इममिति। केशवः मदनुष्ठितमिमं स्वधर्मनियममवेत्य ज्ञात्वा ऐश्वरं-ईश्वरविषयं ज्ञानं स्वास्मिन् भावं भक्तिं च मे मह्यं अदादित्यन्वयः ॥ ३९ ॥

इदानीमवतारप्रयोजनालम्बुद्धिकारणविज्ञापनमुपसंहरति- त्वमिति। हे अदभ्रश्रुत श्रोतामन्तेत्यादेः संपूर्णश्रोतृत्वादिगुणसंपन्न, त्वं ईश्वरोऽपि ऐश्वर्यादिगुणसंपन्नत्वेनासव्यार्थविधुरोऽपि सज्जनवात्सल्या देव येन त्वत्कीर्तिग्रन्थकरणेन विदां विदुषां विदन्तीति विदो ज्ञानलाभकामाः, तेषां वा, विचारकाणां वा बुभुत्सितं ज्ञातुमिष्टं समाप्यते संपूर्णं भवति, तादृशं श्रीभागवतलक्षणं विभोः समर्थस्य तव विश्रुतं यशः प्रख्याहि प्रख्यापय[1] कथयेत्यन्वयः। तस्मादन्येषां भागवतकरणशक्त्यभावात्त्वत्कृतिरेवालम्बुद्धिकारणमिति भावः ॥ ४० ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुविरचितायां
प्रथमस्कन्धे पञ्चमोऽध्यायः ॥

* * *

## अथ षष्ठोऽध्यायः

इदं व्यासनारदसंवादोपाख्यानं सूतः शौनकादिभ्योऽब्रवीदिति विज्ञापयितुमाह- एवमिति। हे ब्रह्मन्, सत्यवतीसुतो व्यासः देवर्षेर्जन्म कर्म च एव श्रुत्वा पुनरपि तं नारदं पप्रच्छेत्येकान्वयः ॥ १ ॥

---

१ प्रकटयेत्यन्वयः - ङ। प्रकथयेत्यन्वयः ख। प्रख्यातयेत्यन्वयः - क ग घ छ ज ट ठ।

व्यास उवाच —

भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिस्तव ।
वर्तमानो वयस्याद्ये ततः किमकरोद्भवान् ॥ २ ॥

स्वायम्भुव कया वृत्या वर्तितं ते परं वयः ।
कथं वे[1]दमुदस्राक्षीः काले प्राप्ते कलेवरम् ॥ ३ ॥

प्राक्कल्पविषयामेतां स्मृतिं ते सुरसत्तम ।
नह्येव व्यवधात्काल एष सर्वनिराकृतिः ॥ ४ ॥

नारद उवाच —

भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिर्मम ।
वर्तमानो वयस्याद्ये तत एतद[2]कार्षम् ॥ ५ ॥

---

नारदस्नेहपा[3]शात् तद्यशःख्यापनाय च सर्वज्ञोऽपि व्यासस्तद्वयःशे[4]षवृत्तिं पृच्छति[5]— भिक्षुभिरिति ।

तव विशिष्टज्ञानोपदेष्टृभिर्भिक्षुभिर्ज्ञानभिक्षादानशीलैर्विप्रवसिते देशान्तरं गते, आद्ये बाल्ये वयसि वर्तमानो भवान् तदनन्तरं किमकरोदित्येकान्वयः ॥ २ ॥

तदेव विविच्य पृच्छति— स्वायम्भुवेति । स्वयम्भुवो ब्रह्मणः पुत्र, ते तव परं ज्ञानोपदेशोत्तरकालीनं वयः कया वृत्या वर्तितम् । मरणकाले प्राप्ते इदं शरीरं कथं वा उदस्राक्षीरुत्सृष्टवानसीत्येकान्वयः ॥ ३ ॥

सर्वेषां पूर्वजन्मतत्संज्ञादीनां निराकृतिर्निराकरणं यस्मात्स सर्वनिराकृतिरेष कालः । हे सुरसत्तम ज्ञानिश्रेष्ठ, तवातीतब्रह्मकल्पविषयामेतां स्मृ[6]तिं स्मरणशक्तिं नैव व्यवधात् तिरोहितां नैवाकरोत् । आश्चर्यमेतदित्यस्मिन्नर्थे हिशब्दः । एवकारस्त्ववधारणार्थः ॥ ४ ॥

विज्ञातस्वकीर्तिवितरणव्यासाभिप्रायो नारदस्तत्प्रश्नं परिहरति— भिक्षुभिरिति । उक्तार्थः श्लोकोऽयम् ॥ ५ ॥

---

१ कथं चेदम् - घ ङ छ ज ट ठ । २ एतदकारिषम् - ग ङ ट ठ ज । ३ पारवश्यात् - ख ड ।
४ शेषे - ट ड । ५ पुनः पृच्छति - ड । ६ स्मृतिमिति ड कोशस्थं, नान्यत्रास्ति ।

एकात्मजा मे जननी योषिन्मूढा च किङ्करी ।
मय्यात्मजेऽनन्यगतौ चक्रे स्नेहानुबन्धनम् ॥ ६ ॥

साऽस्वतन्त्रा न कल्पासीद्योगक्षेमं ममेच्छती ।
ईशस्य हि वशे लोको योषा दारुमयी यथा ॥ ७ ॥

अहं च तद्ब्रह्मकुल ऊषिवांस्तदपेक्षया ।
दिग्देशकालाव्युत्पन्नो बालकः पञ्चहायनः ॥ ८ ॥

एकदा निर्गतां गेहाद्दुहन्तीं निशि गां पथि ।
सर्पोऽदशत्पदा स्पृष्टः कृपणां कालचोदितः ॥ ९ ॥

---

स्वस्य संन्यासिनामननुगमने कारणमाह– **एकात्मजेति** । अहमेक एव आत्मजोऽपत्यं यस्याः सा तथा । योषितां मध्ये मूढा विवेकज्ञानशून्या, किङ्करी दासी च, एवंविधा मम जननी, न अन्या गतिराश्रयो यस्य सोऽनन्यगतिः, तस्मिन्नात्मजे मयि स्नेहानुबन्धनं चक्र इत्येकान्वयः ॥ ६ ॥

केवलं स्नेहमेव बद्धवती न त्वशनवसनादिदानपूर्वकमित्याह – **सेति** । मम योगक्षेमं, अप्राप्तस्य प्राप्त्युपायं योगं प्राप्तस्य परिपालनं क्षेममिच्छती अस्वतन्त्रा पराधीना कल्पा[2] समर्था नासीदित्येकान्वयः । कुतः ? लोकः सेवको जनः ईशस्य स्वामिनो वशे हि यस्मात्तस्मादित्यर्थः । ईशावास्यमिति श्रुतेरीशस्य परमेश्वरस्येति वा । कथमिव दारुमयी काष्ठनिर्मिता योषा यथा जडप्रवर्तकयन्तृपुरुषाधीना तथेत्यन्वयः ॥ ७ ॥

तर्हि किमिति तत्र वास इति तत्राह– **अहमिति** । चशब्द एवार्थः, पूर्वेण समुच्चयार्थो वा । अहं तस्याः मातुरपेक्षया तस्मिन् ब्रह्मकुल एव ब्राह्मणगृह एव ऊषिवानित्यन्वयः । 'कुलं वंशे गृहे सार्थे जातिसांकर्ययोरपि' इत्यभिधानात् । तत्र वासे हेत्वन्तरञ्चास्तीत्याह **दिगिति** । दिगाद्यनभिज्ञाने कारणमाह **बालक इति** । पञ्च हायनाः संवत्सराः यस्य स तथोक्तः ! योऽहं दिगाद्यनभिज्ञः पञ्चहायनो बालकः सोऽहमित्येकान्वयः ॥ ८ ॥

कियन्तं कालमवात्सीदिति प्रश्नस्य मातृमरणपर्यन्तमवात्समिति परिहारमभिप्रेत्याह **एकदेति** । स्पृश-उपताप इति धातोः आक्रमणेन तप्तः गां गोमतल्लिकां । अदशत् अभक्षयत्; कालेन मृत्युना चोदितः प्रेरितः ॥ ९ ॥

---

१ योगक्षेमं अप्राप्तप्राप्तिप्राप्तपरिपालनलक्षणमिच्छती - ड । २ कल्पा - कोशान्तरेपु सर्वत्र । यादुपत्येपि ।

तदा तदहमीशस्य भक्तानां समभीप्सितम् ।
अनुग्रहं मन्यमानः प्रातिष्ठं दिशमुत्तराम् ॥ १० ॥

स्फीतान् जनपदांस्तत्र पुरग्राम व्रजाकरान् ।
खेटान् पट्टनवाटीश्च वनान्युपवनानि च ॥ ११ ॥

विचित्रधातुचित्राद्रीनिभभग्नभुजद्रुमान् ।
जलाशयांश्छिवजलान्नलिनीः सुरसेविताः ॥ १२ ॥

---

अहं तदा मातुरन्त्यकर्म कृत्वा तन्मरणं भक्तानामभीष्टनीशस्यानुग्रहं मन्यमान उत्तरां दिशं प्रातिष्ठमित्यन्वयः ॥ १० ॥

एक एव सहायरहितः अहं तत्रोत्तरस्यां दिशि दर्श दर्श[1] देशान् पुरादिभिः समेतानतीत्य यात इति चतुर्थश्लोकेनान्वयः । व्याला दुष्टगजाश्च उलूकाश्च शिवाः शृगालाश्च[2] व्यालोलूकशिवाः, तासामजिरं क्रीडास्थानं प्रतिभयाकारं मृत्युमाह्वयदिव स्थितं, अत एव घोरं महदपारं विपिनमद्राक्षमित्येकान्वयः । सर्वर्तुसंपत्त्या स्फीतान् समृद्धान् पुराणि ग्रामाश्च व्रजाश्च आकराश्च पुरग्रामव्रजाकराः तान् । पुरं राजराजाश्रयः, ग्रामो बहुजनाकीर्णः, गोपालानां गवां च निवासस्थानं व्रजः, रत्नाद्युत्पत्तिस्थानं आकरः खेटान् नगरयोरुपजीवनप्रदेशान् पट्टनानि च[3] वाट्यश्च तास्तथोक्ताः ताः । पट्टनवाटीः । जलस्थलायतिः स्फीता[4] राजधानीपट्टनम् । पुष्पोपजीविनां निवासस्थानं वाटी । वृक्षसमुदायो वनम् । आरोपितवृक्षसमुदाय उपवनम् ॥

इभैर्गजैर्भग्ना भुजद्रुमा भूर्जवृक्षा येषु ते तथोक्ताः । 'भुजपत्रे भुजोभूर्जे मृदुत्वक्चर्ममल्लिकौ' इति यादवः । इभभग्नाः भुजाः शाखा येषां ते तथोक्ताः, इभभग्नभुजाः द्रुमाः येषु ते तथोक्ता इति वा तान् । विचित्रधातुभिः नानाविधगैरिकहरितालादिभिः चित्रा आश्चर्यरूपा अद्रयः गिरयः तान् । शिवजलान् गुरुत्वादिदोषरहितान् जलाशयान् सरोवरादिजलाधारान् । देवनिषेविता नलिनीः पुष्करिणीः ॥

---

१ दर्श दर्शमित्यधिकपाठः ख ङ कोशयोः । नान्यत्र ।

२ शृगाल्यश्च - क ग घ ठ । किन्तु शिवाशब्दः नित्यस्त्रीलिङ्गः शृगालसामान्यवाचकः ३ चकारो घ कोशस्थः ।

४ अयं ट कोशस्थः । भागवततात्पर्यानुगुणः । अन्यत्र - स्थितेति ।

चित्रस्वनैः पत्ररथैर्विभ्रमद्भ्रमरश्रियः ।
नलवेणुशरस्तम्बकुशकीचकगह्वरम् ॥ १३ ॥

एक एवातियातोऽहमद्राक्षं विपिनं महत् ।
घोरं प्रतिभयाकारं व्यालोलूकशिवाजिरम् ॥ १४ ॥

परिश्रान्तेन्द्रियात्माहं तृट्परीतो बुभुक्षितः ।
स्नात्वा पीत्वा ह्रदे नद्या उपस्पृष्टो गतश्रमः ॥ १५ ॥

तस्मिन्निर्मनुजेऽरण्ये पिप्पलोपस्थ आश्रितः ।
आत्मनात्मानमात्मस्थं यथाश्रुतमचिन्तयम् ॥ १६ ॥

---

चित्रस्वनैर्नानाविधस्वरमधुरैः पत्ररथैः पक्षिभिः सह विभ्रमन्तः इतस्ततश्चलन्तः भ्रमराः भृङ्गाः विभ्रमद्भ्रमराः, विभ्रमद्भ्रमराणां श्रीः शोभा समृद्धिर्वा[1] यासु तास्तथोक्तास्ताः । शराणां स्तम्बाः शरस्तम्बाः नलानि च वेणवश्च शरस्तम्बाश्च कुशाश्च कीचकाश्च ते तथोक्ताः । तैर्गह्वरः निबिडोऽरण्यविशेषः[2] । वायुना उद्धूतस्वनाः[3] वेणवः कीचका इति उच्यन्ते ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

तृषा परीतः पानीयपानेच्छुः बुभुक्षितोऽन्नकामः, अत एव परिश्रान्तेन्द्रियदेहोऽहं तत्र महारण्ये नद्या ह्रदे उपस्पृष्टः कृतपादप्रक्षालनादिकः स्नात्वा, तर्पणादिसकलाः क्रियाः विधाय, स्वादूदकं पीत्वा तेन हेतुना गतश्रमोऽपगतालस्यो भूत्वा ।

मनुष्यसञ्चाररहितेऽरण्ये पिप्पलोपस्थे अश्वत्थमूले आश्रितः स्वस्तिकासन उपविष्टः समाहितचित्तो भूत्वा आत्मना विषयेभ्यः आहृतेन मनसा आत्मस्थं हृदि संस्थितं आत्मानं प्रत्यगात्मानं यथा परमहंसेभ्यः श्रुतं तथा अचिन्तयमित्येकान्वयः ॥ १५ ॥ १६ ॥

---

१ वाकाररहितः पाठः - झ छ ट ठ ड । अस्मिन् पक्षे शोभासमृद्धिरिति समस्तपदम् ।
२ तैर्गह्वराणिनिबिडानरण्यविशेषाणीति शेषः - ट ।
३ अयं ङ पाठः । उद्धूताः स्वतः स्वनाः - क । उद्धतस्वनाः - ज । उद्धूतस्वनाः - घ छ ठ ड । यादृच्छिकत्वेऽपि।

स्वप्नो मायाग्रहः शय्या जाग्रदाभास आत्मनः ।
नामरूपक्रियावृत्तिः संविच्छास्तृ परं पदम् ॥ १७ ॥
नेन्द्रियार्थं न च स्वप्नं न सुप्तं न मनोरथम् ।
न निरोधं चानुगच्छेच्चित्रं तद्भगवत्पदम् ॥ १८ ॥

---

यथाश्रुतमचिन्त्यमित्येतद्दर्शयितुं जाग्रदाद्यवस्थास्वरूपं निरूपयति– स्वप्न इति । स्वप्नाद्यवस्था आत्मनः परमात्मनः सकाशादात्मनो जीवस्योत्पद्यन्त इत्यन्वयः । तन्त्रेणोपात्तत्वादात्मशब्दस्य द्विरावृत्तिः कर्तव्या । जीवमनसि संस्थितमायाख्यदृष्टश्रुतवस्तुसंस्कारोपादानको जाग्रत्पदार्थसदृशकरितुरगाद्यनेकपदार्थदृष्टिरूपः स्वप्नः । सर्वेन्द्रियोपरतिरूपत्वात्स्वाप्नजागरितविषयग्रहणरहिता शय्यापरपर्याया सुषुप्तिः, नामरूपक्रियासु वृत्तिर्यस्य स तथोक्तः । आभासः प्रत्ययः, नामरूपक्रियाविषयप्रत्ययो जाग्रत् । एतदवस्थात्रयकारणं ब्रह्म, न मृदादिवत् कार्यानुस्यूतं, किन्तु ततो विलक्षणं, तदित्यमिप्रेत्याह– संविदिति । सं समीचीना प्रकृति-प्राकृतमिश्ररहिता । वित् वित्तिः ज्ञानं यस्य तत्तथोक्तं सम्यक्[1] निर्दोषमात्मानं वेत्तीति संवित् । 'तदात्मानमेवावेदहं ब्रह्मास्मि' इति श्रुतेः । शास्तृ सर्वनियन्तृ । पद्यत इति पदम् । परमुत्तमं, प्राप्तव्योत्तमम् । एवं जाग्रदाद्यवस्थाकर्तृत्वेनात्मादिभ्योऽत्यन्तोपकारकं विशिष्टज्ञानघनं सर्वान्तर्यामि प्राप्तव्योत्तमं तुर्यं ब्रह्मस्वरूपं श्रुतं तदेवाचिन्त्यमिति भावः । १७ ॥

एतदेव विविच्य दर्शयति- नेति । चित्रमाश्चर्यरूपम् । चित्तं[3] अविमिश्रितज्ञानात्मकं[4] वा । चित्तं[5] चेतनं जीवं त्रायत इति वा । चित् ज्ञानम् । तनोति राति ज्ञानिनां ज्ञानं बहुलीकरोति तदन्येषां ददाति गुरुमुखेनेति वा । चित्तरतं वा 'स हि सर्वमनोवृत्तिप्रेरकः समुदाहृत' इति स्मृतेः । चिनोतीति चित् चेता स्रष्टा ब्रह्मा, तं तरति अतीत्य वर्तते, तनोति सृजति रमयतीति वा, तस्मादुत्तममिति वा । भगवत् ऐश्वर्यादिगुणसामग्रीमत्पदं स्वरूपम् । हरेरिति शेषः । तत् ततं व्याप्तम् । भगवतः हरेः पदं वा । एवं विधं तत्प्रकृत्यादिसंबन्धविधुरत्वादिन्द्रियार्थं जाग्रदवस्थां नानुगच्छेत् । न स्वप्नावस्थां । न सुप्त्यवस्थां च । 'मिथ्या चिन्ता[6] मनोरथा' इत्यभिधानात् न मनोरथम् । अत एव न निरोधं मरणम् । अनुगच्छेदित्यस्य प्रत्येकमन्वयः । चशब्दौ मिथःसमुच्चयार्थौ ॥ १८ ॥

---

१ मनःस्थित - क घ छ ट । २ सम्यक् - कोशान्तरेषु सर्वत्र । ३ चित्रं - कोशान्तरेषु सर्वत्र ।
४ अविमिश्र - ख घ ज ट क । ५ चित्तं - क छ ज ठ ।
६ अयं ख ङ ट ड पाठस्थःमूलकोशोऽपि तथा । चिन्तितोऽर्थो - क ग घ ज ठ । चिन्ता-छ । याद्पत्येऽपि तथा ।

स एको भगवानग्रे क्रीडिष्यन्निदमात्मनः ।
सृष्ट्वा विहृत्य तज्जग्ध्वा उदास्ते केवलः पुनः ॥ १९ ॥
ध्यायतश्चरणाम्भोजं भावनिर्वृतचेतसः ।
उत्कण्ठाश्रु[1]कलाक्षस्य हृद्यासीन्मे शनैर्हरिः ॥ २० ॥
प्रेमातिभार[2]निर्भिण्ण[3]पुलकाङ्गोऽतिनिर्वृतः ।
आनन्दसंप्लवे लीनो नापश्यमुभयं मुने ॥ २१ ॥

---

ननु कालतोऽपि स्वभावाद्युत्पत्तिदर्शनात्तत्कर्तृत्वं हरेः कथमित्याशङ्क्य सकलप्रपञ्चकर्तृ[4]त्वेन मुख्यकर्तृत्वात्तदन्तःपातिस्वभावावस्थाकर्तृत्वं किं वक्तव्यमित्यभिप्रेत्य प्रपञ्चसृष्ट्यादिकर्तृत्वमाह– स इति । सृष्ट्यग्रे 'स एको भगवानासीत्' इत्यवान्तरान्वयः । स पुनः सिसृक्षुः अन्तर्यामितया अवतारैश्च क्रीडिष्यन् क्रीडितुमिच्छन्नात्मनः स्वस्मात्स्वोदरात् ब्रह्मादिपरमाणुपर्यन्तमिदं जगत्सृष्ट्वा अन्तर्यामितया प्रविश्य, प्रादुर्भावैश्च विहृत्य, पुनश्च तज्जग्ध्वा संहृत्य प्रलये केवल एकाकी उदास्ते जीवप्रवृत्तिं प्रत्युदासीनो वर्तत इत्यन्वयः । 'जग्ध्वा उदास्त' इति सन्ध्यभावः प्रकृत्यादिसाधनान्तरमन्तरेणापि स्रष्टुं शक्त इति महामाहात्म्यं द्योतयितुम् । सृष्टिस्थितिसंहारकर्तृत्वमेव न, ज्ञानादिकर्तृत्वञ्चास्यास्तीति वा ॥ १९ ॥

इदानमुपास्तिफलमाहध्यायत इति भावेन भक्त्या निर्वतं परमानन्दमाप्तं चेतः यस्य सः तथा तस्य। उत्कण्ठया जातानां अश्रूणां वाष्पाणां कलाभिः बिन्दुभिः युक्ते[5] अक्षिणी यस्य स तथा तस्य। शनैः अव्यग्रेण स्वचरणकमलं ध्यायतः मे हृदि हरिः आसीत् प्रत्यक्षोऽभीदित्येकान्वयः।। २०।।

प्रेम्णः अतिशयितभारेण निर्भिन्नः समुल्लेध[6]ः सञ्जातः पुलकः रोमाञ्चः । प्रेमातिभारनिर्भिण्णपुलकः अङ्गे यस्य स तथा आनन्दसंप्लवे सुखप्रलयोदके मग्नः अहं तमेवापश्यन् । उभयं द्वितीयं समधिकं वा नापश्यं सर्वोत्तमत्वादित्यन्वयः ॥ २१ ॥

---

१ औत्कण्ठ्याश्रु - क ग घ छ ठ  २ प्रेमातिभर - क ग घ छ ट ठ ।
३ अयं ङ कोशस्थः । हृषीकेशतीर्थीय नयमूलपाठानुगः । निर्निण्णः - ख । निर्भिन्नः - कोशान्तरेषु सर्वत्र ।
४ धातृत्वेन - ङ  ५ युक्तमक्षिनेत्रम् - ख ।
६ समुल्लसन् - क ग घ छ ज ठ  समाधिकं वा - कोशान्तरेषु सर्वत्र ।

रूपं भगवतो यत्तन्मनःकान्तं सुखावहम् ।
अपश्यन्सहसोत्तस्थौ कैवल्याद्दुर्मना इव ॥ २२ ॥

दिदृक्षुस्तदहं भूयः प्रणिधाय मनो हृदि ।
वीक्षमाणोऽपि नापश्यमवितृप्त इवातुरः ॥ २३ ॥

एवं यतन्तं विजने मामाहागोचरो गिराम् ।
गम्भीरश्लक्ष्णया वाचा शुचः प्रशमयन्निव ॥ २४ ॥

हन्तास्मिञ्जन्मनि भवान्न मां द्रष्टुमिहार्हति ।
अविपक्ककषायाणां[1] दुर्दर्शोऽहं कुयोगिनाम् ॥ २५ ॥

---

ततः परं किमभूदिति तत्राह– रूपमिति । मनः कान्तं मनोहरं हरेः यद्रूपं [illegible] अपश्यन् अचक्षाणः दुर्मनाः दुःखितान्तःकरणः मुक्तिं प्राप्तः कैवल्यात् मोक्षादिव उत्त[illegible] त्यन्वयः ।

पुनः हरेः रूपं दिदृक्षुः हृदि मनः प्रणिधाय स्थितः आतुरः रोगीव अवितृप्तः [illegible] वीक्षमाणोऽपि अहं नापश्यमित्यन्वयः ॥ २३ ॥

हरेर्भक्तवात्सल्यमाश्चर्यमिति दर्शयति । एवमिति ।

गिरां वाचां अगोचरः अविषयः अदृश्यः गम्भीरया अगाधया श्लक्ष्णया [illegible] शुचः प्रशमयन्निव नष्टाः कुर्वन्निव स्थितः हरिः एवं विजने जनसंचाररहिते [illegible] मा माहेत्येकान्वयः ॥ २४ ॥

किमाह हरिरिति तत्राह– हन्तेति ।

हन्त विस्मये । भवान् इह भूलोके अस्मिन् जन्मनि शूद्रयोनौ मां द्रष्टुं [illegible] कषेण भोगेन क्षयते अपगच्छतीति कषायः पापम् । अभुक्तपापफलानां कुयोगिनां [illegible] ज्ञानेन वा कुत्सितः योगः ध्यानादिकःएषामस्तीति कुयोगिनः । तेषां पुंसां दुर्दर्शः द्रष्टुमशक्यः

---

1 अविभुक्त - ग ज ।

सकृद्यद्दर्शितं रूपमेतत्कामाय तेऽनघ ।
मत्कामः शनकैः साधु सर्वान्मुञ्चति हृच्छयान् ॥ २६ ॥
सत्सेवया दीर्घया वै जाता मयि दृढा मतिः ।
हित्वावद्यमिमं लोकं गन्ता मज्जनतामसि ॥ २७ ॥
मतिर्मयि निबद्धेऽयं न विपद्येत कर्हिचित् ।
प्रजासर्गनिरोधेऽपि स्मृतिश्च मदनुग्रहात् ॥ २८ ॥

एतावदुक्त्वोपरराम तन्महद्भूतं नभोलिङ्गमलिङ्गमीश्वरम् ।
अहञ्च तस्मै महतां महीयसे शीर्ष्णावनामं विदधेऽनुकम्पितः ॥

---

तर्हि किमिति दर्शितमिति तत्राह– सकृदिति । अनघ सांसारिकदुःखरहित ते तव कामाय अथ कदा नु पश्येयमिति उत्कण्ठायै । तया किं फलमभूदिति तत्राह– मत्काम इति । मद्भक्तः पुरुषः क्रमेण सर्वान् हृच्छयान् प्राकृतान् कामान् साधु मुञ्चतीत्यन्वयः ॥ २६ ॥

परमहंससेवाफलमाह– सदिति ।

दीर्घया बहुकालीनया सतां परमहंसानां सेवया परिचर्यया मयि दृढा मतिः मननलक्षणा भक्तिः जाता च यस्मात् अतः अवद्यं दोषरूपं शूद्रजातित्वात् इमं लोकं देहं हित्वा पश्चात् ब्रह्मपुत्रत्वेन जातः मज्जनतां मम जनतां परमभागवतत्वं गन्तासीत्यन्वयः ॥ २७ ॥

मयि निबद्धा इयं मतिः कदाचिदपि न विपद्येत न नश्येत् । प्रजानां सर्गः सृष्टिः निरोधः संहारः एतयोः स्मृतिनाशकयोः स्मृतिः जातिस्मरणशक्तिश्च न विपद्येत । कस्मात् मदनुग्रहात् । अनेन भगवद्भक्तसङ्गोऽभिमतफलद इत्युक्तं भवति ॥ २८ ॥

ईश्वरं ईशनशीलं सकलजगत्प्रवर्तनशक्तिमत् अलिङ्गं जडशरीररहितम् । रुद्राद्यन्यद्वा । ईश्वरमित्युक्त्या भूतविग्रहवान् हर इति शङ्कानिरासार्थं वा अलिङ्गमित्युक्तम् । नभः लिङ्गं गमकं दृष्टान्तत्वेन यस्य तत्तथोक्तम् । आकाशवत्सर्वगतमित्यर्थः । तन्महद्भूतं ब्रह्म एतावदुक्त्वा विरराम । तेन अनुकम्पितः कृपापात्रीकृतः अहञ्च महतां महीयसे तस्मै महाभूताय शीर्ष्णा शिरसा अवनामं नमस्कारं विदधे कृतवानित्यन्वयः ॥ २९ ॥

नानान्यनन्तस्य गतत्रपः पठन्गुह्यानि भद्राणि कृतानि च स्मरन् ।
गां पर्यटंस्तुष्टमना गतस्पृहः कालं प्रतीक्षन्नपटो विमत्सरः ॥
एवं कृष्णमतेर्ब्रह्मन्नसक्तस्यामलात्मनः ।
कालः प्रादुरभूत्काले तटित्सौदामिनी यथा ॥ ३१ ॥
एवं मयि प्रयुञ्जाने शुद्धां भागवतीं तनुम् ।
प्रारब्धकर्मनिर्वाणो न्यपतत्पाञ्चभौतिकः ॥ ३२ ॥
कल्पान्त इदमादाय शयानेऽम्भस्युदन्वतः ।
शिशयिष्णोरनुप्राणं विवेशान्तरहं विभोः ॥ ३३ ॥

---

गतत्रपः लज्जारहितः अनन्तस्य हरेः कृतानि कर्माणि विक्रमलक्षणानि गां भूमिं तुष्टमनाः यदृच्छालाभेनालम्बुद्धिमान् गतस्पृहः परवस्तुस्पृहारहितः । 'पट गता'विति धातोः पटो गतिः । न विद्यते गतिः ईश्वरादन्यो यस्य सः अपटः । अनन्यगतिरित्यर्थः । असङ्गतः विरक्त इति वा । कन्थादिप्रावरणरहितो वा । 'अ आ अं अः पुराणर्षिः' इति वाक्यात् अ इति व्याससंबोधनं वा । हे अ व्यास पटो समर्थ[1] । अपटः[2] निकेतनरहितः इति केचित् । तच्चिन्तयन् । विमत्सरः विगतमात्सर्यः । एवंविधोऽहं मरणकालं प्रतीक्षमाणोऽभूवमिति शेषः ॥ ३० ॥

कृष्णे परमानन्दबलात्मके हरौ मतिः यस्य स तथा तस्य कालः मरणाख्यः प्रावृट्काले प्राप्ते सौदामिन्याख्या तटित्[3] विद्युत् यथा सहसाभिपद्यते तथेत्यर्थः । 'तडित्सौदामिनी शतह्रदा । सौदामिन्यैरावती च तद्भेदेऽप्यन्तिमन्त्रयनि[4]'ति वचनात्[5] कुलपाण्डववत् पृथगुक्तिर्युज्यत इति भावः ॥ ३१ ॥

मयि शुद्धां निर्दोषां भागवतीं तनुं हरिमूर्तिं एवं प्रयुञ्जाने ध्यायति सति, फलदानाय प्रारब्धकर्मविनाशवान् पञ्चभिः भूतैः निर्मितः देहः न्यपतत् इत्यन्वयः ॥ ३२ ॥

हरिं ध्यायन् मुक्तः त्वं कं लोकं गत इति तत्राह– कल्पान्त इति ।

अहं, कल्पावसाने त्वन्मुष्टमिदं विश्वमादाय स्वोदरे निवेश्य उदन्वतोऽम्भसि शेषपर्यङ्के शयाने हरौ शिशयिष्णोः शयितुमिच्छोः विभोः विरिञ्चस्य अन्तरनुप्राणं अन्तर्गच्छच्छ्वासमनु विवेश प्रविष्टवानसीत्यन्वयः ॥ ३३ ॥

---

१ अयं ज ट ड कोशस्थः । कोशान्तरेषु - पटः समर्थः २ अपदः - ख ।
३ तटिदित्यधिकपाठः - ख ड कोशस्थः ४ तद्भेदेऽप्यभिमन्त्रणम् - क ग घ ट ५ अभिधानात् - ड ।

सहस्रयुगपर्यन्त उत्थायेदं सिसृक्षतः ।
मरीचिमिश्रा ऋषयः प्राणेभ्योऽहञ्च जज्ञिरे ॥ ३४ ॥
अन्तर्बहिश्च लोकांस्त्रीन्पर्येम्यस्कन्दितव्रतः ।
अनुग्रहान्महाविष्णोरविघातगतिः क्वचित् ॥ ३५ ॥
देवदत्तामिमां वीणां स्वरब्रह्मविभूषिताम् ।
मूर्च्छयित्वा हरिकथां गायमानश्चराम्यहम् ॥ ३६ ॥
प्रगायतश्च वीर्याणि तीर्थपादः प्रियश्रवाः ।
आहूत इव मे शीघ्रं दर्शनं याति चेतसि ॥ ३७ ॥
एतदातुरचित्तानां मात्रास्पर्शेच्छया मुहुः ।
भवसिन्धुप्लवो दृष्टो हरिचर्यानुवर्णनम् ॥ ३८ ॥

---

सहस्रयुगपर्यन्ते चतुर्युगसहस्रपरिमितस्वनिशावसाने विष्णोः उत्थाय उत्पद्य इदं सिसृक्षतो विरिञ्चस्य अङ्गात् अहं जज्ञे । मरीच्यत्रिमुख्याः ऋषयश्च तस्य प्राणेभ्यो जज्ञिरे इत्येकान्वयः ॥ ३४ ॥

विष्णुनाम्नः यजमानादपि महतो विष्णोः अनुग्रहात् अप्रतिहतगमनः अस्खलितब्रह्मचर्यादिव्रतोऽहं त्रीन् लोकान् अन्तर्बहिश्च पर्येमि पर्यटामीत्येकान्वयः ॥ ३५ ॥

तदेवाह- **देवदत्तामिति ।**

स्वरब्रह्मविभूषितां सप्तस्वरलक्षणवेदेनालंकृतां नाम्ना देवदत्तां इमां वीणां मूर्च्छयित्वा, स्वराणामारोहणावरोहणक्रमो मूर्च्छा, तां कारयित्वा हरिकथां गायमानोऽहं चरामीत्यर्थः ॥ ३६ ॥

तीर्थं गङ्गाख्यं पादे यस्य सः तीर्थपात् तस्य वीर्याणि चरितलक्षणानि प्रकृष्टं गायतः । चशब्द एवार्थे । एवं उपासकस्यैव मम चेतसि प्रियश्रवाः भगवान् आहूत इव शीघ्रं अविलम्बितं दर्शनं याति अपरोक्षीभवतीत्यन्वयः ॥ ३७ ॥

हरिचर्यानुवर्णनं समाधिभाषया भगवच्चरितानुवर्णनं यत् तदेतत् मुहुः मात्रास्पर्शेच्छया विषयभोगेच्छया अप्राप्तिनिमित्तमातुरचित्तानां क्लिष्टमनसां पुंसां भवसिन्धुप्लवः संसारसागरतरीविशेषः दृष्टः । साक्ष्यादिप्रमाणैरिति शेषः । इति यस्मात् तस्मात् सात्त्विकहिताय सैव वर्णनीयेति भावः ॥ ३८ ॥

---

१ मात्रास्पर्शेच्छया तत्प्राप्ति - क । मात्रास्पर्शेच्छया विषयसंबन्धेच्छया विषयाप्राप्ति - घ । मात्रा विषयाः । तेषां स्पर्शः संबन्धः । तस्येच्छयाऽप्राप्ति - ग ।

यमादिभिर्योगपथैः कामलोभहतो मुहुः ।
मुकुन्दसेवया यद्वत्तथात्माद्धा न शाम्यति ॥ ३९ ॥
सर्वं तदिदमाख्यातं यत्पृष्टोऽहं त्वयानघ ।
जन्मकर्मरहस्यं मे भवतश्चात्मतोषणम् ॥ ४० ॥

सूत उवाच —

एवं सम्भाष्य भगवान्नारदो वासवीसुतम् ।
आमन्त्र्य वीणां रणयन्ययौ यादृच्छिको यतिः ॥ ४१ ॥
अहो देवर्षिर्धन्योऽयं यः कीर्तिं शार्ङ्गधन्वनः ।
गायन् माद्यन्निदं तन्त्र्या रमयत्यातुरं जगत् ॥ ४२ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे षष्ठोऽध्यायः ॥

---

तर्हि यमादियोगानुष्ठानविधानं व्यर्थमिति तत्राह– यमादिभिरिति ।

मुकुन्दकथासेवया यथात्मा जीवः अञ्जसा शाम्यति भगवन्निष्ठबुद्धिमान् भवति तथा कामलोभाभ्यां वैरिभ्यां हतः पीडितः अनुष्ठितैः योगमार्गैः यमादिभिः अद्धा न शाम्यति । तस्मात् हरिकथासेवैव संसारतरीत्येकान्वयः ॥ ३९ ॥

उपसंहरति– सर्वमिति । अतीतजन्मविषयत्वात् रहस्यं मम यत् जन्म कर्म प्रति अहं त्वया पृष्टः तदिदं सर्वं आख्यातम् । तुभ्यमिति शेषः । कीदृशम् । नित्यतन्तुष्टस्यापि भवतः आत्मनः मनसः तोषणं तुष्टिजनकम् । भवत आख्यातमिति वा । चशब्दो जन्मकर्मणोः समुच्चये । श्रोतॄणां आत्मनां जीवानां तुष्टिजनकमिति वा ॥ ४० ॥

सूतः व्यासनारदसंवादं शौनकादीन् ब्रूते इत्याह– एवमिति । वासवीसुतं सत्यवत्याः पुत्रं व्यासं एवं पूर्वोक्तप्रकारेण सम्भाष्य उक्त्वा गच्छामीत्यामन्त्र्य आज्ञां गृहीत्वा वीणां रणयन् ध्वनयन् ययौ । यादृच्छिकः अतर्कितगमनागमनः । यतिः निर्जितेन्द्रियग्रामः ॥ ४१ ॥

शार्ङ्गधन्वनः हरेः कीर्तिं माद्व्या मधुरया गिरा तन्त्र्या वीणया गायन् आतुरं क्लिष्टं जगत् रमयति यः सोऽयं देवर्षिः नारदः धन्यः कृतकृत्यः । अहो आश्चर्यमेतत् । शूद्रयोनेरप्येतादृशमाहात्म्यमभूदिति । नारं ज्ञानं ददातीति नारदः । अरदो दोषदो न भवतीति वा । आरवत् अङ्गारकवत् आयुःखण्डको न भवतीति वा । 'दोऽवखण्डने' ॥ ४२ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुविरचितायां
प्रथमस्कन्धे षष्ठोऽध्यायः ॥

## ॥ अथ सप्तमोऽध्यायः ॥

शौनक उवाच–
निर्गते नारदे सूत भगवान्बादरायणः ।
श्रुतवांस्तदभिप्रेतं ततः किमकरोद्विभुः ॥ १ ॥
सूत उवाच–
ब्रह्मनद्याः सरस्वत्याः आश्रमः पश्चिमे तटे ।
शम्याप्रास इति प्रोक्तः ऋषीणां सत्रवर्धनः ॥ २ ॥
तस्मिन् ऋष्याश्रमे[3] व्यासो बदरीषण्ड[4]मण्डिते ।
आसीनोऽप उपस्पृश्य प्रणिदध्यौ मनश्चिरम् ॥ ३ ॥
भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले ।
अपश्यत् पुरुषं पूर्णं मायाञ्च तदपाश्रयाम् ॥ ४ ॥

---

भागवतकरणापदेशेन भगवति भक्तिः तन्माहात्म्यं च प्रतिपाद्यतेऽस्मिन्नध्याये– निर्गते[1] इति । तत् अभिप्रेतं भागवतकरणम् । तस्य नारदस्य वा । ततो नारदनिर्गमनानन्तरम् ॥ १ ॥

लकुटीकृतशम्यो[2]नाम्याङ्गीयतरुशाखापतितस्थले कृतशालान्तर्यज्ञकरणात् शम्याप्रास इति लोके रूढिः । सत्रं वर्धयति, अधिकफलं करोतीति सत्रवर्धनः ॥ २ ॥

ऋष्युपभोगयोग्यफलबदरीवृक्षसमूहालङ्कृते ऋषिसामान्याश्रमे । अत्रातीतानागतवर्तमानानन्तकोटिब्रह्माण्डबाह्याभ्यन्तरवर्त्यपरिमितपदार्थान् अशेषविशेषैः सह करतलामलकवत् सततं अपरोक्षीकुर्वतः चिरं मनःप्रणिधानं असुरजनमोहनायेति बोद्धव्यम् ॥ ३ ॥

ध्यानेन किं लब्धमभूदिति तत्राह– भक्तीति । भक्तियोगेन सम्यक् एकाग्रतया हरौ प्रणिहिते सम्यक् स्थापिते अमले रागादिदोषरहिते सतां पुरुषाणां मनसि प्रत्यक्षीभवन्तं पूर्णं देशतः कालतः गुणतश्चापरिच्छिन्नं पुरुषं परमात्मानं जीवानां संसारकरीं मायां बन्धकशक्तिञ्च तदपाश्रयां तस्य हरेः अधीनां अपश्यदित्येकान्वयः । प्रकृतिपुरुषौ विविक्ततया द्रष्टुं लोकानां मनसि सम्यक प्रणिहिते सति शक्याविव्यपश्यदिति वा । एतदभिप्रायेण 'तदपाश्रयामि'त्युक्तं, ततोऽपगत्य आश्रित्य[5] स्थितां 'स्थातुमीक्षापथेमुये'ति वक्ष्यति ॥ ४ ॥

---

१ एतन्नास्ति डकोशे । २ शमी - ड । अनन्ततीर्थीयसम्मतोऽयं पाठः ।
३ तस्मिन् स्व आश्रमे - कोशान्तरेषु सर्वत्र । जकोशे तु मूलकोशधृत एव पाठः ।
४ खण्ड - कोशान्तरेषु सर्वत्र, यादुपत्ये च । ५ ततोऽपगत्यापसृत्य - ख ड ।

यया संमोहितो जीवः आत्मानं त्रिगुणात्मकम् ।
परोऽपि मनुतेऽनर्थं तत्कृतश्चाभिपद्यते ॥ ५ ॥
अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे ।
लोकस्याजानतो विद्वाँश्चक्रे सात्वतसंहिताम् ॥ ६ ॥
यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे ।
भक्तिरुत्पद्यते पुंसां शोकमोहभयापहा ॥ ७ ॥
स संहितां भागवतीं कृत्वानुक्रम्य चात्मजम् ।
शुकमध्यापयामास निवृत्तिनिरतं मुनिम् ॥ ८ ॥
शौनक उवाच :—
स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः ।
कस्य वा बृहतीमेतामात्मारामः समभ्यसत् ॥ ९ ॥

---

ननु अनिर्वाच्याविद्या माया नाम । अतः कथं बन्धकशक्तिरियमित्याशङ्क्य अनिर्वाच्यायाः अर्थक्रियाऽयोगात् अस्याः तद्दर्शनात् अत्र बन्धकशक्तिरेवोच्यत इत्यभिप्रेत्याह– ययेति। परोऽपि त्रिगुणात्मकप्रकृतेरन्योऽपि यया सम्मोहितो जीवः आत्मानं त्रिगुणात्मकं त्रिगुणोपादानकदेहरूपं मनुते । तत्कृतं मायाकृतं तादृशमननकृतं वा जननमरणाद्यनर्थं[1] अहं कर्तेत्यनर्थं वा[2] अभिपद्यत इत्यन्वयः । तस्मात्[3] एवंविधमायाबन्धनिवर्तकं अपरोक्षज्ञानद्वारा भक्तियोगमद्राक्षीदिति भावः ॥ ५ ॥

ततः किमकरोदिति तत्राह– अनर्थेति । तन्निवृत्तिसाधनमाहेति वा– अनर्थेति । साक्षात् आहत्येष्टानिष्टप्राप्तिपरिहारोपायमजानतो लोकस्य सात्विकप्रकृतेः बन्धकशक्तिनिमित्तमनर्थमुपशमयति नाशयतीत्यनर्थोपशमम् । अधोक्षजे भक्तियोगं विद्वान् महत्वज्ञानपूर्वकप्रेमलक्षणभक्तियोगप्रदर्शनाय सात्वतसंहितां भागवतसंहितां चक्रे इत्येकान्वयः ॥ ६ ॥

अनया कथं भक्तिरुत्पद्यत इति तत्राह- यस्यामिति । अनुक्रम्य संशोध्य तत्ववद्बुद्ध्या[4] ॥ ८ ॥

निवृत्तिनिरतमित्यस्य फलाभिसन्धिरहितमित्यर्थमविद्वानिव शौनकश्चोदयति- स वा इति । आत्मनि आरमत इति आत्मारामः । मुनिः सर्वज्ञः मौनी वा । अत एव सर्वत्र शिष्यसंग्रहादौ उपेक्षकः

---

१ मानकृतं - कोशान्तरपाठः । २ च - क ३ एतन्नास्ति - ङकोशे ।
४ एतदनन्तरं 'निवृत्तिनिरतमित्यस्य फलाभिसन्धिरहितमित्यर्थः' इत्यधिकं पठ्यते कोशान्तरे सर्वत्र । ङकोशे तु न ।

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिं इत्थंभूतगुणो हरिः ॥ १० ॥
हरेर्गुणाक्षिप्तमतिर्भगवान्बादरायणिः ।
अध्यगान्महदाख्यानं नित्यं विष्णुजनप्रियम् ॥ ११ ॥
परीक्षितोऽथ राजर्षेः जन्मकर्मविलापनम् ।
संस्थाञ्च पाण्डुपुत्राणां वक्ष्ये कृष्णकथोदयाम् ॥ १२ ॥

---

उदासीनबुद्धिः । निवृत्तिनिरतः सः शुकः कस्य फलस्य अर्थे बृहतीं महतीं एतां संहितां समभ्यसद्दि इत्यन्वयः । चतुर्षु पुरुषार्थेषु कस्य पुरुषार्थस्येति विकल्पार्थो वाशब्दः । शुकगताविति धातोः परब्रह्मण्यव्याहतबुद्धिगतित्वात् शुकः ॥ ९ ॥

परिहरतीत्याह– आत्माराम इति ।

चशब्दोऽप्यर्थे । आत्मारामाः स्वरूपसुख एव रममाणा अपि अत एव निर्ग्रन्थाः निरुपादेयाः मुनयः उत्तमाधिकारिणः उरुक्रमे उरवः क्रमाः पादविक्षेपाः यस्य सः तथा तस्मिन् अहैतुकीं प्रयोजनविधुरां आनन्दरूपां भक्तिं कुर्वन्ति । किं पुनः, बहुजन्मस्वपरोक्षीकृतपरतत्वाः ये भक्त्यादिसाधनातिशयेन मुक्तौ आनन्दातिशयमाकांक्षमाणाः शुकादयः उरुक्रमे भक्तिं कुर्वन्तीति वर्णनीयमित्येकान्वयः । इत्थंभूतगुणः निरपेक्षमुक्तमनोवशीकरणक्षमगुणः । किमुतामुक्तमनोवशीकरणक्षमगुण इति वाच्यमिति भावः ॥ १० ॥

अतः शुकेन भागवताभ्यसनं कृतमित्याह– हरेरिति ।

हरेः अतिशयज्ञानानन्दगुणैः आक्षिप्ता आकृष्टा मतिः यस्य सः तथोक्तः बादरायणसुतो भगवान् नित्यं भागवतजनहृदयङ्गमं महदाख्यानं, आख्यायते भगवन्महिमा अनेनेति आख्यानं भागवतपुराणं अध्यगात् । अन्यांश्च अध्यापयामासेत्येकान्वयः ॥ ११ ॥

कस्मिन्युग इत्यादि शौनकप्रश्नं परिहृत्य तस्य जन्मेति प्रश्नं परिहरतीत्याह– परीक्षित इति । अथ परीक्षितो राजर्षेर्जन्म कर्म विलापनं मरणं वक्ष्ये । तदर्थं प्रथमतः पाण्डुपुत्राणां संस्थां स्वर्गारोहणं युद्धादुपरितनमहाभिषेकादि महाप्रस्थानान्तां संस्थां स्थितिञ्च वक्ष्ये ॥ कीदृशीं संस्थां ? कृष्णकथायाः उदयः यस्यां सा तथोक्ता ताम् ॥ १२ ॥

---

१ आख्यापयासास - क ग च छ ट ठ ड । आख्यापयामास वा - घ । २ विलापनं - ख ।

यदा मृधे कौरवपाण्डवानां वीरेष्वथो वीरगतिं गतेषु ।
वृकोदराविद्धगदाभिमर्शभग्नोरुदण्डे धृतराष्ट्रपुत्रे ॥ १३ ॥

भर्तुः प्रियं द्रौणिरिति स्म पश्यन्कृष्णासुतानां स्वपतां शिरांसि ।
अपाहरद्विप्रियमेतदस्य जुगुप्सितं कर्म विगर्हयन्ती ॥ १४ ॥

माता शिशूनां निधनं सुतानां निशम्य घोरं परितप्यमाना ।
तदारुदद्बाष्पकलाकुलाक्षी तां सान्त्वयन्नाह किरीटमाली ॥ १५ ॥

---

अथो कथान्तरं निरूप्यते – यदेति ।
कौरवपाण्डवानां मृधे युद्धे भीष्मादिषु वीरेषु वीरगतिं स्वर्गं गतेषु धृतराष्ट्रपुत्रे दुर्योधने वृकोदरेण आविद्धायाः भ्रान्तायाः गदायाः अभिमर्शेन सम्यक् ताडनेन भग्नः ऊरुदण्डः यस्य स तथोक्तः तस्मिन् सति, दुर्योधनपातमारभ्य ॥ १३ ॥

भर्तुः स्वस्वामिनो दुर्योधनस्य मया प्रियं कार्यमिति पश्यन् निरूपयन् द्रौणिः यदा स्वपतां निद्रां कुर्वतां कृष्णासुतानां द्रौपदीपुत्राणां शिरांसि अपाहरत्, तदा सुतानां माता द्रौपदी शिशूनां सुतानां निधनं निशम्य घोरं यथा भवति तथा परितप्यमाना । निधनविशेषणं वा । अस्य द्रौणेः जुगुप्सितं निन्दितं एतत् शिशुनिधनाख्यं कर्म विगर्हयन्ती अरुददित्येकान्वयः ॥ कीदृशं कर्म ? द्रौणेरेव विप्रियं, न तु दुर्योधनस्य । भारते पांसुभिर्षेकादिना प्रियत्वोक्तेः ॥ इदानीं द्रौणिना शिश्वादिवधात्पूर्वदृष्टस्वप्नप्रकारमाह - तामिति । किरीटमाली अर्जुनः सान्त्वयन् दुःखं शमयन् तां द्रौपदीमाह ॥ १४ ॥ ॥ १५ ॥

---

१ कौरवसृञ्जयानां - क ग घ ज ; एतत्पक्षे अर्थानुवादोऽयम् । अत्र छकोशे कौरवपाण्डवानामित्यतः प्राक् 'यद्यपि पाण्डवा अपि कौरवा एव । तथापि सृञ्जयवंशजो धृष्टद्युम्नः पाण्डवानां सेनापतिरिति सृञ्जयानामित्युक्त'मित्यधिकं पठ्यते । श्रीधरीयेऽप्यदमेववाक्यं पठ्यते । २ विप्रियमेव तस्य - कोशान्तरेषु सर्वत्र ।
३ निधनं विश्रम्भं वा - क छ । निधनं विश्रमणं - ज ठ निधनं विशसनं वा - ग घ ।
४ अयं स्वकोशस्थः पाठः । अन्यत्र - स्वप्नमाहेति ।

तन्मा शुचस्ते प्रमृजाशु[1] भद्रे यद्ब्रह्मबन्धोः शिर आततायिनः ।
गाण्डीवमुक्तैर्विशिखैरुपाहरे त्वाक्रम्य यत्स्नास्यसि नेत्रजैर्जलैः ॥१६॥
इति प्रियां वल्गुविचित्रजल्पैः स सान्त्वयित्वाच्युतमित्रसूतः ।
अभ्यद्रवद्दंशित उग्रधन्वा कपिध्वजो गुरुपुत्रं रथेन ॥ १७ ॥
तमापतन्तं स विलोक्य दूरात्कुमारहोद्विग्नमना रथेन ।
पराद्रवत्प्राणपरीप्सुरुर्व्यां यावद्गमं रुद्रभयाद्यथार्कः ॥ १८ ॥

---

किमाह · तन्मा शुच इति । गाण्डीवात् निःसृतैः विशिखैः विविधशिखैः शरीरं खनित्वा विशन्तीति वा शरैः आततायिनः हनिष्यन्मरिष्यामीति क्रूरक्रियाकारिणः ब्रह्मबन्धोः ब्राह्मणाधमस्य द्रौणेः शिरः उपाहरे छेत्स्यामि । त्वं तच्छिरः पुरतः स्थितं पदा आक्रम्य पुत्रवधदुःखनिमित्तनयनजातैः[2] जलैः स्नास्यसि स्नानं करिष्यसि कारयिष्यतीति[3] यस्मात् तस्मात् हे भद्रे मा शुचः शोकं मा कुरु[4] । अश्रु पाणिना[5] निमृजन् मा रुदेत्यसान्त्वयदित्यन्वयः । शुचः मा[6] नैवेति वा । 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ॥ क्षेत्रदारहरश्चैव षडेते ह्याततायिनः' ॥ इति, 'आततायिनमायान्तं हन्यादेवाविचारयन्' इति स्मृतेश्च[7] ॥ १६ ॥

स कपिध्वजः इति वल्गवः मनोहराः विचित्राः विविधाः आश्चर्यभूताः जल्पाः वाग्विशेषाः ये तथोक्ताः तैः प्रियां भार्यां सान्त्वयित्वा रथेन गुरुपुत्रमभ्यद्रवदित्यन्वयः । अच्युत एव मित्रं अनिमित्तबन्धुः सूतः यन्ता च यस्य सः तथोक्तः । दंशितः कवचितः । उग्रं भयङ्करं धन्व[8] यस्य सः तथोक्तः ॥ १७ ॥

कुमारहा कुमारान् हतवान् द्रौणिः उर्व्यां भूमौ यावद्गमं यावद् गन्तुं शक्यं तावत् रथेन पराद्रवदित्यन्वयः । किं कृत्वा ? आपतन्तं अर्जुनं दूराद्विलोक्य उद्विग्नमनाः सम्भ्रान्तचेताः प्राणपरीप्सुः

---

१ अयं ङकोशपाठः । प्रमृजामीति प्रचलितः पाठः अनन्वितः । ङकोशानुसारिटीकापंक्त्यनुरोधेन 'निमृज्याश्रु' इति पाठेन भाव्यम् । २ जातैरिति नास्ति - ङ ३ कारयिष्यतीति नास्ति - क ख छ ठ ड ।

४ शोचनं मा - क । शोचनं न - घ ज शोकं न - ग ङ ट ड ।

५ आशु पाणिना बाष्पं निमृजन् - ख ड । एतदनन्तरं 'हे भद्रे' इत्यधिकं - ग घ ट ठ ज । अश्रु पाणिना निमृज्य हे भद्रे इत्यसान्त्वयत् - ङ । ६ 'मा' इति नास्ति - कोशान्तरेषु ।

७ एतदनन्तरं 'प्रतिविन्ध्यः श्रुतसोमः श्रुतकीर्तिस्तथैव च । शतानीकः श्रुतकर्मा पञ्चैते द्रौपदीसुताः,' इत्यधिकपाठः - ङ ट । 'इति स्मृतेश्चे'त्यस्योत्तरश्लोकटीकायां 'गुरुपुत्रमभ्यद्रवदि'त्यत्रान्वय इति भाति ।

८ धनुः - क घ ट ठ । उग्रो भयङ्करो धन्वा - ङ ।

यदाऽशरणमात्मानमैक्षत श्रान्तवाहनम्[2] ।
अस्त्रं ब्रह्मशिरो मेन आत्मत्राणं द्विजात्मजः ॥ १९ ॥
अथोपस्पृश्य सलिलं सन्दधेऽस्त्रं समाहितः ।
अजानन्नपि संहारं प्राणकृच्छ्र उपस्थिते ॥ २० ॥
ततः प्रादुष्कृतं तेजः प्रचण्डं सर्वतो दिशम् ।
प्रापतत्तदभिप्रेक्ष्य विष्णुं जिष्णुरुवाच ह ॥ २१ ॥

अर्जुन उवाच—

कृष्ण कृष्ण महाभाग भक्तानामभयङ्कर ।
त्वमेको दह्यमानानामपवर्गोऽसि संसृतेः ॥ २२ ॥

---

जीवनलाभेच्छुः ! क इव ? रुद्रभयात् आर्किः अर्कपुत्रः शनैश्चरः । पुरा यथा रुद्रस्य तृतीयनेत्रस्य तेजसः भयात् आर्किः परिधावति तथेति वा । पुराणान्तरप्रसिद्धमिदम्[1] । यथा क इति केचित्पठन्ति । ब्रह्मपञ्चमशिरच्छेदनाय प्रवृत्तं रुद्रं दृष्ट्वा ब्रह्मा परिधावतीत्येतत् असुरजनव्यामोहनायेति ज्ञातव्यम् ॥१८॥

अशरणं पालकरहितम् । आत्मत्राणं आत्मानं त्रायत इति । ब्रह्मशिरोनामास्त्रं ब्रह्मास्त्रम्[3] ॥ १९ ॥

अस्त्रप्रयोगे इतिकर्तव्यतामाह - अथेति । अथ ईक्षणानन्तरम् । उपस्पृश्य आचम्य । संहारं उपसंहारम् । अपिशब्देन विद्यायाः असाकल्यं दर्शयति । तर्हि किमर्थं सन्दधे इति तत्राह - प्राणेति । ततः तस्मात् अस्त्रात् उत्पन्नं सर्वतो दिशं प्रापतत्[4] व्याप्नुवत् प्रचण्डं अतिक्रूरं तत्तेजः अभिप्रेक्ष्य दृष्ट्वा जिष्णुः अर्जुनः । हेत्यनेन मनसि आश्चर्यं[5] कृत्वेति दर्शयति ॥ २० ॥ २१ ॥

कृष्ण सदानन्दात्मक । कृष्ण दुःखकर्षणशील । संसृतेः जातेन तापाग्निना दह्यमानानां पुंसां त्वमेक एव संसृतेः अपवर्गोऽसि दुःखनाशकरोऽसीत्यन्वयः ॥ २२ ॥

---

१ अयं पाठः ङगकोशेष्वस्ति । तथेति वायुपुराणान्तरेति - क घ ङ ट ठ ज । याद्युपत्ये 'रुद्रस्य तृतीयनेत्रतेजसो भयादार्किः परावर्तिति पुराणान्तरे प्रसिद्धमि'त्यस्ति । २ श्रान्तवाहनः - ज ।

३ 'ब्रह्मास्त्रं ॥ १९ ॥ अस्त्रप्रयोगे इतिकर्तव्यतामाहे,ति सकोशस्थः पाठः । अन्यत्र 'ब्रह्मास्त्रप्रयोगे, इत्यादिपाठः ।

४ व्यापतन् - ङ ५ हेत्यन्तर्मनसि - ख

त्वमाद्यः पुरुषः साक्षादीश्वरः प्रकृतेः परः ।
मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि ॥ २३ ॥

स एव[2] जीवलोकस्य मायामोहितचेतसः ।
विधित्सुः स्वेन वीर्येण श्रेयो धर्मादिलक्षणम् ॥ २४ ॥

तथाऽयश्चावतारस्ते भुवो भारजिहीर्षया ।
स्वानाञ्चानन्यभावानामनुध्यानाय चासकृत् ॥ २५ ॥

किमिदं स्वित्कुतो वेति देव देव न वेद्म्यहम् ।
सर्वतोमुखमायाति तेजः परमदारुणम् ॥ २६ ॥

---

अनिष्टपरिहारसामर्थ्यं तवास्तीत्याह– **त्वमिति** । पापानि औषत् अदहत् इति पुरुषः । 'सर्वान् पाप्मन औषत् तस्मात् पुरुष' इति श्रुतेः । पुरु बहु सरतीति वा । सर्वेषां आदौ भवनात् आद्यः । साक्षात् ईश्वरः निरुपचरितैश्वर्योपेतः । तत्कथमिति तत्राह– **प्रकृतेरिति** । चित्प्रकृतेरप्युत्तमः । एवंविधस्त्वं चिच्छक्त्या स्वरूपज्ञानशक्त्या मायां बन्धकशक्तिं निरस्य कैवल्ये प्रकृतिप्राकृतसंबन्धरहिते आत्मनि स्वरूपे स्थितः यतः अतः इत्यन्वयः । 'स भग[1]वः कस्मिन्प्रतिष्ठितः इति स्वे महिम्नि' इति श्रुतेः ॥ २३ ॥

सः प्रकृतिप्राकृतसंबन्धरहित एवं[3] बन्धकशक्त्या मोहितबुद्धेर्जीवलोकस्य स्वरूपवीर्येण धर्मादि-लक्षणं श्रेयो विधित्सुः, अवतरतीति शेषेणा[4]न्वयः ॥ २४ ॥

भग[5]वदवताराः ते यथा पुंसां अनुध्यानादिना मोक्षहेतवः, तथा भुवः भारजिहीर्षया कृतः अयं तव अवतारश्च अनन्यभक्तानां स्वानां असकृदनुध्यानाय स्यादित्यतो मोक्षं साधयतः तव भक्तैहिकदुःख-निवारकत्वं किं वर्णनीयमिति भावः । भूभारानुध्यानयोः समुच्चये चशब्दः ॥ २५ ॥

यत्तेजः परमदारुणं सर्वतोमुखमायाति हे देव तदिदं किंस्वित् कुतो वेति अहं न वेद्मीत्यन्वयः ॥ २६ ॥

---

१ अयं ङ ख पाठः । अन्यत्र भगवानिति । २ एष – क ग घ । टीकाननुगुणः पाठः ।
३ एवं – ख ग ङ । ४ अयं ग पाठः । अन्यत्र अवतरतीत्यन्वय इति । ५ भवदवताराः – ङ ।

श्रीभगवानुवाच–
वेत्थेदं द्रोणपुत्रस्य ब्राह्ममस्त्रं प्रदर्शितम् ।
नैवासौ वेद संहारं प्राणबाध उपस्थिते ॥ २७ ॥

न ह्यस्यान्यतमं किञ्चिदस्त्रं प्रत्यवकर्षणम् ।
जह्यस्त्रतेज उन्नद्धमस्त्रज्ञो ह्यस्त्रतेजसा ॥ २८ ॥

सूत उवाच —
श्रुत्वा भगवता प्रोक्तं फल्गुनः परवीरहा ।
स्पृष्ट्वाऽपस्तं परिक्रम्य ब्राह्मं ब्राह्माय सन्दधे ॥ २९ ॥

संहत्यान्योन्यमुभयोस्तेजसी शरसंवृते ।
आवृत्य रोदसी खञ्च ववृधातेऽर्कवह्निवत् ॥ ३० ॥

दृष्ट्वाऽस्त्रतेजस्तु तयोस्त्रींल्लोकान्प्रदहन्महत् ।
दह्यमानाः प्रजास्सर्वाः सांवर्तकममंसत ॥ ३१ ॥

---

यत्तेजः तदिदं द्रोणपुत्रस्य ब्राह्ममस्त्रं वेत्थेत्यन्वयः । कीदृशं ? प्राणबाधे जीवाधिष्ठितदेहनाशे उपस्थिते आसन्ने सति प्रदर्शितम् । प्राणबाध इत्येतत्कुतोऽवगतमिति तत्राह– नेति । असौ द्रौणिः अस्य अस्त्रस्य संहारं न वेदेति यस्मात् अतो ज्ञायते प्राणबाधे मुक्तमिति ॥ २७ ॥

अस्त्राणां अन्यतमं किञ्चिदस्त्रं अस्य प्रत्यवकर्षणं[1] प्रतीकारसमर्थं निवर्तकं नहि । अतः अस्त्रज्ञः विसर्गोपसंहारपूर्वकमस्त्रं जानन् त्वं अस्त्रतेजसा उन्नद्धं उद्धतं अस्त्रतेजः जहीत्यन्वयः । हिशब्दः हेतौ ॥ २८ ॥

परेषां शत्रूणां संबन्धिनः वीरान् हन्तीति परवीरहा । शत्रुवीरानिति वा । तं कृष्णं परिक्रम्य प्रदक्षिणीकृत्य ॥ २९ ॥

उभयोः अस्त्रयोः शरसंवृते तेजसी अन्योन्यं संहत्य संघट्टनं कृत्वा रोदसी द्यावापृथिव्यौ खं आकाशञ्च आवृत्य अर्कवह्निवत् ववृधाते इत्यन्वयः ॥ ३० ॥

सांवर्तकं प्रलयकालीनदाहं अमंसत न्यरूपयन्[2] ॥ ३१ ॥

---

१. प्रत्यपकर्षणं – ख ङ  २. न्यरूपयन् – ख ङ

प्रजोपप्लवमालक्ष्य लोकव्यतिकरं च तम् ।
मतञ्च वासुदेवस्य संजहारार्जुनो द्वयम् ॥ ३२ ॥

तत आसाद्य तरसा दारुणं गौतमीसुतम् ।
बबन्धामर्षताम्राक्षः पशुं रशनया यथा ॥ ३३ ॥

शिविराय निनीषन्तं रज्ज्वा बध्वा रिपुं बलात् ।
प्राहार्जुनं प्रकुपितो भगवानम्बुजेक्षणः ॥ ३४ ॥

मैनं पार्थार्हसि त्रातुं ब्रह्मबन्धुमिमं जहि ।
योऽसावनागसः सुप्तानवधीन्निशि बालकान् ॥ ३५ ॥

मत्तं प्रमत्तमुन्मत्तं सुप्तं बालं स्त्रियं जडम् ।
प्रपन्नं विरथं भीतं न रिपुं हन्ति धर्मवित् ॥ ३६ ॥

---

व्यतिकरः विनाशः[1] । अस्त्रद्वयोपसंहारलक्षणं वासुदेवमतम् ॥ ३२ ॥

गौतमीसुतं कृपीपुत्रम् । रशनया रज्ज्वा ॥ ३३ ॥

शिविराय स्कन्धावाराय, सेनानिवेशनस्थानायेति यावत् । निनीषन्तं नेतुमिच्छन्तम् ॥ ३४ ॥

हे पार्थ ब्रह्मबन्धुं ब्राह्मणाधमं एनं अश्वत्थामानं त्रातुं नार्हसि । किन्तु योऽसौ निशि रात्रौ सुप्तान् बालकान् अवधीत् इमं जहि हनेत्यन्वयः । अनागसः अकृतापराधान् । अत्राश्वत्थाम्नः वध्यत्वे, अनागस्त्वं सुप्तत्वं बालकत्वमिति हेतुत्रयमनादृत्य तद्धननं कारणमिति ज्ञातव्यम् । 'अनागसं प्रसुप्तञ्च बालकं हन्ति यो नरः । स खण्डशो निशातव्यः इत्येवं मनुरब्रवीत्' ॥ इति स्मृतेः ॥ ३५ ॥

रिपुणा नैते हन्तव्या इत्याह— **मत्तमिति** । मत्तं मद्यादिपानेन मदान्धम् । प्रमत्तं विस्मृतिमन्तम् । उन्मत्तं ग्रहग्रस्तम् । जडं स्वतो विवेकज्ञानशून्यम् । सुप्तं निद्रितम् । बालं दिग्विशेषानभिज्ञम् । स्त्रियं बाल्ये तारुण्ये वार्धके च पराधीनवृत्तिम् । प्रपन्नं शरणागतम् । विरथं रथादियुद्धसाधनरहितम् । विपथं युद्धमार्गादपक्रान्तमिति केचित् पठित्वा व्याचक्षते । तत् 'भी भयचलनयोरि'ति धातोः भीतं चलितं युद्धमार्गादपसृतमित्यनेन पुनरुक्तम् ॥ न च कम्पितार्थत्वं, धातुपाठविरोधात् । अतोऽनुपासितगुरुचरणैरुत्प्रेक्षितमित्युपेक्षणीयम् ॥ ३६ ॥

---

[1] अयं ङ पाठः । अन्यत्र नाशः ।

स्वप्राणान्यः परप्राणैः प्रपुष्णात्यघृणः खलः ।
तद्वधस्तस्य हि श्रेयः यद्दोषाद्यात्यधः पुमान् ॥ ३७ ॥

प्रतिश्रुतश्च भवता पाञ्चाल्यै शृण्वतो मम ।
आहरिष्ये शिरस्तस्य यस्ते मानिनि पुत्रहा ॥ ३८ ॥

तदसौ वध्यतां पाप आततायात्मबन्धुहा ।
भर्तुश्च विप्रियं वीर कृतवान्कुलपांसनः ॥ ३९ ॥

एवं परीक्षता धर्मं पार्थः कृष्णेन चोदितः ।
नैच्छद्धन्तुं गुरुसुतं यद्यप्यात्महनं महान् ॥ ४० ॥

अथोपेत्य स्वशिबिरं गोविन्दप्रियसारथिः ।
न्यवेदयत्तं प्रियायै शोचन्त्या आत्मजान् हतान् ॥४१॥

---

खलः इन्द्रियारामः । अघृणः दयारहितः । तद्वधः तस्य हिंसकस्य हननं श्रेयः साधुः । कुतः ? येषां हिंसादिदोषात् अधः नरकं यातीति यस्मात् तस्मादिति ॥ ३७ ॥

प्रतिज्ञा च रक्षणीयेत्याह– प्रतिश्रुतमिति । हे मानिनि मानार्हे । यः ते पुत्रान् हतवान् तस्य शिरः आहरिष्ये इति मम शृण्वतः सतः पाञ्चाल्यै द्रौपद्यै प्रतिज्ञातश्च यस्मात् तस्मादित्यन्वयः ॥

'आत्मबन्धुः सुतस्तोकः पुत्रोऽङ्गज उदाहृतः' इत्यभिधानात् आत्मबन्धून्– सुतान् हतवानिति यस्मात् तस्मात् असौ पापः । विप्रियं तु लोकदृष्ट्या इति ज्ञातव्यम् ॥ ३९ ॥

हरिणा अर्जुनं प्रति द्रौणिवधप्रतिपादनं अर्जुनधर्मपरीक्षणाभिप्रायमेव, न तु वधाभिप्रायमिति कथनपूर्वकं अर्जुनस्य गुरुभक्त्यतिशयं कथयति– एवमिति । पार्थः गुरुसुतं हन्तुं नैच्छदित्यन्वयः । कथंभूतः ? यद्यपि एवं धर्मं परीक्षता कृष्णेन चोदितः । तथापि नैच्छन् । कथंभूतम् ? आत्मानं हतवन्तम् । अयमपि कश्चिद्धेतुः । पुनरपि कथंभूतः ? महान् महापुरुषः । महत्वान्नैच्छदिति भावः ॥ ४० ॥

अथ गोविन्दः प्रियश्च सारथिश्च यस्य स तथोक्तः । सः पार्थः स्वशिबिरं उपेत्य द्रौणिना हतान् आत्मजान् पुत्रान् प्रति शोचन्त्यै प्रियायै द्रौपद्यै तं न्यवेदयदित्येकान्वयः ॥ ४१ ॥

---

१ नतु - ख छ ट ।

तथाहृतं पशुवत्पाशबद्धं अवाङ्मुखं कर्मजुगुप्सितेन ।
निरीक्ष्य कृष्णाऽपकृतं गुरोः सुतं वामस्वभावा कृपया ननाम ॥ ४२ ॥

उवाच चासहन्त्यस्य बन्धनाऽऽनयनं सती ।
मुच्यतां मुच्यतामेष ब्राह्मणो नितरां गुरुः ॥ ४३ ॥

सरहस्यो धनुर्वेदः सविसर्गोपसंयमः ।
अस्त्रग्रामश्च भवता शिक्षितो यदनुग्रहात् ॥ ४४ ॥

स एष भगवान्द्रोणः प्रजारूपेण वर्तते ।
तस्यात्मनोऽर्धं पत्न्यास्ते नान्वगाद्वीरसूः कृपी ॥४५॥

---

वामस्वभावा मृदुस्वभावा, चास्तरशीलेति यावत् । कृष्णा तथाहृतं, तदेवाह– पशुवत् पाशेन बद्धं कर्मजुगुप्सितेन कर्मणा लज्जया अवाङ्मुखं अपकृतं पुत्रहत्यया अपकर्तारमपि गुरोः सुतं निरीक्ष्य कृपया ननामेत्येकान्वयः ॥ ४२ ॥

न केवलं नत्वा तूष्णीमभूत् , किन्तु वचनश्चोवाचेत्याह– उवाचेति । अस्य द्रौणेः बन्धनेन आनयनं असहमाना । सती प्रशस्तसौशील्यादिगुणवती । ब्राह्मण एव वर्णानां गुरुः, अयं च[2] नितरां युष्माकं गुरुः ॥ ४३ ॥

अतिशयितगुरुत्वमहा-सरहस्य इति। सरहस्यः सकीलकः धनुर्वेदः सविसर्गोपसंयमः प्रयोगोपसंहारसहितः अस्त्रग्रामः ब्रह्मास्त्राद्यस्त्रसमूहः यस्य द्रोणस्य अनुग्रहात् भवता शिक्षितः अभ्यस्तः।।४४।।

स एषः द्रोणः भगवान् प्रजारूपेण 'आत्मा वै पुत्रनामासि' इति[3] श्रुतेः पुत्ररूपेण वर्तते यतः अतः । गुरुपुत्रस्य[4] गुरुवत् पूजार्हत्वादिति भावः । किञ्च अन्योऽपि हेतुरस्तीत्याह– तस्येति । तस्य द्रोणस्य आत्मनः शरीरस्य अर्धं अर्धाङ्गी सती वीरसूः वीरपुत्रवती कृपी संप्रत्यास्ते । पतिं नान्वगात् । अनुगमनं न कृतवती यतः अतः । गुरुपत्नीभक्त्या च मुच्यतामिति भावः ॥ ४५ ॥

---

१ कर्मणेत्यतः पूर्वं जुगुप्सितेनेति विशेषणेन भाव्यमिति भाति । २ अयं त्वतितरां - ख ।
३ पुत्रनामासीदिति – क ड ख। यादुपत्यं च। ४ अयं ड पाठः। अन्यत्र गुरुपुत्रस्येति नास्ति ।

तद्धर्मज्ञ महाभाग भवद्भिः कौरवं कुलम् ।
वृजिनं नार्हति प्राप्तुं पूज्यं वन्द्यमभीक्ष्णशः ॥ ४६ ॥
मा रोदीदस्य जननी गौतमी पतिदेवता ।
यथाऽहं मृतवत्साऽऽर्ता रोदिम्यश्रुमुखी मुहुः॥ ४७ ॥
यैः कोपितं ब्रह्मकुलं राजन्यैरकृतात्मभिः ।
तत्कुलं प्रदहत्याशु सानुबन्धं शुचार्पितम् ॥ ४८ ॥
सूत उवाच —
धर्म्यं न्याय्यं सकरुणं निर्व्यलीकं समं महत् ।
राजा धर्मसुतो राज्याः प्रत्यनन्दद्वचो द्विजाः॥ ४९ ॥

---

न केवलं गुरुभक्तिरेवात्र हेतुः अन्योऽप्यस्तीत्याह– तदिति । गुरौ गुरुपुत्रेषु च आचार[1]लक्षणः यः धर्मः तं जानातीति धर्मज्ञः । हे धर्मज्ञ ! भगानां भाग्यानां समुदायः भागः । महान् भागः यस्य सः तथा तस्य संबुद्धिः महाभाग ! अश्वत्थाम्नो दुःखे सति तन्मातुरपि दुःखं स्यात् । तेन तत्कोपेन अस्मत्कुलस्यापि[2] पापं भवेदिति यत् तत्[3] तस्मात् अभीक्ष्णशः सर्वदा सर्वैः पूज्यं वन्द्यं कौरवं कुलं भवद्भिः वृजिनं पापं तन्निमित्तं दुःखं वा प्राप्तुं नार्हति योग्यं न भवति ॥ ४६ ॥

यथा अश्रुमुखी मृतवत्सा मृतपुत्रा अत एव आर्ता अहं मुहुः अनिशं रोदिमि तथा पतिरेव देवता यस्याः सा तथा गौतमी कृपी अस्य अश्वत्थाम्नः जननी माता मा प्र[4]रोदीदित्येकान्वयः । तस्मात् अस्मत्कुलहिताय वा[5] मुच्यतामयं गुरुपुत्र इत्यर्थः ॥ ४७ ॥

विपक्षे बाधकमाह– यैरिति । अकृतात्मभिः अशिक्षितबुद्धिभिः यैः राजन्यैः ब्राह्मणकुलं कोपितं तत् कुपितं शुचा अर्पितं प्राप्तशोकं सानुबन्धं समूलभूतं तेषां राज्ञां कुलं तत्क्षणमेव प्र[6]दहतीत्यन्वयः ॥ ४८ ॥

धर्म्यं धर्मादनपेतम् । न्याय्यं न्यायोपेतम् । दयया सहितम् । निर्व्यलीकं सत्यम्[7] । समं शत्रुमित्रभावशून्यम् । सर्वशास्त्रानुसृतं वा । अर्थतो महत् ॥ ४९ ॥

---

१ आचारनमनलक्षणः– क ग घ ङ छ ट ठ २ अपीति नास्ति - ङ ३ अयं ङ पाठः । अन्यत्र-यस्मात्
४ प्रेति ङकोशे नास्ति । ५ वाऽऽशु - ङ । ६ प्रदहतीति ङ पाठः अन्यत्र-दहतीति ।
७ सत्यमिति खङपाठः । अन्यत्र नास्ति ।

नकुलः सहदेवश्च युयुधानो धनञ्जयः ।
भगवान्देवकीपुत्रो ये चान्ये याश्च योषितः ॥ ५० ॥

तत्राहामर्षितो भीमः तस्य श्रेयान्वधः स्मृतः ।
न भर्तुरात्मनश्चार्थे योऽहन्सुप्तान् शिशून् वृथा ॥ ५१ ॥[1]

निशम्य भीमगदितं द्रौपद्याश्च चतुर्भुजः ।
आलोक्य वदनं सख्युरिदमाह हसन्निव ॥ ५२ ॥

श्री भगवान् उवाच —

ब्रह्मबन्धुर्न हन्तव्य आततायी वधार्हणः ।
मयैवोभयमाम्नातं परिपाह्यनुशासनम् ॥ ५३ ॥

कुरु प्रतिश्रुतं सत्यं यत्तत् सान्त्वयता प्रियाम् ।
प्रियंश्च भीमसेनस्य पाञ्चाल्या मह्यमेव च ॥ ५४ ॥

---

एते नकुलादयश्च प्रत्यनन्दन्नित्यध्याहृत्यान्वयः । युयुधानः सात्यकिः । ये चान्ये अनुजीविनः ते च । याश्च स्त्रियः ताश्च ननन्दुरिति भावः ॥ ५० ॥

तत्र तस्यां अवस्थायां अमर्षितः भीमः आहेत्यन्वयः । यो भर्तुः दुर्योधनस्य आत्मनः स्वस्य च नार्थे सुप्तान् शिशून् वृथा अहन् हतवान् । वृथाशब्दो वध्यविपर्ययः । वध्यानामर्थे च न भवति । तस्य वधः तस्यैव श्रेयान् स्मृतः । नास्माकं पापमिति भावः ॥ ५१ ॥

चतुर्भुजः[2] भीमगदितं श्रुत्वा द्रौपद्याश्च, वचनमिति शेषः । सख्युः अर्जुनस्य वदनं आलोक्य मन्दस्मितं कुर्वन् इदमाहेत्येकान्वयः[3] ॥ ५२ ॥

हन, न हन[4], इत्युभयं मयैव आम्नातं अभिहितं यस्मात् तस्मात् अनुशासनं आत्मवचनं परिपाहीत्यन्वयः ॥ ५३ ॥

---

१ न भर्तुरर्थे, नात्मनश्चार्थे इत्युक्त्वा शिशूनामप्यर्थे नेत्यभिप्रायेण वृथेत्युक्तिः ।
२ अयं उपाठः । कोशान्तरेषु 'चतुर्भुज....सख्युः' इति स्थाने 'स सख्युः' इत्येव पठ्यते ।
३ एतदनन्तरं मूलकोशे 'स्मयन्निवेति पाठे अनुस्मितं कुर्वन्निवेत्यर्थः' इति अधिकं पठ्यते ।
४ हननाहनने - ठ ५ मतं च - ज

सूत उवाच —

अर्जुनः सहसाऽऽज्ञाय हरेर्हार्दमथासिना ।
मणिं जहार मूर्धन्यं द्विजस्य सहमूर्धजम् ॥ ५५ ॥

विमुच्य रशनाबद्धं बालहत्या हतप्रभम् ।
तेजसा मणिना हीनं शिबिरान्निरवापयत् ॥ ५६ ॥

बन्धनं द्रविणादानं स्थानान्निर्यापणं तथा ।
एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः ॥ ५७ ॥

॥ इति श्रीमद्भागवते सप्तमोऽध्यायः ॥

---

अथ अर्जुनः सहसा झटिति हरेः हार्दं[1] हृदि स्थितं आज्ञाय सम्यक् ज्ञात्वा क्षुरधारेण असिना द्विजस्य सहमूर्धजं केशैः सहितम् । मूर्धन्यं मूर्ध्नि सहोत्पन्नं मणिं जहारेत्यन्वयः ॥ ५५ ॥

तेजसा सामर्थ्येन शरीरकान्त्या वा । रत्नेन च रहितं शिशूनां वधेन हतप्रभं अलक्ष्मीनिधानं रज्ज्वा बद्धं विमुच्य शिबिरात् निरवापयत्[2] शवनिर्गमवत् निष्कासयामासेत्येकान्वयः ॥ ५६ ॥

ब्रह्मबन्धूनां प्राणत्यागलक्षणमरणप्रतिनिधिरयं वध इत्याह— बन्धनमिति । ब्रह्मबन्धूनां एष एव[3] वधः वधप्रतिनिधिः । अन्यो दैहिको नेत्रोत्पाटनादिको नास्तीत्यन्वयः । शास्त्रविहितो नास्तीति भावः । कोऽसाविति तदाह— बन्धनमिति । पाशेन करौ पृष्ठे कृत्वा बन्धनम् । द्रविणादानं हिरण्याद्याहरणम् । स्थानान्निर्यापणं स्वदेशान्निर्गमनम् । तथाशब्दः प्रत्येकमभिसंबन्धयितव्यः[4] । 'तां[5] सान्त्वयन्नित्यारभ्य नान्योऽस्ति दैहिक' इत्यन्तं यदुक्तं तदिदं द्रौणिना स्वप्ने दृष्टं कथितम् । अन्यथा ग्रन्थान्तरविरोधः । तत्र भीमेन कृतमित्युक्तत्वादिति ज्ञातव्यम् ॥ ५७ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुविरचितायां
प्रथमस्कन्धे सप्तमोऽध्यायः ॥

---

१ अयं डपाठः । अन्यत्र हार्दमिति प्रतीकग्रहणं न कृतम् ।

२ निरयापयन् - क ख ङ च ट । याडुपत्येऽपि । ३ अयं डपाठः । अन्यत्र एवंविधः इति पठयते ।

४ अयं ख डपाठः । कोशान्तरेषु - अभिसन्धायितव्यः । ५ अयं डपाठः ।अन्यत्र तामिति नास्ति ।

## ॥ अथाष्टमोऽध्यायः ॥

सूत उवाच –

पुत्रशोकातुराः सर्वे पाण्डवाः सह कृष्णया ।
स्वानां मृतानां यत्कृत्यं चक्रुर्निर्हरणादिकम् ॥ १ ॥

अथो निशामयामास कृष्णायै भगवान्पुरा ।
पतितायाः पादमूले रुदन्त्या यत्प्रतिश्रुतम् ॥ २ ॥

पश्य राज्यरिदारांस्ते रुदतो मुक्तमूर्धजान् ।
आलिङ्ग्य स्वपतीन्भीमगदाभग्नोरुवक्षसः ॥ ३ ॥

अथ ते सम्परेतानां स्वानामुदकमिच्छताम् ।
दातुं सकृष्णा गङ्गायां पुरस्कृत्य ययुस्त्रियः ॥ ४ ॥

---

भक्तिविधानार्थं भक्तवात्सल्याद्यचिन्त्यमाहात्म्यं मुरारेर्निरूप्यतेऽस्मिन्नध्याये । तदर्थं मृतानां यत्कर्तव्यं लौकिकं तदुच्यते– पुत्रशोकेति । सर्वे पाण्डवाः मृतानां प्राणवियोगं प्राप्तानां स्वानां बन्धूनां यत्कृत्यं निर्हरणादिकं शवदाहादिकं तच्चक्रुरित्यन्वयः ॥ १ ॥

'भीमाहतान्दर्शयिष्ये'[1] इति पुरा यत्प्रतिश्रुतं तत् अस्यै द्रौपद्यै निशामयामास दर्शयामासे[2]त्यन्वयः ॥ २ ॥

हे राज्ञि! ते अरिदारान् शत्रुभार्याः मुक्तमूर्धजान् मुक्तकेशीः[3] भीमस्य गदया भग्नाः ऊरवः उत्सङ्गाश्च वक्षांसि च येषां ते तथोक्ताः । ऊरूणि विस्तीर्णानि वक्षांसीति वा ॥ ३ ॥

स्त्रियः पुरस्कृत्य । सम्परेतानां युद्धे मृतानाम्[4] । सकृष्णाः द्रौपद्या सहिताः । कृष्णेन यादवेन्द्रेण सहिता वा ॥ ४ ॥

---

४

१ भीमहतान् दर्शये - क ङ ज ट । भीमाहतान् दर्शये- ङ । २ दर्शयांचकार - ङ ।
३ मूर्धजाः केशाः - ङ । ४ अयं ग ङ ट पाठः । अन्यत्र-संपरेता युद्धे मृताः ।

ते निनीयोदकं सर्वे विलप्य च भृशं पुनः ।
आप्लुता हरिपादाब्जरजःपूतसरिज्जले ॥ ५ ॥
तत्रासीनं कुरुपतिं धृतराष्ट्रं सहानुजम् ।
गान्धारीं पुत्रशोकार्तां पृथां कृष्णाञ्च माधवः ॥ ६ ॥
सान्त्वयामास मुनिभिर्हतपुत्रान्छुचार्पितान् ।
भूतेषु कालस्य गतिं दर्शयन्नप्रतिक्रियाम् ॥ ७ ॥
घातयित्वाऽसतो राज्ञ्याः कचस्पर्शहतायुषः ।
साधयित्वाऽजातशत्रोः स्वाराज्यं कितवैर्हृतम् ॥ ८ ॥
याजयित्वाऽश्वमेधैस्तं त्रिभिरुत्तमकल्पकैः ।
तद्यशः पावनं दिक्षु शतमन्योरिवातनोत् ॥ ९ ॥

---

ते पाण्डवाः तिलोदकं निनीय दत्वा, भृशं विलप्य परिदेवनलक्षणं रोदनं कृत्वा, पश्चात् हरेः पादपद्मपरागेण पूते शुद्धे सरितः गङ्गायाः जले आप्लुताः स्नाताः अभूवन्नित्यन्वयः ॥ ५ ॥

सहानुजं अनुजेन सङ्घेन सह वर्तमानम् ॥ ६ ॥

मुनिभिः सह । हताः पुत्राः येषां ते तथा तान् । भूतेषु प्राणिषु कालरूपस्य हरेः गतिं विक्रमं अप्रतिक्रियां अपरिहार्यां दर्शयन् ॥ ७ ॥

घातयित्वा वधं कारयित्वा, पाण्डवैरिति शेषः । कचानां केशानां स्पर्शेन हतानि नष्टानि आयूंषि येषां ते तथा तान् । अजातः दुर्योधनः शत्रुः यस्य सः तथोक्तः । तथाचोक्तं– 'दुर्योधनादयः सर्वे स्वजाता जज्ञिरे बलात् । व्यासेनानन्तवीर्येण मार्तण्डाधिकतेजसा' इति प्रयोगात् । न जातः शत्रुः यस्य स तथोक्त इति केचित् ॥ कितवैः चोरप्रायैः दुर्योधनादिभिः ॥ ८ ॥

न्यूनाधिककल्पयोः उत्तमकल्पकैः । शतं मन्यवः क्रतवः यस्य स तथा तस्येन्द्रस्य यशः वामनावतारे हरिः यथा ततान तथा आतनोत् । 'तनु विस्तारे' ॥ ९ ॥

---

१ अयं ट पाठः । अच्युतो राज्ञ्याः - ग ज । ऽसतो राज्ञः - क ङ ट ।
२ तेजसः - ख ङ ट ड । आत् व्यापात् जाता अजाता इत्यर्थः ।

आमन्त्र्य पाण्डुपुत्रांश्च शैनेयोद्धवसंयुतः ।
द्वैपायनादिभिर्विप्रैः पूजितैः प्रतिपूजितः ॥ १० ॥

गन्तुं कृतमतिर्ब्रह्मन्द्वारकां रथमास्थितः ।
उपलेभेऽभिधावन्तीमुत्तरां भयविह्वलाम् ॥ ११ ॥

उत्तरा उवाच—

पाहि पाहि महायोगिन्देव देव जगत्पते ।
नान्यं त्वदभयं पश्ये यत्र मृत्युः परस्परम् ॥ १२ ॥

अभिद्रवति मामीश शरस्तप्तायसो विभो ।
कामं दहतु मां नाथ मा मे गर्भो निपात्यताम् ॥१३॥

सूत उवाच—

उपधार्य वचस्तस्याः भगवान्भक्तवत्सलः ।
आपाण्डवमिदं कर्तुं द्रौणेरस्त्रमबुध्यत ॥ १४ ॥

---

भगवान् यदा द्वारकां गन्तुं कृतमतिः रथमास्थितः तदा पाहि पाहीत्यादिवादिनीं भयेन विवशां आत्मानमुद्दिश्य आगच्छन्तीं उत्तरां उपलेभे ददर्शेत्यन्वयः ॥ ११ ॥

यत्र मर्त्यलोके परस्परं मृत्युः । तत्र त्वदन्यं अभयं अभयप्रदं[1] न पश्ये । स्वस्याभिमतप्रदर्शनाय[2]ात्मनेपदप्रयोगः ॥ १२ ॥

अयसः विकारः आयसः । ततश्चासावायसश्चेति तथोक्तः । शरः हननशीलः वाणः । शरीर[3]विनाशनशक्तिप्रदर्शनाय– आयसेति ।

अपरिच्छिन्नस्य तव गर्भरक्षणं अशक्यसाधनं किं ? इति[4] द्योतनाय– **विभो इति** । नाथ ! ऐश्वर्यशक्तियुत । मां यथेष्टं दहतु । किं तर्हि ? मम गर्भो मा न निपात्यतामिति ॥ १३ ॥

भगवान् तस्याः उत्तरायाः वचः उपधार्य श्रुत्वा निश्चित्य । इदं अवनिमण्डलं अपाण्डवं पाण्डुपुत्ररहितं कर्तुं मुक्तं द्रौणेः अस्त्रं अबुध्यतेत्यन्वयः ॥ १४ ॥

---

१ प्रदं चेति चकारोऽधिकः पठ्यते – क ग ङ ज ट ठ ड । २ प्रकाशनाय – क ग छ ज ट ठ ड ।
३ शरविनाशन – ड ४ अयं ख ग ण ट ड पाठः । मूलकोशे क ज ठ कोशेषु च शक्यसाधनमिति ।

तर्ह्येवाथ भृगुश्रेष्ठ पाण्डवाः पञ्चसायकान् ।
आत्मनोऽभिमुखान्दीप्तानालक्ष्यास्त्राण्युपाददुः ॥१५॥

व्यसनं वीक्ष्य तत्तेषां अनन्यविषयात्मनाम्
सुदर्शनेन स्वास्त्रेण स्वानां रक्षां व्यधाद्विभुः ॥ १६ ॥

अन्तःस्थः सर्वभूतानामात्मा योगेश्वरो हरिः ।
स्वमाययाऽवृणोद्गर्भं वैराट्याः कुरुतन्तवे ॥ १७ ॥

यद्यप्यस्त्रं ब्रह्मशिरस्त्वमोघञ्चाप्रतिक्रियम् ।
वैष्णवं तेज आसाद्य समशाम्यद् भृगूद्वह ॥ १८ ॥

---

हे भृगुश्रेष्ठ ! अथ तर्ह्येव तदानीमेव पञ्च पाण्डवाः आत्मनः अभिमुखान् ज्वलितान् पञ्च सायकान् अन्तकरान् बाणान् आलक्ष्य अनन्तरमेव अस्त्राण्युपाददुः । 'षोऽन्तकर्मणि' इति धातोः स्यन्ति[2] अन्तं कुर्वन्तीति सायकाः । ण्वुल् आयादेशः युगागमश्च[3] ॥ १५ ॥

अनन्यविषयः[4] आत्मा येषां ते अनन्यविषयात्मनः तेषाम् । अन्येषु भगवद्वार्तारहितेषु विषयेषु शब्दादिषु आत्मा मनः न गच्छति येषां ते तथोक्ताः तेषामिति वा । पाण्डवानां तद्व्यसनं वीक्ष्य विभुः सुदर्शनाख्यस्वास्त्रेण स्वानां पाण्डवानां रक्षां व्यधात् इत्येकान्वयः ॥ १६ ॥

सर्वप्राणिनां अन्तर्हृदि स्थितः आत्मा आदानादिकर्ता । योगेश्वरः सहजाणिमादियोगैश्वर्यवान् । सर्वोपायानामीश्वरो वा । हरिः संसारदुःखहरणशीलः कुरूणां सन्तत्यविच्छेदाय वैराट्याः विराटपुत्र्या उत्तरायाः गर्भं स्वमायया स्वयोगसामर्थ्येन यथा ब्रह्मास्त्रं न दहेत् तथा आवृणोत् । आत्मना गूहितमकरोत् इत्येकान्वयः ॥ १७ ॥

यद्यपि ब्रह्मशिरोऽस्त्रन्तु अमोघं अव्यर्थं अप्रतिक्रियं प्रतीकाररहितञ्च । तथापि वैष्णवं तेज आसाद्य सम्यक् अशाम्यदित्येकान्वयः ॥ १८ ॥

---

१ एतदनन्तरम् 'इत्येकान्वयः' इत्यपि पठ्यते - ङ । २ अयं ङ ग कोशपाठः । अन्यत्र तं अन्तानिति ।
३. अयादेशश्च - ग छ । अकादेशो युगागमश्चेति [illegible] नास्ति ।
४ च.ठ पाठोऽयमेव । अन्यत्र - न अन्यविषयः ।

मा मंस्था ह्येतदाश्चर्यं सर्वाश्चर्यमयेऽच्युते ।
य इदं मायया देव्या सृजत्यवति हन्त्यजः ॥ १९ ॥
ब्रह्मतेजो विनिर्मुक्तैरात्मजैस्सह कृष्णया ।
प्रयाणाभिमुखं कृष्णमिदमाह पृथा सती ॥ २० ॥

पृथा उवाच —

नमस्ये पुरुषं त्वाद्यमीश्वरं प्रकृतेः परम् ।
अलक्ष्यं सर्वभावानामन्तर्बहिरपि ध्रुवम् ॥ २१ ॥
मायायवनिकाच्छन्नो मयाऽधोक्षज मर्त्यया ।
न लक्ष्यसे मूढदृशा नटो नाट्यधरो यथा ॥ २२ ॥

---

यः मायया देव्या देदीप्यमानया[1] इच्छया ब्रह्मादिजगत्सृजति रक्षति संहरति । स्वयं जन्मरहितः तस्मिन् सर्वाश्चर्यस्वरूपे अच्युते विनाशरहिते हरौ एतत् ब्रह्मास्त्रोपशमनलक्षणं आश्चर्यं मा मंस्थाः न चिन्तयेत्येकान्वयः ॥ १९ ।

ब्रह्मास्त्रतेजोमुक्तैः आत्मजैः युधिष्ठिरादिभिः पुत्रैः सह सती साध्वी ॥ २० ॥

संसारिव्यावृत्तये आद्यं पुरुषमिति । हिरण्यगर्भव्यावृत्तये ईश्वरमिति । जगत्सृष्ट्याद्यैश्वर्यवत्त्वं न ततो व्यावृत्तमित्यतः प्रकृतेः परमिति । एतत्सर्वं कुत इत्यत उक्तं–अलक्ष्यमिति । लक्षणया वृत्त्याऽपि ज्ञातुमशक्यम् । तर्हि शून्यप्रायमित्यत उक्तं– सर्वभावानामिति[2] । सर्वभावानां अन्तर्बहिश्च व्याप्य स्थितम् । 'अन्तर्बहिश्च तत्सर्वमि'ति श्रुतेः । आद्यस्य कथं अन्तर्बहिश्च व्याप्यस्थितत्वमित्यत उक्तं भूतप्रलयेऽपि ध्रुवं नित्यं अविनाशिनम् ॥ २१ ॥

त्वां नमस्य इत्यपरोक्षतया उक्तस्य कथमलक्ष्यत्वमिति तत्राह– मायेति । हे अधोक्षज वशीकृतेन्द्रिय । जीवस्वगुणाच्छादकपरमाच्छादकोभयविधमायाख्यतिरस्करिण्या[4] छन्नः त्वं मूढदृशा विपरीतज्ञानया मर्त्यया मया लक्ष्यमाणोऽपि न लक्ष्यसे । यथा नाट्यधरः नटः दृश्यमानोऽपि तदङ्गुल्याद्यभिनयलक्षितकथाविशेषाज्ञानेन[5] नरेण न लक्ष्यते तथा । तस्मात् अलक्ष्यत्वमित्यर्थः ॥ २२ ॥

---

१ अयं ङपाठः । अन्यत्र दीप्यमानया ।

२ सर्वभूतानां - ख च छ । यादुपत्यश्रीधरीययोरपि सम्मतः । ३ भूतानां - ङ ।

४ जवनिका - क ग छ ठ । यादुपत्यस्यापि सम्मतः । ५ विशेषाज्ञेन - ङ ।

तथा परमहंसानां मुनीनाममलात्मनाम् ।
भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः ॥ २३ ॥

कृष्णाय वासुदेवाय देवकीनन्दनाय च ।
नन्दगोपकुमाराय गोविन्दाय नमो नमः ॥ २४ ॥

नमः पङ्कजनाभाय नमः पङ्कजमालिने ।
नमः पङ्कजनेत्राय नमस्ते पङ्कजांघ्रये ॥ २५ ॥

---

इतोऽपि मादृशीनां त्वद्दर्शनमशक्यमित्याह— तथेति । यथा[1] अमलात्मनां अविद्याकामकर्मादिमल-रहितमनसां मुनीनां सर्वज्ञानां परमहंसानां सनकादीनां भक्तियोगविधानार्थं भक्तियोगकरणविषयं त्वां ते पश्यन्ति तथा रागादिमत्यः स्त्रियो वयं कथं त्वां पश्येमहि इत्येकान्वयः ॥ स्त्रीषु तारतम्यविशेषद्योतनार्थं आत्मनेपदप्रयोगः ॥ २३ ॥

तर्हि स्त्रीणां भगवदुपासनाभावेन तज्ज्ञानाभावात् मोक्षाभाव इत्याशङ्क्य तत्स्तुतिरेव अपरोक्ष-ज्ञानजनकतया मोक्षसाधिकेत्यभिप्रेत्य कृष्णं स्तौति— कृष्णायेति । कृषति विलिखति दारयति मोह-पटलमिति कृष्णः । तस्मै नमो नमः । नीलोत्पलदलश्यामलाय वा । वसुना दीव्यतीति वसुदेवः आनकदुन्दुभिः । तस्य पुत्रो वासुदेवः तस्मै । 'वस आच्छादने' इति धातोः इदं जगत् आच्छाद्य दी-व्यतीति वासुदेवः तस्मै इति वा । बलात् दैत्यैर्[2]निरसनशीलक्रीडादिगुणसंपन्नाय वा । देवकी लक्ष्मीः तां नन्दयितुं शीलमस्यास्तीति देवकीनन्दनः, तस्मै । नन्दगोपनाम्नः राज्ञः कुत्सितं कुष्ठं मारयति नाशयति इति नन्दगोपकुमारः, तस्मै । पुराणान्तरसिद्धार्थमवलम्ब्य कथितोऽयमर्थः । अन्यः प्रसिद्धः । गवां विन्दो[3] लाभो यस्य स तथा तस्मै ; गवा वेदेन लभ्यत इति गोविन्द इति वा ॥ २४ ॥

पङ्कजं नाभौ यस्य सः तथा तस्मै[4] । पङ्कात् जनं जननं यस्य तत् पङ्कजं पद्मं, तत् आभाद[5]यति

---

१ अयं ट पाठः । अन्यत्र नास्ति । २ बलान्दैत्य - ख ट ।
३ विन्दो - कोशान्तरेषु सर्वत्र । धातुपत्वे विन्द इत्येवोक्तम् ।
४ एतदनन्तरं पङ्कजनस्याभापयतीति वा पङ्कजनाभः - ट । एतदनुसारेण व्याकरणनियमानुरोधाच्च 'आभायति' इति स्थाने 'आभापयति' इति पठितव्यम् । पद्मस्यापि सौन्दर्याधायक इत्यर्थः । अभिभवतीति ततोऽप्यतिशयित-सौन्दर्यवानित्यर्थः । आभातीति तत्सदृशसौन्दर्यवानित्यर्थः । ५ आभवति - त ।

यथा हृषीकेश खलेन देवकी कंसेन रुद्धातिचिरं शुचार्पिता ।
विमोहिताहञ्च सहात्मजा विभो त्वयैव नाथेन मुहुर्विपद्गणात् ॥
विषान्महाग्नेः पुरुषाददर्शनादसत्सभायाः वनवासकृच्छ्रतः ।
मृधे मृधेऽनेकमहारथास्त्रतो द्रौण्यस्त्रतश्चास्म हरेऽभिरक्षिताः ॥ २७ ॥

विपदः सन्तु नः शश्वत्तत्र तत्र जगत्पते ।
भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम् ॥ २८ ॥

---

अभिभवति आभातीति वा पङ्कजनाभः, तस्मै । पङ्कजैः रचिता माला अस्यास्तीति पङ्कजमाली, तस्मै । पङ्कजदलवत् नेत्रे यस्य स तथा तस्मै । पङ्कजाकारा रेखा अङ्घ्र्योः यस्य स तथा तस्मै[2] ॥ २५ ॥

हे हृषीकेश इन्द्रियगणनाथ । 'कसि हिंसायामि'तिधातोः कंसेन हिंसाशीलेन खलेन इन्द्रियारामेण अतिचिरं कारागृहे रुद्धा शुचार्पिता देवकी त्वया यथा विमोचिता, हे विभो सहात्मजा पुत्रैः सहिता अहञ्च त्वयैव नाथेन विपद्गणात् मुहुर्मोचितेत्येकान्वयः ॥ २६ ॥

विपद्गणं विविच्याह– विषादित्यादिना ।

हे हरे वयं, भीमाय दत्तकालकूटविषात् । जतुगृहदाहप्रयुक्तमहाग्नेः । पुरुषादानां हिडिम्बबक-किर्मीरादीनां दर्शनात् भक्षणात् । असतां दुर्योधनादीनां द्रौपदीकेशग्रहणादिनिन्दितकर्मणां सभायाः । वनवाससङ्कटात् । मृधे मृधे रणे रणे अनेकेषां महारथानां नागायस्त्रतः । तथाश्वत्थाम्नो ब्रह्मास्त्रतश्च[3] त्वया अभिरक्षिताः अस्मेत्येकान्वयः[4] ॥ तस्मादहमद्य त्वां शरणं गताऽस्मीति वाक्यशेषः ॥ २७ ॥

भवत्स्मरणविरोधिसम्पत्परम्परायाः भवद्दर्शनकरविपत्परम्परैव श्रेयसी । भवद्दर्शनहेतुत्वात् । अत सम्पद्भ्यो भवद्दर्शनकरविपद एवास्माकं सन्त्विति विज्ञापयति– विपद इति ।

हे जगत्पते, नः अस्माक तत्र तत्र सांसारिकव्यापारेषु निरन्तरं विपदः सन्तु । यासु यासु विपत्सु अपुनर्भवं मोक्षं दर्शयतीति अपुनर्भवदर्शनं भवतो[5] दर्शनं स्यादिति यत् यस्मात् तस्मात् ताः स्युरिति वाक्यशेषः ॥ २८ ॥

---

१ पङ्कजे इवाङ्घ्री यस्य सः - ग । पङ्कजैरङ्किता रेखा, तद्युक्तः अङ्घ्रिः यस्य सः - क ठ । पङ्कजे इव अङ्घ्री, नैर्वा रचिता रेखा तद्युक्तः अङ्घ्रिः यस्य सः - घ । पङ्कजरेखः अङ्घ्रिः यस्य सः - ङ च ठ ।

२ एतदनन्तरं तथोक्त इत्यधिकः पाठः - ड ।

३ ब्रह्मास्त्राच्च - ड । ४. अस्म - क घ ङ ट ठ । स्म - ग च ज ड यादृपन्ये च ।

५ अत्र ङकोशादन्यत्र सर्वत्र भवदिति स्थाने भगवदिति कोशान्तरेषु ।

जन्मैश्वर्यश्रुतश्रीभिरेधमानमदः पुमान् ।
नार्हं इत्यभिधातुं वै त्वामकिञ्चनगोचरम् ॥ २९ ॥

नमोऽकिञ्चनवित्ताय निवृत्तगुणवृत्तये ।
आत्मारामाय शान्ताय कैवल्यपतये नमः ॥ ३० ॥

मन्ये त्वां कालमीशानं अनादिनिधनं परम् ।
समं चरन्तं सर्वत्र भूतानां यन्मिथः कलिः ॥ ३१ ॥

---

सम्पद्भ्यो विपदां श्रेयस्त्वं कुत इति तत्राह— जन्मेति । अभिजनैश्वर्यशास्त्रश्रवणजनितविद्याधनश्रीमदैः वर्धमानमदः पुमान् अकिञ्चनानां परमहंसानां विषयं ज्ञातुं योग्यं त्वां इति इत्थं अभिधातुं वक्तुं । उपलक्षणमेतत् । स्मर्तुं वा नार्हः अयोग्यः वै यस्मात् तस्मात् त्वत्स्मरणहेतुविपद एव श्रेयस्यः सम्पद्भ्यः इति भावः ॥ २९ ॥

श्रीकृष्णात् अन्यत् किञ्चनोपादेयं न विद्यते येषां ते अकिञ्चनाः । त एव वित्तं यस्य सः तथा तस्मै । निवृत्ताः सत्वादिगुणानां वृत्तयः जाग्रदाद्यवस्था यस्मात् सः तथोक्तः तस्मै, अकिञ्चनैर्ज्ञातायेति वा । निरन्तरं वृत्ता ज्ञानादिगुणानां वृत्तिः स्थितिः यस्य[1] सः तथोक्तः तस्मै वा[2] । अत एव आत्मनि आरमत इति आत्मारामः तस्मै । आत्मनां चेतनानां आरामाय क्रीडाकृत्रिमवनाय । अत एव शान्ताय सुखपूर्णाय[3] । अत एव कैवल्यपतये मुक्तिनाथाय नमः इत्यन्वयः ॥ ३० ॥

न विद्येते आदिनिधने यस्य[4] सः तथा तं अनादिनिधनम् । अनस्य प्राणस्य जन्मलयकर्तारमिति वा ईशं शिवं आनयति चेष्टयतीति ईशानः तं । सर्वेश्वरं वा । जगच्चेष्टाशक्तिमन्तं वा । परं सर्वस्मादन्यम् । सर्वत्र स्वपरेषु समं यथायोग्यं चरन्तम् । त्वां कालं संहर्तारं मन्ये । कुरुपाण्डवादिभूतानां यत् यस्मात् त्वत्[5] मिथः अन्योन्यं कलिः कलहः । तं त्वामिति वाक्यशेषः ॥ ३१ ॥

---

१ यस्मिन - ड ।

२ अनेन वाकारेण निवृत्ता प्राकृतगुणवृत्तिर्यस्मात् इति व्युत्पत्त्यन्तरदर्शकं वाक्यं टीकायां त्रुटितमिति संभाव्यते ।

३ पूर्णसुखाय - ड ।   ४. यस्मिन् ढकोशादन्यत्र सर्वत्र ।

५ अयं ड पाठः । अन्यत्र - त्वम् ।

न वेद कश्चिद्भगवंश्चिकीर्षितं
तवेहमानस्य नृणां विडम्बनम् ।
न यस्य कश्चिद्दयितोऽस्ति कर्हिचित्
द्वेष्यश्च यस्मिन् विषमा मतिर्नृणाम् ॥ ३२ ॥

जन्म कर्म च विश्वात्मन्नजस्याकर्तुरात्मनः ।
तिर्यङ्नृपशुयादस्सु तदत्यन्तविडम्बनम् ॥ ३३ ॥

---

समं चरन्तमित्येतद्विवेचयति न वेदेति । यस्य तव योग्यतातिरेकेण कर्हिचित् कश्चित् दयितः नास्ति। कश्चिद् द्वेष्योऽपि, नास्तीति शेषः । एवमपि यस्मिन् त्वयि नृणां आसुरप्रकृतीनां मतिः विषमा; अर्जुनमनुगृह्णायं दुर्योधनं द्वेष्टीति[2] । ताभ्यां उभाभ्यां बहूपचितपुण्यद्वेषनिचयावगणय्ये[3], हे भगवन्, नृणां विडम्बनं अनुकरणं ईहमानस्य चेष्टमानस्य 'द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेदि'त्यादिवचनात् । तस्य तव कश्चित् पुरुषः चिकीर्षितं कर्तुमिष्टं न वेद न जानातीत्येकान्वयः । अथवा लोके यस्मिन् पुंसि, योग्यतातिरेकेण स्नेहद्वेषकारिणि नृणां मतिः विषमा, अस्य दयितोऽयं अस्य द्वेषीति न भवांस्तादृश इत्यतः समचारीति वैदिका इति ॥ ३२ ॥

अधुना अनादिनिधनत्वं समर्थयते – जन्मेति । हे विश्वात्मन् ! सर्वान्तर्यामिन् ! अजस्य अजातस्य अनायासेन, फलानपेक्षया वा[4] अकर्तुः आत्मनः स्वामिनः तव तिर्यक्षु नृषु पशुषु यादस्सु जलजन्तुषु यज्जन्म तत्तज्जात्यनुकारि[5] कर्म च । तत् अतिशयेन विडम्बनम् । अतोऽनादिनिधनोऽसीति भावः । अजस्य आत्मनः तिर्यगादिषु यज्जन्म अकर्तुरात्मनः तज्जात्यनुसारि यत्कर्म तदुभयमत्यन्तविडम्बनमिति वा योजना ॥ ३३ ॥

---

१ अयं ड पाठः । अन्यत्र - असुर ।
२ अर्जुनोऽनुगृह्योऽयं दुर्योधनो द्वेष्य इति - क । अर्जुनोऽनुगृह्योऽयं दुर्योधनो द्वेषीति - कोशान्तरेषु सर्वत्र ।
३ निचयावगणय्येति भाव्यमिति भाति । ४ वाकारो नास्ति कोशान्तरेषु । ड कोशेऽस्ति ।
५ तज्जात्यनुकारि - क ग ठ ।

गोप्याददे त्वयि कृतागसि दाम तावद्
या ते दशाश्रुकलिलाञ्जनसम्भ्रमाक्षम् ।
वक्त्रं विनम्य भयभावनया स्थितस्य
सा मां विमोहयति भीः प्रति यं बिभेति ॥ ३४ ॥
केचिदाहुरजं जातं पुण्यश्लोकस्य कीर्तये ।
यदोः प्रियस्यान्ववाये मलयस्येव चन्दनम् ॥ ३५ ॥
अपरे वसुदेवस्य देवक्यां याचितोऽभ्यगात् ।
अजस्त्वमस्य क्षेमाय वधाय च सुरद्विषाम् ॥ ३६ ॥
भारावतारणायान्ये[3] भुवो नाव इवोदधौ ।
सीदन्त्या भूरिभारेण जातो ह्यात्मभुवार्थितः ॥ ३७ ॥

---

इदञ्चातिविडम्बनं विदुषामपि मोहकमित्यभिप्रेत्याह– गोपीति । त्वयि कृतागसि दधिभाण्डं भित्वा नवनीतापहारिणि सति, यदा गोपी नाम्ना यशोदा नित्यमुक्तं त्वां बन्द्धुं[2] दाम आददे तावत् तदा यं त्वां प्रति भीः सर्वजनस्य भयकारिणी दुर्गाऽपि बिभेति तस्य भयभावनया अश्रुभिः कलिलं कलुषं अञ्जनं यस्य तत् तथोक्तम् । अश्रुकलिलाञ्जनञ्च तत् संभ्रमयुक्तञ्च अक्षि यस्य तत्तथोक्तम् । वक्त्रं विनम्य अवाचीनतया कृत्वा स्थितस्य ते तत्र यादृशावस्था सा मां विमोहयतीत्येकान्वयः । तस्मात् तदनुकरणं विदुषामपि मोहकमिति भावः ॥ ३४ ॥

इदानीं एवंविधस्य तव देवक्यां जन्मानुकरणे निमित्तं विद्वांसोऽनेकधा वदन्ति इति विज्ञापयति– केचिदित्यादिना । केचिद्विद्वांसः पुण्यकीर्तेः भगवद्भक्तस्य यदोः राज्ञः अन्ववाये अन्वये तस्य कीर्तये जातं त्वां आहुरित्यन्वयः ॥ नाम्ना मलयस्य पर्वतस्य कीर्तये चन्दनमिव ॥ ३५ ॥

अपरे बुधाः देवैः याचितोऽजस्त्वं अस्य सज्जनस्य क्षेमाय सुरद्विषां वधाय च वसुदेवस्य सकाशात् देवक्यां अभ्यगात् आविर्भूत इति ब्रुवते ॥ ३६ ॥

अन्ये प्राज्ञाः उदधौ हिरण्यादिभूरिभारेण सीदन्त्याः आसन्नमज्जनायाः नाव इव दुःसहासुरजनभारेण परिखिन्नायाः भुवः भारावतरणार्थं[4] आत्मभुवा प्रार्थितः जातोऽसीत्याचक्षते ॥ ३७ ॥

---

१ भीरपि - कोशान्तरेषु सर्वत्र । २. अयं ड पाठः । अन्यत्र 'बद्धुं' इति ।
३ भारावतरणाय - ग ङ च ज ट । ४ भारावतारणाय - क ख च ।

भवेऽस्मिन् क्लिश्यमानानामविद्याकामकर्मभिः ।
श्रवणस्मरणार्हाणि करिष्यन्निति केचन ॥ ३८ ॥

शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः
स्मरन्ति नन्दन्ति तवेहितं जनाः ।
त एव पश्यन्त्यचिरेण तावकं
भवप्रवाहोपरमं पदाम्बुजम् ॥ ३९ ॥

अप्यद्य नस्त्वं स्वकृतेहित: प्रभो
जिहाससि स्वित्सुहृदोऽनुजीविनः ।
येषां न चान्यद्भवतः पदाम्बुजा-
त्परायणं राजसु योजितांहसाम् ॥ ४० ॥

ते वयं नामरूपाभ्यां यदुभिः सह पाण्डवाः ।
भवतो दर्शनं यर्हि हृषीकाणामिवेशितुः ॥ ४१ ॥

---

केचन पण्डिताः अस्मिन् भवे संसारे अविद्याकामकर्मभिः क्लिश्यमानानां दुःखेन परिभूयमानानां श्रवणार्हाणि नामानि स्मरणार्हाणि रूपाणि करिष्यन्नवातरदिति वदन्ति ॥ ३८ ॥

कर्मणां श्रवणस्मरणैः किं फलमिति तत्राह— शृण्वन्तीति । ये जनाः तव ईहितं चेष्टितं अभीक्ष्णशः शृण्वन्ति गायन्ति गृणन्ति स्मरन्ति नन्दन्ति, त एव अचिरेण क्षिप्रं भवप्रवाहोपरमं संसारप्रवाहस्य उपरमो निवृत्तिर्विनाशः यस्मात् तत् तावकं पदाम्बुजं पश्यन्तीत्येकान्वयः । तस्मात् त्वत्कर्मश्रवणादिफलं मुक्तिरेवेति भावः ॥ ३९ ॥

स्वात्मादिभ्योऽत्यन्तहितकरत्वात् त्वद्विरहः अस्माकं अतिदुःसहः इत्यभिप्रेत्याह— अप्यद्येति । हे प्रभो राजसु योजितांहसां कृतापराधानां येषां अस्माकं भवतः पदाम्बुजात् अन्यत् परायणं नास्ति । त्वं तान् सुहृदः अनुजीविनः किङ्करान् त्वद्भुक्तभोजनसिक्थसेविनः नः अस्मान् जिहाससि अपि स्वित् द्वारकागमनव्याजेन त्युक्तुमिच्छसि किंस्वित् ? कीदृशस्त्वम् ? स्वकृतेहितः स्वतन्त्रचेष्टितः । स्वार्थे भृत्यार्थे हितो वा । भृत्यप्रयोजनाय कृतचेष्टो वा । चशब्दः एवार्थे ॥ ४० ॥

तत्कुत इति तत्राह — त इति । यदा ईशितुः इन्द्रियस्वामिनः दर्शनं तदैव हृषीकाणां इन्द्रियाणां दर्शनादिशक्तिः अन्यथा नास्तीति यथा, तथा यदूनां अस्माकञ्च यर्हि यदा भवतः दर्शनं

नेयं शोभिष्यते तत्र यथेदानीं गदाधर ।
त्वत्पदैरङ्किता भाति स्वलक्षणविलक्षितैः ॥ ४२ ॥
इमे जनपदाः स्वृद्धाः सुपक्वौषधिवीरुधः ।
वनाद्रिनद्युदन्वन्तो ह्येधन्ते तव वीक्षिताः ॥ ४३ ॥
अथ विश्वेश विश्वात्मन् विश्वमूर्ते स्वकेषु मे ।
स्नेहपाशमिमं छिन्धि दृढं[1] पाण्डुषु वृष्णिषु ॥ ४४ ॥

---

तदा वयं ते तव सकाशात् यदुभिः सह पाण्डवाः । कथं ? नामरूपाभ्यां युधिष्ठिरादिनाम्ना शुक्लादिरूपेण च, युक्ताः इति शेषः इत्यन्वयः । यदा येषां यदूनां अस्माकञ्च भवतो दर्शनं तदा ते यादवाः वयं पाण्डवाश्च ते वयं नामरूपवन्त इति वा । के वयमिति केचित् पठन्ति । यर्हि भवतः अदर्शनं तदा नाम्ना यशसा रूपेण बलकोशाद्यात्मना यदुभिः सह वयं के ? असत्कल्पा एवेति । तस्मात् त्वद्विरहोऽस्माकं मरणकल्प इत्यर्थः ॥ ४१ ॥

भो गदाधर ! इयं राजधानी इदानीं ध्वजादिलक्षणैः विशेषेण चिह्नितैः त्वत्पदैरङ्किता यथा भाति त्वयि द्वारकां गते तथा न शोभिष्यते इत्येकान्वयः । अथवा इयं भूः त्वत्पदैः अङ्किता यथा भाति त्वयि वैकुण्ठं गते तथा न शोभिष्यत इति वा ॥ ४२ ॥

न केवलमस्माकमेव त्वद्गमनं दुःखकरम् । एषां जनपदादीनामपीत्याह– इम इति । इमे जनपदादयः तव सन्निधानात् सुष्ठु ऋद्धाः त्वत्कारुण्यामृतदृष्ट्या वीक्षिताः एधन्ते हि यस्मात् तस्मादित्येकान्वयः ॥ ४३ ॥

पाण्डवयादवेषु भागवतत्वेन स्नेहः आवश्यकः इति जानन्त्यपि पुत्रमित्रादिस्नेहः संसारहेतुत्वात् हेय इति ज्ञापयितुमाह– अथेति । अथ अनन्तरं एतदनुगृहाण छिन्धीति । हे विश्वेश विश्वात्मन् ! विश्वव्यापिन् विश्वमूर्ते अनन्तविग्रह ! स्वकेषु स्वीयत्वेन अभिमतेषु पाण्डुषु पाण्डवसम्बन्धिषु यादवेषु च मम गाढं पुत्रमित्रादिस्नेहपाशं छिन्धीत्यन्वयः । पुत्रादिस्नेह एव छेद्यः । न तु भागवतस्नेहः । तस्य शास्त्रे कर्तव्यत्वेन विहितत्वादित्यमिप्रेत्य उक्तं इममिति ॥ ४४ ॥

---

१. दृढं - कोशान्तरेषु सर्वत्र । क ट कोशपाठस्तु - गाढं । २. अयं क पाठः । अन्यत्र - पाण्डवेषु ।

त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत् ।
रतिमुद्वहतादद्धा गङ्गेवौघमुदन्वति ॥ ४५ ॥
श्रीकृष्ण कृष्णसख वृष्णिवृषावनिध्रुग्राजन्यवंशदहनानपवर्ग्यवीर्य ।
गोविन्द गोद्विजसुरार्तिहरावतार योगेश्वराखिलगुरो भगवन्नमस्ते ॥

सूत उवाच—

पृथयेत्थं कलपदैः परिणीताखिलोदयः ।
मन्दं जहास वैकुण्ठो मोहयन्योगमायया ॥ ४७ ॥
तां बाढमित्युपामन्त्र्य प्रविश्य गजसाह्वयम् ।
स्त्रियश्च स्वपुरं यास्यन्प्रेम्णा राज्ञा निवारितः ॥ ४८ ॥
इति श्रीमद्भागवते अष्टमोऽध्यायः ॥

---

न केवलं विषयविरक्त्या अलम् । किन्तु त्वय्यनपायिनीं रतिं त्वं वितरेत्याह— त्वयीति । हे मधुपते आनन्दनाथ । न अन्यविषया रुद्रादिविषया अनन्यविषया । ओघं जलप्रवाहवेगम् । उदन्वति समुद्रे ॥ ४५ ॥

स्तुतिमुपसंहरति— श्रीकृष्णेति । श्रिया अतसीकुसुमसदृक्षया कृष्ण नीलवर्ण । कृष्णसख अर्जुनसख । वृष्णिवृष वृष्णिकुलश्रेष्ठ । वृष्णिवत् मेघवत् भक्ताभिमतवर्षण । 'वृष्णिः कुलविशेषे तु वर्षन्मेघेऽपि कथ्यते' इत्यभिधानम् । अवनिद्रुहां भूकण्टकानां राज्ञां वंशं अन्वयं दहतीति अवनिध्रुग्राजन्यवंशदहनः। अवनिध्रुग्राजन्याख्यवेणुदाहक इति वा । तस्य सम्बुद्धिः अवनिध्रुग्राजन्यवंशदहन । अमरवन्द्यवीर्य देवस्तुत्यपराक्रम । गोविन्द वेदवाणीलब्धविभव । गवां द्विजानां सुराणां आर्तिहरः अवतारः यस्य सः तथोक्तः । तस्य सम्बुद्धिः गोद्विजसुरार्तिहरावतार । योगैश्वर्ययुक्त । अखिलगुरो यथायोग्यं ज्ञानोपदेशकर्तः । ते तुभ्यं नम इत्यन्वयः ॥ ४६ ॥

विकुण्ठा नाम काचिद्दृपपत्नी । तत्पुत्रत्वेन जातः । वैकुण्ठपुरनाथोऽपि वैकुण्ठ इति वा । पृथया कुन्त्या कलपदैः स्त्रीत्वात् अव्यक्तमधुरपदैः । योगमायया स्वरूपशक्त्या ॥ ४७ ॥

यत्त्वदभीष्टं तथास्त्विति बाढमिति तामुक्त्वा द्रौपदीपूर्वाः स्त्रियश्च द्वारकां गमिष्यामीत्युपामन्त्र्य गङ्गातीरात् गजसाह्वयं प्रविश्य स्वपुरं द्वारकां यास्यन् गमिष्यन् प्रेम्णा सम्प्रति न गन्तव्यमिति राज्ञा निवारितः । पाण्डववात्सल्यात् तत्रैवावात्सीदित्येकान्वयः ॥ ४८ ॥

---

१ डकोशेऽप्ययं पाठः । अव्यक्ताक्षरमधुर - कोशान्तरेषु सर्वत्र पाठः ।

## ॥ अथ नवमोऽध्यायः ॥

सूत उवाच—

व्यासाद्यैरीश्वरेहाज्ञैः कृष्णेनाद्भुतकर्मणा ।
प्रबोधितोऽपीतिहासैः नाबुध्यत शुचार्पितः ॥ १ ॥

आह राजा धर्मसुतः चिन्तयन्सुहृदां वधम् ।
प्राकृतेनात्मना विप्राः स्नेहमोहवशं गतः ॥ २ ॥

अहो मे पश्यताज्ञानं हृदि रूढं दुरात्मनः ।
पारक्यस्यैव देहस्य बह्व्यो मेऽक्षोहिणीर्हताः ॥ ३ ॥

---

स्वानन्दानुभवलक्षणो मोक्षः सकलपुरुषार्थोत्तमः । स च भगवदपरोक्षज्ञानलब्धविष्णुप्रसादलभ्य इत्ययमर्थः प्रतिपाद्यतेऽस्मिन्नध्याये । तत् ज्ञापयितुं उपोद्घातं रचयति– व्यासाद्यैरित्यादिना । स्वराज्ये अभिषिक्तोऽपि ज्ञातितदनुबन्धिवधात् पापबुध्या राज्यानिच्छुर्युधिष्ठिरो राजा नाबुध्यत । अयं धर्म इति ज्ञानं नापेत्यन्वयः[1] ॥ कथंभूतः ? ईश्वरस्य ईहां सृष्ट्यादिलक्षणां चेष्टां जानन्तीति ईश्वरेहाज्ञाः तैः व्यासाद्यैः मुनिभिः अद्भुतपराक्रमेण कृष्णेन च इतिहासैः पुरावृत्तकथाविशेषैः प्रकर्षेण बोधितोऽपि ज्ञात्यादिमरणनिमित्तशुचानुविद्धैः[2] ॥ १ ॥

इत्थं बोधितोऽपि धर्मे अधर्मबुद्धिः किञ्चकारेति तत्राह– आहेति । हे विप्राः, श्रुणुतेति शेषः । प्राकृतेनात्मना धर्माधर्मविवेकविधुरेण मनसा । तत्कारणमाह– स्नेहात् जातः मोहः भ्रमः स्नेहमोहः । तस्य वशं गतः तस्मात् । तन्निमित्तमाह– सुहृदां ज्ञातितदनुबन्धिनां वधं अहर्निशं चिन्तयन् धर्मसुतः इत्थमाहेत्येकान्वयः । स्नेहमोहवशं गतः इत्यनेन धर्मात्मनः धर्मसुतस्य कथं धर्मे हरिविमुखदुष्टतदनुबन्धिवधलक्षणे त्वधर्मत्वशङ्का अभूदित्येतद् दूरतोऽपास्तम् ॥ २ ॥

किमाहेति तत्राह– अहो इति । मे हृदि रूढं अङ्कुरितं अज्ञानतरं पश्यत । अहो आश्चर्यम् । कथं ? मे पारक्यस्य परकीयस्य[3] श्वसृगालभोगयोग्यस्य मे देहस्यार्थे बह्व्यः नक्षोहिणीः अक्षोहिण्यः हता एव, यस्मात् तस्मादिति शेषः ॥ ३ ॥

---

[1] नावेदित्यन्वयः - क घ ज । न वेदेत्यन्वयः - ट ।

[2] इकोशेऽप्ययं पाठः । शुचाविद्धः- कोशान्तरेषु सर्वत्र । [3] अयं ड पाठः । अन्यत्र भोग्यस्य ।

न[1] मे स्यान्निरयान्मोक्षो ह्यपि वर्षायुतायुतैः ।
बालद्विजसुहृन्मित्रपितृभ्रातृगुरुद्रुहः ॥ ४ ॥

नैनो राज्ञः प्रजाभर्तुः धर्मो युद्धे वधो द्विषाम् ।
इति मे न तु बोधाय कल्पते शाश्वतं वचः ॥ ५ ॥

स्त्रीणां मद्धतबन्धूनां द्रोहो योसाविहान्वितः ।
कर्मभिर्हयमेधीयैर्नाहं कल्पो व्यपोहितुम् ॥ ६ ॥

यथा पङ्केन पङ्काम्भः सुरया वा सुराकृतम् ।
भूतहत्यां तथैवैतां न यज्ञो मार्ष्टुमर्हति ॥ ७ ॥

---

तत्फलमाह– न म इति ॥ मे निरयात् मोक्षोऽपि वर्षाणां अयुतायुतैः न स्याद्धि । कथंभूतस्य? मे बालान् सौभद्रादीन्, द्विजान् द्रोणादीन्, सुहृदः द्रुपदादीन्, मित्राणि धनदानेनेष्टान्[2] भटविशेषान् पितृन् भूरिश्रवःप्रभृतीन् भ्रातृन् दुर्योधनादीन्, गुरून् भीष्मादीन् द्रोहितवान् हिंसितवानिति बालद्विज-सुहृन्मित्रपितृभ्रातृगुरुध्रक् तस्य ॥ ४ ॥

प्राजभर्तुः प्रजापालकस्य राज्ञः । हरिद्विषां वधः नैनः न पापं भवति । प्रत्युत युद्धे धर्म, वैरिणां राज्ञां वधः धर्मः[3] धर्मसाधनमिति यत् 'यः पदातिं हन्ति स भवति चातुर्मास्ययाजी' त्यादि शाश्वतं नित्यं वेदवचः मे बोधाय भ्रमं निरस्य यथार्थज्ञानाय न कल्पत इत्यन्वयः । तुशब्दः एवार्थे-नञा तस्यान्वयः ॥ ५ ॥

कुतो न कल्पत इति तत्राह– स्त्रीणामिति ॥ मद्धतबन्धूनां मया हताः बन्धवो यासां ताः तथा तासां[4] । मन्निमित्तं हताः बन्धवः यासामिति वा । स्त्रीणां योऽसौ द्रोहः हिंसालक्षणः वैधव्यप्राप्त्या मय्यन्वितः सम्पृक्तः तमहं हयमेधीयैः अश्वमेधसम्बन्धिभिः कर्मभिः व्यपोहितुं परिहर्तुं न कल्प[5] न समर्थ इत्येकान्वयः ॥ ६ ॥

तत्र दृष्टान्तमाह– यथेति ॥ पङ्काम्भः कर्दमजलं पङ्केन कर्दमेन युक्तं द्रव्यं शोधयितुं यथा न शक्नोति । सुरया कृतं मिश्रितं यथा सुरा दोषं व्यपोह्य शुद्धं कर्तुं न शक्ता । स्वयमशुद्धत्वात् ।

---

१ एतच्छ्लोक पूर्वोत्तरार्धयोः पौर्वापर्यं कोशान्तरेषु । किन्तु तट्टीकावातारिकापंक्त्यनुगुणम् ।
२ धनदाने नष्टान् - क । ३ धर्म्यः - ङ । एतदनुसारेण श्लोके धर्म्यो युद्धे इति पाठेन भाव्यम् ।
४ उद्धता बन्धवः यासामिति वैकल्पिकः पाठो मूलकोशे ङकोशे च ।
५ ङ ढ कोशयोरप्ययमेव पाठः । क ग घ ज ठ कोशेषु कल्प इति ।

सूत उवाच —

इति भीतः प्रजाद्रोहात्सर्वधर्मविवित्सया ।
ततो विशसनं प्रायाद्यत्र देवव्रतोऽपतत् ॥ ८ ॥
तदा तद्भ्रातरः सर्वे सदश्वैस्स्वर्णभूषितैः ।
अन्वगच्छन्रथैर्विप्रा व्यासधौम्यादयस्तथा ॥ ९ ॥
भगवानपि विप्रर्षे रथेन सधनञ्जयः ।
स तैर्व्यरोचत नृपः कुबेर इव गुह्यकैः ॥ १० ॥
दृष्ट्वा निपतितं भूमौ दिवश्च्युतमिवामरम् ।
प्रणेमुः पाण्डवाः भीष्मं सानुगाः सहचक्रिणः ॥ ११ ॥
तत्र ब्रह्मर्षयः सर्वे देवर्षयश्च सत्तम ।
राजर्षयश्च तत्रासन्द्रष्टुं भरतपुङ्गवम् ॥ १२ ॥

---

तथैव यज्ञः हिंसारूपत्वात् एतां भूतहत्यां मार्ष्टुं मार्जयितुं नार्हतीत्येकान्वयः । ज्ञानपक्षमाश्रित्य युधिष्ठिरेण यज्ञः निन्दितः । न त्वकर्तव्यत्वबुध्या । 'ब्रह्मार्पणं ब्रह्महवि'रित्यादौ ब्रह्मार्पणबुध्या कर्तव्यत्वेन विहितत्वात् । 'कर्मणा ज्ञानमातनोती'त्यादेश्च ॥ ७ ॥

प्रजाद्रोहात् इति भीतः युधिष्ठिरः सर्वधर्मज्ञानेच्छया ततो हस्तिनपुरात् विशसनं युद्धस्थानं कुरुक्षेत्रं प्रायात् । तत्रापि यत्र देवव्रतः भीष्मः अपतदित्येकान्वयः ॥ ८ ॥

तस्य युधिष्ठिरस्य भ्रातरः भीमादयः । सन्तः प्रशस्ताः अश्वाः येषां ते तथा तैः । तथा व्यासादयो विप्राः अन्वगच्छन्नित्येकान्वयः ॥ ९ ॥

सधनञ्जयः सार्जुनः । गुह्यकैः यक्षैः कुबेरः वैश्रवणः । व्यरोचत अराजत । 'रुच दीप्तौ' ॥ १० ॥

सहचक्रिणः चक्रिणा कृष्णेन सहिताः । दिवः स्वर्गात् च्युतं समागतं देवमिव द्योतमानम् ॥ ११ ॥

तत्र तदा सर्वे देवर्षयः नारदादयः ब्रह्मर्षयो व्यासादयः राजर्षयो विश्वामित्रादयः तत्र भरतपुङ्गवं भीष्मं द्रष्टुं आयाता[1] आसन्नित्यन्वयः ॥ १२ ॥

---

1 आगता - ड ।

पर्वतो नारदो धौम्यः भगवान्बादरायणः ।
बृहदश्वो भरद्वाजः सशिष्यो रेणुकासुतः ॥ १३ ॥
वसिष्ठ इन्द्रप्रमदस्त्रितो गृत्समदोऽसितः ।
कक्षीवान्गौतमोऽत्रिश्च कौशिकोऽथ सुदर्शनः ॥ १४ ॥
अन्ये च मुनयो ब्रह्मन्ब्रह्मरातादयोऽमलाः ।
शिष्यैरुपेता आजग्मुः कश्यपाङ्गिरसादयः ॥ १५ ॥
तान्समेतान्महाभाग उपलभ्य वसूत्तमः ।
पूजयामास धर्मज्ञो देशकालविभागवित् ॥ १६ ॥
कृष्णश्च तत्प्रभावज्ञ आसीनं जगदीश्वरम् ।
हृदिस्थं पूजयामास माययोपात्तविग्रहम् ॥ १७ ॥

---

तेषां नामान्याह— पर्वत इत्यादिना । रेणुकासुतः श्रीपरशुरामः ॥ १३ ॥

कौशिकः विश्वामित्रः ॥ १४ ॥

ब्रह्मरातः शुकः । पर्वताद्याः आङ्गिरसान्ताः मुनयः आजग्मुरित्यन्वयः ॥ १५ ॥

महाभागः वसूत्तमः भीष्मः समेतान् सङ्गतान् तान् ऋष्यादीन् उपलभ्य दृष्ट्वा मनसा प्रतिगम्य वा पूजयामास । कथंभूतः ? देशकालविभागवित् । देशः कुरुक्षेत्रं । कालः शरतल्पशयनलक्षणः । तयोः विभागं औचित्यं वेत्तीति । प्रत्युत्थानाभिवादनाभिपूजनायां अशक्तत्वात् मानसीं वाचिकीं आञ्जलिकीं वा पूजां कृतवानित्यर्थः ॥ अन्यत्र तत्तद्देशतत्तत्कालविभागं जानातीति । धर्मज्ञः आपत्सम्पद्धर्मौ जानातीति । धर्मः भगवान् तं जानातीति वा ॥ १६ ॥

कृष्णश्च पूजयामासेत्यन्वयः । कथंभूतः ? तस्य कृष्णस्य प्रभावं सामर्थ्यं जानातीति तत्प्रभावज्ञः । कथंभूतम् ? तत्रासीनम् । जगत ईश्वरम् । मायया स्वेच्छया पितृत्वेनाङ्गीकृतवसुदेवशरीरम् । हृदि मनसि स्थितम् । ध्यानलक्षणोपासनया शरीरमध्ये पुण्डरीककर्णिकायां दीपवद्देदीप्यमानं वा ॥ १७ ॥

पाण्डुपुत्रानुपासीनान्प्रश्रयप्रेमसन्नतान् ।
अभ्याचष्टानुरागास्त्रैरन्धीभूतेन चक्षुषा ॥ १८ ॥

भीष्म उवाच—

अहो कष्टमहोऽन्याय्यं यद्यूयं धर्मनन्दन ।
जीवितुं नार्हथ क्लिष्टं विप्रधर्माच्युताश्रयाः ॥ १९ ॥

संस्थितेऽतिरथे पाण्डौ पृथा बालप्रजावधूः ।
युष्मत्कृते बहून्क्लेशान्प्राप्ता(ऽ)तोकवती यथा ॥ २० ॥

---

प्रश्रयगुणेन प्रेमगुणेन च सम्यक् नतान् । सर्वापि निषण्णान् । पाण्डोः पुत्रान् । तेष्वनुराग-प्रयुक्तैरस्रैः[1] बाष्पैरन्धीभूतेन चक्षुषा युक्तः । 'इत्थंभूतलक्षणे तृतीये'ति सूत्रात् । अभ्याचष्ट आह । आभिमुख्येनापश्यदिति वान्वयः ॥ १८ ॥

यो धर्मनन्दन युधिष्ठिर । यूयं क्लिष्टं क्लेशयुक्ततया जीवितुं नार्हथ । विप्रादिषु एकैकोऽपि सुखजीवनायालम् । किमु बहुत्वे[2] इत्यभिप्रायेणोक्तं विप्रधर्माच्युताश्रया इति । तथापि यत् क्लिष्टं जीवथ तत्कष्टं अन्याय्यं अहो अहो आश्चर्यादप्याश्चर्यम् । अहो अन्याय्यमिति[3] प्रगृह्यसंज्ञाभावो 'लोकदृष्टि-मपेक्ष्यैवोक्तः[4]' । न तु पाण्डवानां दुःखमस्तीति । तेषां भूभारावतरणायावतीर्णानां असुरजननिधनेन वनवासादावपि नित्यसुखित्वादि'ति द्योतनार्थः ॥ धर्मस्य नन्दनः । धर्मं नन्दयतीति वा । धर्म एव नन्दनो यस्य स तथेति वा । धर्मेण सुखक्रीडा यस्य स तथेति वा । तस्मात् नन्दनं सुखं यस्य सः तथेति वा ॥ १९ ॥

अतिरथे पाण्डौ संस्थिते स्वर्गं गतवति सति अतोकवती पुत्ररहिता यथा बहुक्लेशवती भवति तथा बालप्रजा युष्मन्माता पृथा पुत्रवत्यपि युष्मत्कृते युष्मत्पोषणपालनाद्यर्थं बहून् क्लेशान् प्राप्ता । पुत्रबाहुल्ये मतुप्प्रत्ययः । पुत्रवती पुत्रपोषणादावतिक्लेशं प्राप्नोति यथा तथेत्यन्वयदृष्टान्तो वेत्ये-कान्वयः ॥ २० ॥

---

१ अयं इपाठः । अन्यत्र - अनुरागयुक्तैः । २ अयं इपाठः । अन्यत्र बहुत्वमिति ।
३ अहोऽन्याय्य - इ । ४ अयं इ पाठः । अन्यत्र - लोकदृष्टिनिर्देश्य । ५ युधिष्ठिर इति शेषः ।

सर्वं कालकृतं मन्ये भवताञ्च यदप्रियम् ।
सकालो यद्वशे लोको वायोरिव घनावलिः ॥ २१ ॥

यत्र धर्मसुतो राजा गदापाणिर्वृकोदरः ।
कृष्णोऽस्त्री गाण्डिवं चापं सुहृत्कृष्णस्ततो विपद् ॥२२॥

न ह्यस्य कर्हिचिद्राजन्पुमान्वेद विधित्सितम् ।
यद्विजिज्ञासया युक्ताः मुह्यन्ति कवयोऽपि हि ॥ २३ ॥

---

एवंविधयुष्मदप्रिये भवदारब्धकर्मनियामको हरिरेव हेतुरित्यभिप्रेत्याह- सर्वमिति । भवतां यदप्रियं दुःखादि तत्सर्वं युष्मत्प्रारब्धकर्मनियामककालाख्यहरिकृतं मन्ये । वायोः वशंगता घनावलिरिव जडाजडलोको यस्य भगवतः वशे वर्तते सः नारायणः सर्वगुणपूर्णत्वात् काल इत्युच्यत इत्येकान्वयः ॥

अन्यथानुपपत्तितर्कतोऽपि अयं हेतुः सिध्यतीत्याह- यत्रेति ॥ यत्र राजा रञ्जकः, धर्मस्य सुतः यत्र च तस्य राज्ञः कनिष्ठः[1] क्षितिभारायितदितिसुतशोणितदिग्धां गदां पाणौ बिभ्रत् भक्त्या वशीकृतपरब्रह्मा वृकोदरः । तथा यत्र चेन्द्रावतारः कृष्णः अर्जुनः अस्त्री द्रोणादुपात्तास्त्रग्रामः । तस्य च करे रिपूणां पूयशोणितवमनकारिगाण्डीवाख्यं धनुः । यत्र चैषां सर्वसुपर्वाधिराजोऽनन्तबलवीर्यैश्वर्याद्यनन्तगुणार्णवः श्रीमान् वसुदेवपुत्रः कृष्णः सुहृत् अनिमित्तबन्धुः । ततः तत्र विपत् । तेषां प्रारब्धकर्माभावे विपत्कुतस्स्यात् । अस्ति च । तस्मादित्येकान्वयः ॥ २२ ॥

सुहृदस्तस्य विपत्करत्वं कथमिति तत्राह- न हीति ॥ अपरिच्छिन्नत्वात् यस्य स्वरूपजिज्ञासया युक्ताः कवयोऽपि मुह्यन्ति । अयमित्थंभूत इति निर्देष्टुं न जानन्ति । हे राज तस्यास्य विधित्सितं कर्तुमिष्टं कश्चिदपि पुमान् कदाचिन्न वेद । हि यस्मात् तस्मात् सर्वेषां स्वकृतादृष्टानुसारिफलदातुरस्य भवत्सुहृत्त्वेऽपि प्रारब्धकर्मानुकूल्येन विपत्करत्वं युक्तमित्येकान्वयः ॥ २३ ॥

---

१ अकनिष्ठः - इ । २ अयं इपाठः । अन्यत्र नर्धति नास्ति ।
३ अयं इ पाठः । अन्यत्र ऐश्वर्येति नास्ति ।

तस्माज्जगद्दैवतन्त्रं व्यवस्य भरतर्षभ ।
तस्यानुविहितोऽनाथाः नाथ पाहि प्रजाः प्रभो ॥ २४ ॥
एष वै भगवान्साक्षादाद्यो नारायणः पुमान् ।
मोहयन्मायया लोकं गूढश्चरति वृष्णिषु ॥ २५ ॥
अस्यानुभावं भगवान्वेद गुह्यतमं शिवः ।
देवर्षिः नारदः साक्षाद्भगवान्कपिलो नृप ॥ २६ ॥
यं मन्यसे मातुलेयं प्रियं मित्रं सुहृत्तमम् ।
अकरोः सचिवं दूतं सौहृदादथ सारथिम् ॥ २७ ॥

---

विवक्षितकथनं निगमयति– तस्मादिति ॥ तस्मात् उक्तहेतुभ्यः दैवस्य हरेः तन्त्रं अधीनं जगत् निश्चित्य तस्य हरेः अनुकूलया श्रुतिस्मृतिलक्षणया आज्ञया भगवद्द्विट्तदनुबन्धिनिग्रहशिष्टजनपरिपालनाख्ये स्वधर्मे विहितः विधिमनुवर्तमानः तत्राधर्मबुद्धिमपहाय हे भरतर्षभ भरतकुलश्रेष्ठ प्रभो समर्थ नाथ प्रजानाथ अनाथाः त्वदन्यनाथरहिताः प्रजाः पाहि इत्येकान्वयः ॥ २४ ॥

एतावन्तं कालं ईश्वरं परोक्षतयाऽभिधाय इदानीं अपरोक्षतया हस्तग्राहेण निर्दिशन्निव निर्दिशति– एष वा इति । यः साक्षात् आद्यः नारायणः भगवान् स एषः पुमान् लोकं अज्ञजनं यथार्थज्ञानाच्छादिकया मायया मनुष्य इति मोहयन् गूढः अविज्ञातो वृष्णिषु चरति वै यस्मात् तस्मात् अयमेव कालाख्यः इत्येकान्वयः ॥ २५ ॥

तर्हि क एनं यथावद्वेदेति तत्राह– अस्येति । हे नृप सदाशिवः भगवान् अस्य हरेः गुह्यतमं अनुभावं वेद । तथा देवर्षिः नारदः साक्षात् कपिलो भगवानपि जानीत इत्येकान्वयः ॥ २६ ॥

त्वं यं कृष्णं मातुलेयं मातुलस्य वसुदेवस्य अपत्यं प्रियं बन्धुं मित्रं सङ्कटेषु मित्वा ज्ञात्वा रक्षितारं सुहृत्तमं अतिशयेन सुहृदं मन्यसे, यच्च सौहृदात् सौहार्दात् सचिवं मन्त्रिणं दूतं सन्देशहरं सारथिं यन्तारं अकरोः, तस्यास्येति पूर्वेण संबन्धः॥ २७ ॥

सर्वात्मनः समदृशो ह्यद्वयस्यानहङ्कृतेः ।
तत्कृतं मतिवैषम्यं निरवद्यस्य न क्वचित् ॥ २८ ॥

तथाप्येकान्तभक्तेषु पश्य भूपानुकम्पितम् ।
यन्मेऽसूंस्त्यजतः साक्षात्कृष्णो दर्शनमागतः ॥ २९ ॥

भक्त्यावेश्य मनो यस्मिन् वाचा यन्नाम कीर्तयन् ।
त्यजन्कलेवरं योगी मुच्यते कामकर्मभिः ॥ ३० ॥

---

तथाप्यहो सर्वोचनोऽइमनेन सारथित्वादिषु विहितो नन्दति विषमबुद्धिर्नास्यास्तीत्याह– सर्वात्मन इति । सर्वात्मनः सर्वान्तर्यामिणः 'पिता माता सुहृद्बन्धुरि'त्यादिवाक्यात् बन्धवादिषु स्थित्वा बन्धवादीनां बन्धवादित्वापादकत्वेन मुख्यबन्धवादित्वात् बन्धवादिसर्वरूपत्वात् सर्वात्मनो वा समदृशः यथावस्तु तथा सर्वपदार्थान् जानतः अद्वयस्य समाधिकरहितस्य अनहंकृतेः प्राकृतवैकृतशरीररहितत्वात् देहाद्यहंबुद्धिरहितस्य अत एव निरवद्यस्य रागादिसर्वदोषरहितस्य इत्येतैर्हेतुभिः अस्य कृष्णस्य तत्कृतं सारथित्वादिकृतिनिमित्तं त्वयि मतिवैषम्यं क्वचिदपि नास्ति । अनेवंविधानां जीवानां हि तत् इत्येकान्वयः ॥ २८ ॥

एवं विधविरमनतिग्वस्यास्त्वस्य संसर्गकारणं किमित्याशंक्य युष्मद्विधभक्तभक्त्या द्रवीकृतमनोऽनुकम्पैव कारणमित्याह - तथापीति । हे भूप तथापि एवमुक्तप्रकारेण कृतकृत्यस्याप्यस्य एकान्तभक्तेषु अव्यभिचारिभक्तिमत्सु युष्मासु अन्येषु मयि च अनुकम्पितं अनुकम्पां कृपां पश्य । कुत इति तत्राह– यदिति । प्राणत्यागकाले प्रायः स्नेन पुष्टाः पुत्रादयोऽपि पूर्वमेव विमुखाः गच्छन्त्यहो । असून् प्राणान् त्यजतः मे मम स्वामी श्रीकृष्णः साक्षाद्दर्शनं दृष्टिविषयमागत इति यत् यस्मात् तस्मात् भक्तानुकम्पैव संसर्गकारणमित्येकान्वयः ॥ २९ ॥

प्राणत्यागकाले हरिदर्शनफलमाह - भक्त्येति । भक्त्या हरौ मनः आवेश्य वाचा यस्य हरेः नारायणादिनाम कीर्तयन् कलेवरं शरीरं त्यजन् योगी कामकर्मभिः मुच्यते मुक्तः स्यात् । तं प्रत्यक्षतो दृष्ट्वा म्रियमाणस्य मे मुक्तिः किं वर्णनीयेति वाक्यशेषः । तस्मात् तत्प्रीतिकृद्धर्मोऽप्रीतिकृद्धर्मोऽस्मत्तदुक्तप्रकारेण स्वधर्मेऽधर्मबुद्धिं हित्वा त्वं राज्यं कुर्विति परमतात्पर्यार्थः ॥ ३० ॥

---

१ सर्वेति इ पाठः । अन्यत्र नास्ति ।

स देवदेवो भगवान्प्रतीक्षतां
कलेवरं यावदिदं हिनोम्यहम् ।
प्रसन्नहासारुणलोचनोल्लसन्-
मुखाम्बुजो ध्यानपथश्चतुर्भुजः ॥ २१ ॥

सूत उवाच—

युधिष्ठिरस्तदाकर्ण्य शयानं शरपञ्जरे ।
अपृच्छद्विविधान् धर्मान् ऋषीणामनुशृण्वताम् ॥ २२ ॥

पुरुषस्वभावविहितान्यथावर्णं यथाश्रमम् ।
वैराग्यरागोपाधिभ्यामाम्नातोभयलक्षणान् ॥ २३ ॥

---

युधिष्ठिरं प्रत्यभिधाय इदानीं स्वच्छन्दमृत्युर्भीष्मः उत्तरायणसमयपर्यन्तं भगवतोऽवस्थानं प्रार्थयते—स इति । अहं यावदिदं पञ्चभूतरचितं कलेवरं हिनोमि त्यजामि तावत् उत्तरायणपर्यन्तं स देवदेवो भगवान् प्रतीक्षतां मयि कृपया अनुग्रहं कुर्यादिति प्रार्थये इत्यन्वयः । कथंभूतः ? प्रसन्नो हासश्च अरुणे लोचने नेत्रे च प्रसन्नहासारुणलोचनानि तैः उल्लसत् मुखमेव अम्बुजं यस्य सः तथा । ध्यानपथः उपासनाविषयः द्रष्टुं ध्यानमेव पन्था मार्गो यस्य स तथा । चत्वारो भुजाः यस्य स तथा । इदमेव ध्यानविषयं वपुः । पुरतः स्थितस्य द्विभुजत्वात् अत एव स इति परोक्षतया निर्देशः ॥ २१ ॥

अथ युधिष्ठिरो भीष्मोक्तमाकर्ण्य शरतल्पे शयानं भीष्मं विविधान्धर्मानपृच्छदित्यन्वयः । पृच्छतेर्द्विकर्मकत्वात् भीष्मं धर्मानिति युज्यते ॥ २२ ॥

धर्माणां तत्वविद्भीष्मः एतान् धर्मान् नानाख्यानात्मकेष्वितिहासेषु वर्णयामासेत्यन्वयः । कान् कथंभूतान् ? वर्णिपुरुषस्यैते निजत्वेन विहिताः धर्मा तत्तदाश्रमिपुरुषस्यैते विहिताः धर्माः इति विविच्य यथावर्णं यथाश्रमं वर्णिनां आश्रमिणां च[३] पुरुषाणां स्वभावविहितान् निजत्वेन विहितान् धर्मान् वैराग्योपाधिना रागोपाधिना च एते निवृत्तिधर्माः एते प्रवृत्तिधर्माः इति 'निष्कामं ज्ञानपूर्वमि'त्यादिवचनैः प्रतिपादितोभयविधलक्षणान् ॥ २३ ॥

---

१ समय इति इ पाठः । अन्यत्र नास्ति ।

२ प्रसन्नो - इति इ पाठः । अन्यत्र प्रसन्नेति । ३ चकारः इकोशस्थः । अन्यत्र नास्ति ।

दानधर्मान्राजधर्मान्मोक्षधर्मान्विभागशः ।
स्त्रीधर्मान्भगवद्धर्मान्समासव्यासयोगतः ॥ ३४ ॥

धर्मार्थकाममोक्षांश्च सहोपायान्यथा मुने ।
नानाख्यानेतिहासेषु वर्णयामास तत्त्ववित् ॥ ३५ ॥

धर्मान्प्रवदतस्तस्य स कालः प्रत्युपस्थितः ।
यो योगिनः छन्दमृत्योर्वाञ्छितस्तूत्तरायणः ॥ ३६ ॥

तदोपसंहृत्य गिरं सहस्रणीर्विमुक्तसङ्गं मन आदिपूरुषे ।
कृष्णे लसत्पीतपटे चतुर्भुजे पुरः स्थितो(ऽ)मीलितदृग्व्यधारयत् ॥

विशुद्धया धारणया धुताशुभस्तदीक्षयैवाशु गतायुधव्यथः ।
निवृत्तसर्वेन्द्रियवृत्तिविभ्रमः तुष्टाव जन्यं विसृजञ्जनार्दनम् ॥३८॥

---

विभागशः पृथक् पृथक् । भगवतः सर्वजगत्स्रष्टृत्वादिधर्मान् ॥ ३४ ॥

तथा धर्मार्थकाममोक्षांश्च तत्तत्साधनसहितान् समासव्यासयोगतः संक्षेपविस्ताराभ्यां यथा यथावत् । तात्त्विकदेवोत्तमयुधिष्ठिरादिबोधने भीष्मस्यासामर्थ्यात् भीष्मस्य कीर्त्यर्थं तस्मिन् तत्काले विशेषाविष्टः श्रीकृष्ण एव पाण्डवप्रश्नान् व्याचख्यावित्यस्यार्थे यथेति ॥ ३५ ॥

स्वच्छन्दमृत्योः स्वेच्छया मरणं कुर्वतः योगिनः ज्ञानिनः वाञ्छितः उत्तरायणाख्यः कालः यः सः भीष्मस्य प्रत्युपस्थितः इत्यन्वयः । उत्क्रमिष्यतो ज्ञानिनः काले अनुगुणे किञ्चित् सुखाधिक्यं भवति, नान्यथा मुक्त्यभाव इत्येतमर्थं तुशब्दः वक्ति ॥ ३६ ॥

तदा उत्तरायणे प्राप्ते सति सहस्रणीः स्वमुक्तिसमये स्वोपादिष्टानेकजननेता । एकादशाक्षौहिणीनायकस्य बलवतां सहस्रसंख्यावतां नायकत्वकथनं निन्द्यत्वादुपेक्षणीयम् । अमीलितदृक्प्रफुल्ललोचनः विशेषतः उच्छ्वसितज्ञानो वा । भीष्मः गिरं विषयसम्बन्धिनीं उपसंहृत्य मुक्तो विषयसङ्गः येन तत्तथोक्तं तत् मनः पुरः स्थिते प्रत्यक्षे चतुर्भिः भुजैः उपलक्षिते शोभमानपिशङ्गवस्त्रे आदिपुरुषे नारायणावतारे श्रीकृष्णे व्यधारयत् विशेषेणाचलतयाऽधारयदित्येकान्वयः । मीलितदृक् अर्धमुकुलितचक्षुर्वा ॥ ३७ ॥

विशुद्धया फलरागादिदोषरहितया हरौ निरन्तरमनोधारणया धुताशुभः निरस्तपापः तस्य श्रीकृष्णस्येक्षया निरीक्षणेनैव नान्येन आशु तत्क्षणं विनष्टायुधनिमित्तव्यथः अत एव तदितरत्र निवृत्तः

इति मतिरुपकल्पिता वितृष्णा भगवति सात्वतपुङ्गवे विभूम्नि ।
स्वसुख उपगते क्वचिद्विहर्तुं प्रकृतिमुपेयुषि यद्भवप्रवाहः ॥ ३९ ॥

त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने ॥
वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या ॥ ४० ॥

---

निरस्तः सर्वेषां इन्द्रियाणां वृत्तीनां व्यापाराणां विभ्रमः विलासः यस्य सः तथोक्तः । निवृत्तसर्वेन्द्रियवृत्तिश्चायं विगतभ्रमश्चायमिति वा । पश्यनयं जल्पं वचनं विसृजन् रचयन् व्यर्थवचनं मुञ्चन्वा । जनं जननं अर्दयति विनाशयति । उपलक्षणमेतत् । मरणञ्च । जननमरणनाशकत्वेन नित्यमुक्तिदातृत्वात् जनार्दनः तं तुष्टावेत्येकान्वयः ॥ ३८ ॥

ननु किमियं स्तुतिः मानसी वाचनिकी वा ? नाद्यः । परार्थे जीवतः स्वप्रयोजनाय स्तुतेः अनुपपन्नत्वात् । द्वितीयो युक्त इत्यभिप्रेत्याह– इतीति[1] । इतिशब्दो हेत्वर्थः । प्रकरणार्थो वा । समाप्तिवचनो वा । यत एवं भगवान् सकलप्रवर्तकः तस्मात् तस्मिन् मतिः मननशीला बुद्धिः उपकल्पिता तद्विषयीकृता । सकलशास्त्रप्रकरणे वक्ष्यमाणप्रकरणे वा समाप्तौ मरणकाले । किं विशिष्टे ? विभूम्नि परिपूर्णे । अपरिच्छेदलक्षणपूर्णत्वं देशकालयोरप्यस्तीत्यतः उक्तं– भगवतीति । निरवधिकैश्वर्यादिगुणवति । यः कश्चित् ऋषिसत्तमो निर्दिश्यत इति शङ्का माभूदित्याह– सात्वतपुङ्गवे यादवेश्वरे । स्वसुखे स्वरूपानन्दे उपगते आगते अतिनिकटवर्तिनीति वा । 'विलीनो हि प्रकृतौ संसारमेती'ति श्रुतेः यस्याः सकाशाज्जीवानां संसारप्रवाहो भवति, क्वचित् सृष्टिकाले नानावताररूपैर्विहर्तुं महदहङ्कारादि जगत्स्रष्टुकामां तां प्रकृतिं श्रियं जडात्मिकाञ्च उपेयुषि प्राप्तवति । कीदृशी मतिः ? वितृष्णा विषयतृष्णारहिता । वौ हरौ तृष्णा यस्याः सा तथा वा । 'विः पक्षिपरमात्मनोरि'त्याभिधानम् ॥ ३९ ॥

विजयः अर्जुनः सखा यस्य सः तथा तस्मिन् श्रीकृष्णे मम अनवद्या रागाद्यवद्यविधुरा रतिरस्तु । रतिरनवद्या निर्दुष्टाऽस्त्विति वान्वयः । कथंभूते ? त्रिषु भुवनेषु कमनं कमनीयं त्रिभुवनानां कमनं इच्छा यस्मिन् तत्तथोक्तमिति वा । तमालपुष्पवद्वर्णं यस्य तत्तथा । वरञ्च तत् अम्बरञ्च वराम्बरम् । नवस्य रवेः आदित्यस्य करः किरण इव गौरं अरुणं वराम्बरं यस्य वपुषः तत्तथोक्तं । 'गौरोऽरुणे सिते पीते स्वच्छे च परिकीर्तित' इत्यभिधानम् । अलककुलैः कुन्तलकुलैः आवृतं आच्छन्नं आननाब्जं यस्य तत्तथा । एवंविधं वपुः दधाने ॥ ४० ॥

---

१ इतिमतिरिति - ड

युधि तुरगरजोविधूम्रविष्वक्कचलुलितश्रमवार्यलंकृतास्ये ।
मम निशितशरैर्विभिद्यमानत्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा ॥

सपदि सखिवचो निशम्य मध्ये निजपरयोर्बलयोरथं निवेश्य ।
स्थितवति परसैनिकायुरक्ष्णा हृतवति पार्थसखे रतिर्ममास्तु ॥ ४२ ॥

व्यवसितपृतनामुखं निरीक्ष्य स्वजनवधाद्विमुखस्य दोषबुद्ध्या ।
कुमतिमहरदात्मविद्यया यश्चरणरतिः परमस्य तस्य मेऽस्तु ॥४३॥

---

मम आत्मा मनः कृष्णे अस्तु इत्यन्वयः । कथंभूते ? विलसत् शोभमानं कवचं यस्य स तथा तस्मिन् । विलसत् सर्पोऽनन्तः कवचं शयनस्थानीयं यस्य स तथा तस्मिन्निति वा । अच्छेद्या-भेद्यत्वेऽपि असुरमोहनाय मम निशितैः शरैः विभिद्यमानेव त्वक् यस्य स तथा तस्मिन् । वीत्युप-सर्गाद्विद्यमानत्वमपि अविद्यमानमेवेति ज्ञातव्यम् । निशितशरैरपि अभिद्यमानत्वगिति तात्पर्यार्थः । विप्रिय इतिवत् । युद्धे तुरगाणां खुरनिपातोत्थितै रजोभिः विशेषेण धूम्रवर्णैश्च तैः विष्वद्भिः परस्परं आप्नद्भिः कचैः केशैः लुलितैः कलुषितैः श्रमवारिभिः श्रमनिमित्तैः स्वेदोदविन्दुभिः अलङ्कृतं आस्यं मुखं यस्य स तथोक्तः तस्मिन् ॥ ४१ ॥

पार्थसखे श्रीकृष्णे मम रतिरस्तु इत्यन्वयः । 'सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युते'ति सख्युः अर्जुनस्य वचः निशम्य सपदि वचःश्रवणानन्तरं निजपरयोः पाण्डवकौरवसंबन्धिनोर्बलयोः सैन्ययोर्मध्ये रथं प्रवेश्य स्थितवति अक्ष्णा निरीक्षणेन परसैनिकानां कौरवसैन्यानां आयुः जीवनलक्षणं हृतवति ॥ ४२ ॥

यः परमः वीरस्वर्गं प्राप्तुं युद्धाय व्यवस्थितयोः निश्चितयोः पृतनयोः सेनयोः मुखं भीष्मादिकं निरीक्ष्य 'हत्वार्थकामांस्तु गुरूनिहैवे'ति दोषबुद्ध्या 'न योत्स्य' इत्युक्त्वा स्वजनहननाद्विमुखस्य निवृत्तस्य अर्जुनस्य कुमतिं दुष्टनिग्रहशिष्टपरिपालनलक्षणव्यापारबुद्धेः विपरीतबुद्धिं 'अशोच्यानन्वशोचस्त्वमि'त्यादिरूपया आत्मविद्यया अहरत् 'करिष्ये वचनं तवे'ति दुष्टनिग्रहलक्षणे धर्मे बुद्धिं कारितवान् । मे तस्य परमस्य चरणयोः स्मरणेन ज्ञानसाधनयोः अवयवविशेषयोः रतिरस्तु इत्यन्वयः ॥ ४३ ॥

स्वनियममपहाय मत्प्रतिज्ञामृतमधिकर्तुमवप्लुतो रथस्थः ।
धृतरथचरणोऽभ्ययाद् चलद्गु हरिरिव हन्तुमिभं गतोत्तरीयः ॥
शितविशिखहतो विशीर्णदंसः क्षतजपरिप्लुत आततायिनो मे ।
प्रसभमभिससार मद्वधार्थं स भवतु मे भगवान् गतिर्मुकुन्दः ॥ ४५ ॥
विजयरथकुटुम्ब आत्ततोत्रे धृतहयरश्मिनि तच्छ्रियेक्षणीये ।
भगवति रतिरस्तु मे मुमूर्षोर्यमिह निरीक्ष्य हता गताः स्वरूपम् ॥
ललितगतिविलासवल्गुहासप्रणयनिरीक्षणकल्पितोरुमानाः ।
कृतमनुकृतवत्य उन्मदान्धाः प्रकृतिमगुः किल यस्य गोपवध्वः ॥

---

अथ 'युद्धे आयुधं न ग्रहीष्यामि' इति स्वनियमं प्रतिज्ञालक्षणं विहाय यो भक्तानुकम्पी 'आयुधं ग्राहयिष्यामी'ति मत्प्रतिज्ञामृतं अधि सत्ये स्थितां कर्तुं धृतरथचरणः उद्धृतसुदर्शनचक्रः रथस्थः रथादवप्लुतोऽवतीर्णः गतोत्तरीयः श्लथितोत्तरीयवस्त्रः हरिः सिंहः इभं गजमिव बलाग्रे उभयोः सेनयोः पुरतो मां हन्तुमभ्ययात् ॥ ४४ ॥

यश्च आततायिनो मे निशितैः तेजितैः विशिखैः बाणैः हतः विद्धः विशीर्णदंसः खण्डितकवचः क्षतजेन रुधिरेण परिप्लुतः स्नात इव प्रसभं 'रथान्नावतर' 'भीष्मं न प्रहर' इत्यर्जुनवाक्यं अनादृत्य बलात्कारेण मम वधार्थं अभिससार । स मुकुन्दो भगवान् मम मुदे भवत्विति श्लोकद्वयान्वयः ॥४५॥

इह युद्धे यं निरीक्ष्य हताः स्वरूपं वैष्णवं धाम गताः । मुमूर्षोः म्रियमाणस्य मे तस्मिन् भगवति रतिरस्त्वित्यन्वयः । कथंभूते ? विजयस्य अर्जुनस्य रथ एव कुटुम्बं रक्षणीयवर्गः यस्य स तथा तस्मिन् । आत्ततोत्रे गृहीतप्रतोदे । धृताः हयरश्मयः कविकानुबन्धरज्जवः येन सः तथा । जितश्रम इति भावप्रधानो निर्देशः । जितश्रमतया ईक्षणीयः दर्शनीयः । धृतहयरश्मिश्चायं जितश्रमेक्षणीयश्चेति तथोक्तः तस्मिन् । जितश्रम इति कृष्णविशेषणं वा । स्वरूपं मूलरूपं वा ॥ ४६ ॥

यस्य ललितानि गतिविलासादीनि तथोक्तानि । गतिश्च विलासश्च वल्गुहासः मन्दस्मितश्च प्रणयेन निरीक्षणञ्च तथोक्तानि तैः कल्पितं उरु पृथु मानं यासां ताः तथोक्ताः । ललितगत्यादिभिः कृष्णे कल्पितं समर्पितं उरुमानं महापूजा याभिः ताः तथोक्ताः इति वा । अत एव उत्कृष्टेन मदेन अन्धाः । कृतं पूतनावधादिपराक्रमं अनुकृतवत्यः कृष्णायमानत्वेनानुकुर्वाणाः गोपवध्वः गोपस्त्रियः प्रकृतिं जडशरीरं विहाय स्वभावाविर्भावलक्षणं मोक्षं अगुः किल । तस्मिन् कृष्णे रतिरस्त्विति पूर्वेणान्वयः ॥

मुनिगणनृपवर्यसंकुलेऽन्तः सदसि युधिष्ठिरराजसूय एषाम् ।
अर्हणमिपेद ईक्षणीयो मम दृशिगोचर एष आविरात्मा ॥ ४८ ॥

तमिममहमजं शरीरभाजां हृदि हृदि विष्ठितमात्मकल्पितानाम् ।
प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोहः ॥४९॥

क्षितिभरमवरोपितुं कुरूणां श्वसन इवासृजदक्षवंशवह्निम् ।
तमिममजमनुव्रतार्तिहांघ्रिं हृदि परिरभ्य जहामि मर्त्यनीडम् ५०

---

मुनीनां गणैः नृपाणां वर्यैश्च सङ्कुले निबिडे युधिष्ठिरराजसूये यज्ञे अन्तः सदसि एषां ऋष्यादीनां मध्ये यः अर्हणं अग्रपूजां अभिपेदे प्राप्तवान् । युधिष्ठिरपृष्टभीष्ममुखेन अयमेवाग्रपूजार्ह इति शास्त्रत उपपाद्यादत्तेति वा । स एषः आत्मा परमात्मा मत्कारुण्यान्मरणसमये मम दृशिगोचरः दृष्टिविषयः आविरभूत् ,अहो मम भाग्यमिति शेषः ॥ आविरात्मा प्रकाशरूप इति वा ॥ ४८ ॥

आत्मत्वविवरणपूर्वकं स्तौति -- तमिममिति । चक्षुरभिमानित्वेन प्रतिदृशं दृशं दृशं प्रति नैकधा चक्षुरिन्द्रियनियामकतया अनेकरूपं स्थितमर्कं यथैकमेव समधिगच्छति ज्ञानी, तथाहमपि आत्मना कल्पितानां सृष्टानां शरीरभाजां जीवानां हृदि हृदि विष्ठितं विविधं बहुरूपं स्थितं तमिममजं कृष्णं एकत्वसङ्ख्याविशिष्टं न द्वित्वोपेतं समधिगतोऽस्मि ज्ञातवानस्मि । कीदृशोऽहं ? विधूतभेदमोहः अवतारगुणादिषु निरस्तभेदभ्रमबुद्धिः । यथावस्थितवस्तुविज्ञानी वा । अविकृन्द्रधिगमनाधिगम्यानां भेदस्य अबाधितानुभवसिद्धत्वात् अन्योऽहं कृष्णोऽन्य इति भेदमोहनिरासवचनं निजदर्शनदुराग्रह-विजृम्भितम् । अविद्याकल्पितत्वमात्मपदप्रयोगेण निरस्तम् । अन्यथा तस्य वैयर्थ्यं स्यात् । शरीर-भाजामित्यनेन चेतनबहुत्वसिद्धेश्च । 'नित्यो नित्यानां चेतनश्चेतनाना'मिति श्रुतेः ॥ ४९ ॥

स्तुतिमुपसंहरति- क्षितिभरमिति । श्वसन इव वायुर्यथा वंशेषु वेणुषु मिथः सङ्घर्षणाद्वह्निं सृजति तथा अयं श्रीकृष्णः क्षितिभरं भूभारं असुरबललक्षणं अवरोपयितुम् अवतारयितुं कुरूणां अक्षवंशे अक्षतवंशे वह्निं द्यूताख्यदहनं असृजत् । तमिमं अनुव्रतानां भक्तानां आर्तिं हतवानांघ्रिः अङ्घ्रिर्यस्य सः तथोक्तः तं अजं श्रीकृष्णंहृदि परिरभ्य मर्त्यनीडं मरणधर्मशरीरं जहामि, स कृष्णोऽत्रानुग्रहं करोत्विति वाक्यशेषः ॥ ५० ॥

---

१ अय ख ह पाठः । अन्यत्र अवरोपितुम् । २ अक्षतवंशे अक्षवह्नि • ड ख ह ड ड

सूत उवाच--

कृष्ण एवं भगवति मनोवाग्दृष्टिवृत्तिभिः ।
आत्मन्यात्मानमावेश्य सोऽन्तःश्वास उपारमत् ॥ ५१ ॥

संपद्यमानमाज्ञाय भीष्मं ब्रह्मणि निष्कले ।
सर्वे बभूवुस्ते तूष्णीं वयांसीव दिनात्यये ॥ ५२ ॥

तत्र दुन्दुभयो नेदुः देवगन्धर्ववादिताः ।
शशंसुः साधवो ब्रह्मन् खात्पेतुः पुष्पवृष्टयः ॥ ५३ ॥

तस्य निर्हरणादीनि संपरेतस्य भार्गव ।
युधिष्ठिरः कारयित्वा मुहूर्तं दुःखितोऽभवत् ॥ ५४ ॥

तुष्टुवुर्मुनयो हृष्टाः कृष्णं तद्गुह्यनामभिः ।
ततस्ते कृष्णहृदयाः स्वाश्रमान्प्रययुः पुनः ॥ ५५ ॥

---

कथङ्कारं शरीरमत्याक्षीदिति तत्राह – कृष्ण इति ।

एवं उक्तप्रकारेण मनसो वाचो दृष्टेः वृत्तिभिः । हृदि परिरभ्येत्युक्तत्वात् आत्मनि हृदि स्थिते बहिः स्थिते च श्रीकृष्णे भगवति आत्मानं स्वजीवचैतन्यलक्षणमन्तःकरणं नाहं स्वतन्त्रः तदधीन एवेत्यावेश्य निधाय स भीष्मः अन्तःश्वासः रेचकपूरके कृत्वा श्वासोच्छ्वासरूपप्राणापानौ कुम्भके कृत्वा मूलाधारात् ब्रह्मनाड्या नाभिचक्रादिक्रमेण उदानवायुं ऊर्ध्वं नीत्वा उपारमत् शरीरं जहावित्येकान्वयः ॥ ५१ ॥

समागतास्ते सर्वे निष्कले षोडशकलावर्जिते ब्रह्मणि हरौ सम्पद्यमानं प्राप्नुवन्तं भीष्ममाज्ञाय तूष्णीं बभूवुः । कथमिव ? दिनात्यये सन्ध्यासमये वयांसि पक्षिण इवेत्यन्वयः ॥ ५२ ॥

तत्र भीष्मस्य निर्याणसमये खात् आकाशात् , भीष्ममूर्ध्नीति शेषः ॥ ५३ ॥

सम्परेतस्य मृतस्य निर्हरणादीनि शवसंस्कारपुरःसराणि कर्माणि कृत्वा भीमादिभिश्च कारयित्वा ॥ ५४ ॥

भगवन्महिम्ना हृष्टाः रोमाञ्चितसर्वाङ्गाः तस्य कृष्णस्य गुह्यनामभिः वेदशिरोगतात्यन्तरहस्यनामभिः कृष्णहृदयाः कृष्णः हृदये येषां ते तथोक्ताः । कृष्णे हृदयं मनो येषामिति वा ॥ ५५ ॥

ततो युधिष्ठिरो गत्वा सकृष्णो गजसाह्वयम् ।
पितरं सान्त्वयामास गान्धारीञ्च तपस्विनीम् ॥ ५६ ॥

पित्रा चानुमतो राजा वासुदेवानुमोदितः ।
चकार राज्यं धर्मेण पितृपैतामहं विभुः । ॥ ५७ ॥

॥ इति श्रीमद्भागवते प्रथमस्कन्धे नवमोऽध्यायः ॥

अथ दशमोऽध्यायः

शौनक उवाच—

हत्वा स्वरिक्तस्पृध आततायिनो युधिष्ठिरो धर्मभृतां गवि स्थिरः ।
सहानुजैः प्रत्यवरुद्धभोजनः कथं प्रवृत्तः किमकार्षीत्ततः ॥ १ ॥

---

गजसाह्वयं गजसमाननाम हस्तिनपुरम् । पितरं धृतराष्ट्रम् ॥ ५६ ॥

अनुमोदितो अनुज्ञातः पित्रा धृतराष्ट्रेण च पितृपैतामहं पितृपितामहागतम् । धर्मेण शास्त्रोक्तवर्त्मना । विभुः राज्यकरणशक्तिमान् ॥ ५७ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुविरचितायां
प्रथमस्कन्धे नवमोऽध्यायः ॥

* * *

॥ अथ दशमोऽध्यायः ॥

हस्तिनपुराद् द्वारकायात्राकथनपूर्वकं भगवत्प्रसादलब्धयुधिष्ठिरराज्यसमृद्धिकथनेन हरेर्महिमैव वर्ण्यतेऽस्मिन्नध्याये । तत्र हरितद्भक्तकथायामवितृप्तमना: शौनकः पुनरपि पृच्छतीत्याह— हत्वेति । स्वरिक्थं स्वराज्याख्यद्रव्यं अस्माकमिति स्पर्धन्त इति स्वरिक्थस्पृधः तान् । आततायिनः प्रतिवीरं हत्वा मर्तुकामान् दुर्योधनादीन् हत्वा अनुजैः सह प्रत्यवरुद्धभोजनः सङ्कुचितभोगः धर्मभृतां धर्मप्रवर्तकानां व्यासादीनां गवि वाचि स्थिरः निश्चलः युधिष्ठिरः कथं केन प्रकारेण राज्यपालने प्रवृत्तः ? किं कर्माकार्षीत् ? अथ कृष्णश्च तेन सह हस्तिनपुरमागतः किमकृत ? तदस्माकं ब्रूहि इत्येकान्वयः ॥ १ ॥

सूत उवाच—

वंशं कुरोर्वंशदवाग्निनिर्हृतं संरोहयित्वा भवतापनो हरिः ।
निवेशयित्वा निजराज्य ईश्वरो युधिष्ठिरं प्रीतमना बभूव ह ॥ २ ॥

याजयित्वाऽश्वमेधैस्तान्त्रिभिरुत्तमकल्पकैः ।
तद्यशः पावनं दिक्षु शतमन्योरिवातनोत् ॥ ३ ॥

निशम्य भीष्मोक्तमथाच्युतोदितं प्रवृत्तविज्ञानविधूतविभ्रमः ।
शशास गामिन्द्र इवाजिताश्रयः परिध्युपान्तामनुजानुवर्तितः ॥ ४ ॥

---

पाण्डवानां निरतिशयहरिकृपयैव राज्यादिलाभ इति ज्ञापयन् पाण्डवस्थापनादिकृष्णमहिमानं तावदाह- वंशमिति । ईश्वरः जगच्चेष्टायां समर्थः हरिः वंशलक्षणदवात् वनात् उत्पन्नाग्निना नितरां हृतं कुरोः राज्ञो वंशं संरोहयित्वा परीक्षिदङ्कुरेण जनयित्वा युधिष्ठिरं निजराज्ये निवेशयित्वा प्रीतमनाः बभूवेत्येकान्वयः । नित्यप्रीतस्य कादाचित्कप्रीत्युक्तिः लौकिकापेक्षयेत्येतमर्थं हशब्देन प्रसिद्धिद्योतनेनाह । भवभावन इति वा पाठः, सृष्टिवर्धनः । अनेन संरोहणशक्तिरदर्शि । ईश्वर इत्यनेन राज्यस्थापनमाहात्म्यमनूचि । भवतापन इत्यनेन संसारोन्मूलनकर्तुः हरेः पाण्डवरिपुनिर्बर्हणं किमु वक्तव्यमिति न्यायो दर्शितः ॥ २ ॥

याजयित्वेत्ययमुक्तार्थः ॥ ३ ॥

किमकार्षीत् इति प्रश्नं परिहरति– निशम्येति । अथ युधिष्ठिरः भीष्मोक्तं धर्मसर्वस्वं तथा अच्युतस्य कृष्णस्य उदितं वाक्यं च निशम्य तदुभयं श्रुत्वा प्रवृत्तं उत्पन्नं यद्विज्ञानं तेन विशेषेण धूतः निरस्तः विविधभ्रमः तत्वे नानासंशयो यस्य स तथोक्तः । श्रीकृष्णाश्रयः अनुजैः भीमादिभिरनुवर्तितः । अमात्यादिसप्तप्रणिधिभिः उपात्तां प्राप्तां गां अवनिं स्वर्गं इन्द्रो यथा तथा शशासेत्येकान्वयः । निर्भूस्वर्गसमानां अपालयदिति द्योतनाय गामित्युक्तम् । 'अमात्या मन्त्रिणो दूताः श्रेणयश्च पुरोहिताः । पुरं जनपदश्चेति सप्त प्रणिधयः स्मृताः' इति वचनात् । परिधिः समुद्रः स एव उपान्ते अवसाने यस्याः सा परिध्युपान्ता तामिति पाठो व्याख्यायणनवापरिज्ञानादुच्छृङ्खलित इति ज्ञातव्यम् । ४ ॥

कामं ववर्ष पर्जन्यः सर्वकामदुघा मही ।
सिषिचुः स्म व्रजं गावः पयसाऽत्यूधसो मुदा ॥ ५ ॥

नद्यः समुद्रा गिरयः सवनस्पतिवीरुधः ।
फलन्त्योषधयः सर्वाः काममन्वृतु तस्य वै ॥ ६ ॥

नाधयो व्याधयः क्लेशा दैवभूतात्महेतवः ।
अजातशत्रावभवन् जन्तूनां राज्ञि कर्हिचित् ॥ ७ ॥

उषित्वा हास्तिनपुरे मासान्कतिपयान्हरिः ।
सुहृदां च विशोकाय स्वसुश्च प्रियकाम्यया ॥ ८ ॥

आमन्त्र्य चाभ्यनुज्ञातः परिष्वज्याभिवाद्य तम् ।
आरुरोह रथं कैश्चित्परिष्वक्तोऽभिवादितः ॥ ९ ॥

---

कृष्णाश्रयफलमाह– काममिति । पर्जन्यो मेघाभिमानी देवः । सर्वेषां अभीष्टं दोग्धीति सर्वकामदुघा । गावः सौरभेयः पयसा क्षीरेण गोष्ठं सिषिचुः सिक्तवत्यः अतिस्थूलं ऊधः क्षीरपात्रं यासां ताः अत्यूधसः ॥ ५ ॥

नद्यादयः रत्नानि फलन्ति । वनस्पतयः पनसादयः । वीरुधो मातुलुङ्गादयः । ओषधयः व्रीह्यादयः । पर्जन्यादयः तस्य युधिष्ठिरस्य काममिच्छानुसारेण अन्वृतु ऋतौ ऋतौ वृष्ट्यादिमन्तोऽभूवन्नित्यन्वयः ॥ ६ ॥

न केवलमिष्टप्राप्तिः, अनिष्टनिवृत्तिश्च सुतरामित्याह– नाधय इति । अजातशत्रौ युधिष्ठिरे जन्तूनां राज्ञि रक्षके सति कदाचिदप्याध्यादिक्लेशाः नासुरित्यन्वयः । आधिः मानसी पीडा । व्याधिः भगन्दरादिः । कथंभूताः ? दैवानि भूतानि च आत्मा च हेतुः निमित्तं येषां ते तथोक्ताः । अधिदैवहेतुः अनावृष्ट्यादिः । अधिभूतहेतुः उन्मादादिः । अध्यात्महेतुः कुष्ठादिः ॥ ७ ॥

इदानीं कुरुपुरं प्रविष्टः कृष्णः किमकार्षीदित्याभिप्रायिकं प्रश्नं परिहरति– उषित्वेति । सुहृदां पाण्डवानां विशोकाय स्वसुः सुभद्रायाश्च प्रियकाम्यया कतिचिन्मासान् हस्तिनपुरे उषित्वा । आमन्त्र्य द्वारकां गमिष्यामीति युधिष्ठिरायोक्त्वा शिष्टाचाररक्षणाय युधिष्ठिरं परिष्वज्याभिवाद्य कैश्चित् अर्जुनादिभिः आलिङ्गितो वन्दितश्च रथमारुरोहेत्यन्वयः ॥ ८ ॥ ९ ॥

सुभद्रा द्रौपदी कुन्ती विदुरोऽथ युधिष्ठिरः ।
गान्धारी धृतराष्ट्रश्च युयुत्सुर्गौतमो यमौ ॥ १० ॥
वृकोदरश्च धौम्यश्च स्त्रियो मत्स्यसुतादयः ।
न सेहिरे विमुह्यन्तो विरहं शार्ङ्गधन्वनः ॥ ११ ॥
तत्सङ्गान्मुक्तदुःसङ्गो हातुं नोत्सहते बुधः ।
कीर्त्यमानं यशो यस्य सकृदाकर्ण्य रोचनम् ॥ १२ ॥
तस्मिन्न्यस्तधियः पार्थाः सहेरन्विरहं कथम् ।
दर्शनस्पर्शनालापशयनासनभोजनैः ॥ १३ ॥
सर्वे तेऽनिमिषैरक्षैस्तमनुद्रुतचेतसः ।
वीक्षन्तः स्नेहसंबन्धाद्विचेलुस्तत्र तत्र ह ॥ १४ ॥

---

सुभद्रादयः शार्ङ्गधन्वनः हरेः विरहं न सेहिरे इत्यन्वयः । युयुत्सुः धृतराष्ट्रात् वश्यायां जातो दुर्योधनानुजः । गौतमः कृपाचार्यः । यमौ नकुलसहदेवौ । मत्स्यसुतादयः उत्तराप्रभृतयः । विमुह्यन्तः कर्तव्यतामजानन्तः ॥ १० ॥ ११ ॥

पार्थाः मुकुन्दविरहं न सेहिर इत्येतदाश्चर्यं न भवतीत्याह– तत्सङ्गादिति । तस्य हरेः सङ्गात् सेवालक्षणात् मुक्तः दुस्सङ्गः दुःखदः सङ्गः अन्यत्र पुत्रदारादिषु सङ्गः येन सः मुक्तदुःसङ्गः बुधो विवेकी जनः तं हातुं नोत्सहते तस्मादित्यन्वयः । तत्र कैमुत्यमाह– कीर्त्यमानमिति । भागवतैः कीर्त्यमानं यस्य कृष्णस्य यशः सकृदाकर्ण्य पुंसां रोचनं रुचिजनकम् ॥ १२ ॥

दर्शनस्पर्शनादिभिः अभ्यस्तधियः पार्थाः तस्य विरहं कथं सहेरन् । नैव सहन्त इत्येतत्किमु वक्तव्यमिति भावः ॥ १३ ॥

विरहमसहमानानां तेषां भक्तिप्रसरसंप्लवातिरेकमाह– सर्वे इति । अनिमिषैः पक्ष्मव्यापाररहितैः अक्षैः नेत्रैः तं वीक्षमाणाः कृष्णानुगतहृदयाः ते सर्वे स्नेहात् तत्र तत्र विचेलुरित्यन्वयः । यावद्यावद् दूरं गतः तावत्तावदुत्तुङ्गभूपृष्ठमारुह्य वीक्षमाणाः तस्थुः । अदर्शनं याते तस्मिन् चेतसा तमनुदुद्रुवुरि[1] तीममर्थं हशब्दः सूचयति ॥ १४ ॥

---

1 इत्येतं विभागं विद्वाब्धेनाह । - ऋ०

न्यरुन्धन्नुद्गलद्बाष्पमौत्कण्ठ्याद्देवकीसुते ।
निर्यात्यगारान्नाभद्रमिति स्याद्बान्धवस्त्रियः ॥ १५ ॥

मृदङ्गशङ्खभेर्यश्च वीणापणवगोमुखाः ।
धुन्धुर्यानकघण्टाद्या नेदुर्दुन्दुभयस्तथा ॥ १६ ॥

प्रासादशिखरारूढाः कुरुनार्यो दिदृक्षया ।
ववृषुः कुसुमैः कृष्णं प्रेमव्रीडस्मितेक्षणाः ॥ १७ ॥

सितातपत्रं जग्राह मुक्तादामविभूषितम् ।
रत्नदण्डं गुडाकेशः प्रियः प्रियतमस्य ह ॥ १८ ॥

---

बान्धवस्त्रियः देवकीसुते अगारात् गारो निगरणं नाशलक्षणं यस्मात् न सोऽगारः[1] । अगाः वृक्षा एव अराणि वंशवंश्यलक्षणानि यस्येति वा । अगं अगमनं कान्त्यतिशयात् अरं सलं यस्मादिति वा । अगानां स्वर्णरत्नकानां पर्वतानां आरः प्रवेशलक्षणं गमनं यस्मिन्निति वा । तस्मात् पुरात् निर्याति सति अभद्रं अमङ्गलं न स्यात् इति भावेन औत्कण्ठ्यात् उद्गलद्बाष्पं नेत्रजलं न्यरुन्धन् स्तम्भितवत्य इत्येकान्वयः ॥ १५ ॥

मार्दङ्गिकादिभिः आहताः[2] मृदङ्गादयो नेदुरित्यन्वयः । भेरी नाम चर्मपिहितः दीर्घमहादारुकृतो वाद्यविशेषः । धुन्धुरिः कांस्यात्मकं वाद्यम् । दुन्दुभिस्त्विरश्चीनवाद्यविशेषः । आनकः पटहः । पणवो ढक्काविशेषः ॥ १६ ॥

प्रेम्णा व्रीडेन स्मितेन च सहितं ईक्षणं दर्शनं यासां ताः तथोक्ताः । व्रीडशब्दः उभयलिङ्गः । प्रेमव्रीडाभ्यां यत् स्मितं तत्पूर्वमीक्षणं यासामिति वा । कुसुमैः कुसुमानि । व्यत्ययो भक्त्यतिशयद्योतनार्थः । पुष्पैः करणैः इति वा ॥ १७ ॥

गुडाका निद्रा 'निद्रा गुडाका सम्प्रोक्ता प्रमीळा मृतिरुच्यते' इत्यभिधानम् । तस्याः ईशः गुडाकेशः जितनिद्रोऽर्जुनः । इन्द्रकीलके विनिद्रो भूत्वा तप्ततपाः पशुपतेरेतन्नाम लब्धवान् । गुडवद्रक्तकेशो वा । दीर्घस्तु छान्दसः । मुक्तादामविभूषितं मौक्तिकमालालङ्कृतप्रान्तमण्डलम् । रत्नखचितदण्डम् । सितातपत्रं श्वेतच्छत्रं जग्राहेत्यन्वयः । हरेरात्मादेरतिशयेन प्रियत्वं 'तदेतत्प्रेयः' इत्यादिश्रुतिप्रसिद्धं हशब्देनाह । अर्जुनस्य कैङ्कर्यातिशयदर्शी वा । स्वसारथ्यकरणलक्षणापराधपरिहारार्थो वा ॥

---

१ न गारो निगरणं नाशलक्षणं यस्मात् सोऽगारः - ङ । २ अनिहताः - ङ ।

उद्धवः सात्यकिश्चैव व्यजने परमाद्भुते ।
विकीर्यमाणैः कुसुमैः रेजे मधुपतिः पथि ॥ १९ ॥

अश्रूयन्ताशिषः सत्यास्तत्र तत्र द्विजेरिताः ।
नानुरूपानुरूपाश्च निर्गुणस्य गुणात्मनः ॥ २० ॥

अन्योन्यमासीत्सञ्जल्प उत्तमश्लोकचेतसाम् ।
कौरवेन्द्रपुरस्त्रीणां सर्वश्रुतिमनोहरः ॥ २१ ॥

स्त्रिय ऊचुः—

स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष आत्मनि ।
अग्रे गुणेभ्यो जगदात्मनीश्वरे निमीलितात्मा निशि सुप्तशक्तिषु ॥२२॥

---

उद्धवसात्यकी च व्यजने जगृहतुरिति पूर्वेण सम्बन्धः । एवशब्दः स्वहस्ताभ्यामेव जगृहतुः, न वाचोक्त्वाऽन्याभ्यां स्वदासाभ्यामित्यस्मिन्नर्थे । मधूनां यादवगोत्रविशेषाणां[1] पतिः । मुक्तार्धांशो वा । कुसुमैः, कुरुकुले[2]पुरन्ध्रीकरकमलनुन्नैरिति शेषः । पथि राजमार्गे ॥ १९ ॥

कुरुपुरे तत्र तत्र तत्तन्मार्गे द्विजवरमुखनिःसृताः 'दुष्टान् जहि जहि । साधून् पालय पालय । अस्माननुगृहाणे'त्यादिकाः आशिषः शुभवाक्यप्रबन्धाः अश्रूयन्तेत्यन्वयः । कीदृश्यः ? सत्याः यथार्थविषयाः । निर्गुणस्य सत्त्वादिगुणप्रवृत्त्युदासीनस्य अण्डाद्बहिःस्थितस्य नानुरूपाः अननुकूला इव । सत्त्वादिगुणकार्याण्डे स्थित्वा सत्त्वादिगुणान् आतयति सततं प्रवर्तयतीति गुणात्मा । 'अत सातत्यगमन' इति धातोः उणादिप्रत्ययनिमित्तमेतद्रूपम् । तस्य पालनादिकर्तुः अनुरूपाः पालनानुग्रहादिगुणात्मनो वा । चशब्दः[3] समुच्चये । इवार्थे वा ॥ २० ॥

न केवलं कुरुकुलस्त्रियो हरौ पुष्पावकिरणमकुर्वन्, किन्तु तत्स्तुतिनर्पीति भावेनाह— अन्योन्यमिति । उत्तमश्लोकचेतसां कौरवेन्द्रपुरस्त्रीणां[4] सर्वश्रुतीनां वेदाभिमानिनीनां देवतानां मनोहरः । सर्वेषां जन्तूनां श्रुतीः श्रवणानि मनांसि च हरतीति वा । परस्परं सञ्जल्पः स्तुतिलक्षणः संलापः आसीदित्येकान्वयः ॥ २१ ॥

कोऽसाविति तत्राह— स वा इति । हर्यपेक्षया अप्रधानत्वात् गुणशब्दवाच्येभ्यो महदादितत्त्वेभ्योऽग्रे निशि महाप्रलये सुप्तशक्तिषु शक्यत्वात्तदधीनत्वाच्छक्तिशब्दवाच्यासु[5] सत्त्वादिगुणाभिमानिनीषु

---

१ यादवगोत्रविशेषगोत्राणां - ड । २ कुरुपुर - ड । ३ चः समुच्चये - ड ।
४ पुर - ड । ५ तदिति नास्ति - ड ।

स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम् ।
अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्त्रिकृत् ॥२३॥

स वा अयं यत्पदमत्र सूरयो जितेन्द्रिया निर्जितमातरिश्वनः ।
पश्यन्ति भक्त्युत्कलितामलात्मना न त्वेष सत्त्वं परिमार्ष्टुमर्हति ॥२४॥

---

श्रीभूदुर्गासु सुप्तासु जगद्व्यापारान् विहाय हरौ रममाणासु सतीषु य एकः प्रधानः जगदात्मनि जगदादानकर्तरि जगत्संहर्तरि न विशेषः अधिकः यस्मात् सः अविशेषः । तस्मिन् ईश्वरे ईशनादिशक्तिमति 'सः भगवः कस्मिन्प्रतिष्ठित' इति श्रुतेः स्वरूपाधारे स्थितः । निमीलितात्मा 'तुच्छ्येनाभ्वपिहितं यदासीदि'ति श्रुतेः गुणतोऽल्पतया तमआदिरूपतया प्रकृत्या निगूहित आसीत् । स पुरातनः पुरुषो विष्णुः अयं कृष्णः किल परमार्थः सत्यं वै । नानयोः कश्चिद्विशेषः इत्यन्वयः ॥ २२ ॥

स परमपुरुष एव भूयः पुनः सृष्टिदशायां स्वजीवमायां प्रकृतिं स्वभार्यां महालक्ष्मीं अनुससार । तस्यां वीर्यमाधादित्यन्वयः । कथंभूतां ? निजवीर्यचोदितां स्वसामर्थ्येन प्रेरितां सिसृक्षतीं सृष्टीच्छावतीम् । कथंभूत सः? अप्रसिद्धगुणत्वात् अप्राकृतरूपत्वाच्च अनामरूपात्मनि स्वस्मिन्नाधारे रूपनामनी विधित्समानः रूपनामात्मकं प्रपञ्चं स्रष्टुमिच्छन् शास्त्रिकृत् सकलनियमनकर्ता । य एवंविधः सः हरिरयं कृष्णः किलेत्यन्वयशेषः ॥ २३ ॥

अत्र कर्मभूमौ जितेन्द्रियाः प्राणायामेन निर्जितमातरिश्वनः वशीकृतप्राणाः सूरयः भक्त्या उत्कलितेन विकसितेन उत्कण्ठितेन वा अमलेन रागादिमलरहितेनात्मना स्वरूपान्तःकरणेन यत्पदं यस्य स्वरूपं पश्यन्ति स वा अयं कृष्णः किलेत्यन्वयः । एष कृष्णः सात्त्विकानामनुग्राहकः । अस्माकं सत्वं स्वविषयकं ज्ञानं परिमार्ष्टुं नाशयितुं नार्हति । परिपूर्वो मार्ष्टिः वर्जनार्थे वर्तते । नन्वित्यनेन 'अपपरी वर्जने' इति सूत्रं प्रमाणयति । नन्विति पाठे सुगमः । कर्मणान्तःकरणशुद्धिः किं न स्यादिति तत्राह—न त्विति । एषः कर्मणा सत्त्वं अन्तःकरणं परितः सर्वतः मार्ष्टुं शोधयितुं नार्हति । किन्तु भक्त्या श्रवणाद्युपसंस्कृतया[2] यावदन्तःकरणं शुध्यति तावन्न कर्मणेति भावः ॥ २४ ॥

---

१ अयं ङ पाठः । अन्यत्र नास्ति । २ श्रवणद्य - ङ ।

स वा अयं मुन्यनुगीतसत्कथो वेदेषु गुह्येषु च वेदवादिभिः ।
य एक ईशो जगदात्मलीलया सृजत्यवत्यत्ति न तत्र सज्जते ॥ २५ ॥
यदा ह्यधर्मेण तमोऽधिका नृपाः जीवन्ति तत्रैष हि सात्वतः किल ।
धर्मं भगं सत्यमृतं दयां यशो भवाय रूपाणि दधद्युगे युगे ॥ २६ ॥
अहो अलं श्लाघ्यतमं यदोः कुलं त्वहो अलं पुण्यतमं मधोर्वनम् ।
यदेष पुंसामृषभः प्रियश्रवाः स्वजन्मना चङ्क्रमणेन चाञ्चति ॥ २७ ॥
अहो बत स्वर्यशसस्तिरस्करी कुशस्थली पुण्ययशस्करी भुवः ।
पश्यन्ति नित्यं यदनुग्रहेक्षितस्मितावलोकं स्वपतिं स्म यत्प्रजाः ॥ २८ ॥

---

यो वेदवादिभिः अनन्तवेदेषु गुह्येषु उपनिषत्सु च अनुगीतसत्कथः निरन्तरोदितसच्चरितः यश्चैक एव ईशः यश्चात्मलीलया जगत्सृजति, सृष्टमवति तत्तद्योग्यकर्मफलभुक्तये, अत्ति संहरति, यश्च जगति न सज्जते, आप्तकामत्वात् फलं नादित्सति, हे सखि स वा अयं कृष्ण इत्येकान्वयः । गुह्यवादिभिरिति पाठे उपनिषद्विचारकुशलैरित्यर्थः ॥ २५ ॥

तमोऽधिकाः तामसाः असुरप्रकृतयः नृपाः अधर्मेण धर्मविरुद्धेन श्रुतिस्मृत्यविहितप्राणिहिंसादिकर्मणा यदा जीवन्ति स्वशरीरयात्रां कुर्वन्ति तत्र तदा एषः हरिः सात्वतः सात्विकान् देवादीननुगृह्णन् धर्मादिनामवन्ति रूपाणि युगे युगे दधत् दधानो, वर्तते इति शेषः । वराहमत्स्यादिरूपस्य भून्युद्धरणकर्मणा धर्माख्या । कपिलादेरणिमाद्यष्टैश्वर्ययोगात् षड्गुणपूर्णत्वात् भगाख्या । कल्क्यादेः तमोविनाशकसत्वगुणमभिसंबध्यानन्तगुणाभिव्यञ्जकतया विशेषानन्दरूपत्वात् सत्याख्या । व्यासादेः ज्ञानप्रवर्तकत्वेन ज्ञानविशिष्टत्वात् ऋताख्या । किमर्थं ? भवाय चरणप्रणतजनाभिवृद्धये । तस्मादिदानीं अधर्मप्रवर्तकान् जरासुतादीन् निगृह्णन् देवावतारान् युधिष्ठिरादीन् अनुगृह्णन् कृष्णात्मनाऽत्रावतीर्णः[1] किलेत्यर्थः ॥ २६ ॥

प्रियश्रवाः मनोहरकीर्तिः । पुंसामृषभः पुरुषोत्तमः एषः कृष्णः । यदोः अतिश्लाघ्यं स्तुत्यम् । मधुवनञ्च अलं अत्यर्थं अतिशयेन पुण्यम् । अहो अहो आश्चर्यादाश्चर्यम् । चशब्दः समुच्चये ॥ २७ ॥

अनुग्रह इति तादर्थ्ये सप्तमी । भक्तानुग्रहार्थं क्षितं उषितं मुखे स्थितं यत् स्मितं तेन युक्तः अवलोको यस्य सः तथोक्तः तम् । 'क्षि निवासगत्यो'रिति धातुः । भक्तेष्वनुग्रहेण यदीक्षितं, गोप-

---

1 अत्रेति ङ पाठः । अन्यत्र नास्ति

नूनं व्रतस्नानहुतादिनेश्वरः समर्चितो ह्यस्य गृहीतपाणिभिः ।
पिबन्ति याः सख्यधरामृतं मुहुः व्रजस्त्रियः सम्मुमुहुर्यदाशया ॥ २९ ॥
या वीर्यशुल्केन हृताः स्वयंवरे प्रमथ्य चैद्यप्रमुखान्हि शुष्मिणः ।
प्रद्युम्नसाम्बप्रमुखात्मजाः परा याश्चाहृता भौमवधे सहस्रशः ॥ ३० ॥
एताः पुरा स्त्रीत्वमवाप्तये समं निरस्तशोकं बत साधु कुर्वते ।
यासां गृहात्पुष्करलोचनः पतिः न जात्वपैत्याकृतिभिः हृदि स्पृशन् ३१

---

वधूद्दिश्य यैः स्मितयुक्तोऽवलोकश्च[2] यस्य स तथोक्तः तं वा । स्वपतिं स्वस्वामिनं श्रीकृष्णं यत्प्रजाः यत्रत्याः प्रजाः नित्यं पश्यन्तीति यद्यस्मात् तस्मात् कुशस्थली द्वारवती स्वर्यशसः तिरस्करी स्वर्गकीर्तिनिरासिनी भुवः पुण्ययशस्करी चेत्यन्वयः । 'तदैक्षते'ति ईक्षणव्यपदेशात् ईक्षितं इच्छा । भक्तानुग्रहेच्छया सहितौ स्मितावलोकौ[3] यस्य स तथा तमिति वा ॥ २८ ॥

अस्य श्रीकृष्णस्य पाणिना गृहीताः पाणयः यासां ताः तथा ताभिः अस्य भार्याभिः नूनं निश्चयेन व्रतस्नानादिना ईश्वरः पूर्वं सम्यगर्चितः सत्कृतः । तत्कुतः ? याः व्रजस्त्रियः यदाशया यस्य अधरामृतमाधुर्यस्य आस्वादनेच्छया सम्यक् मुमुहुः, हे सखि, तदधरामृतं मुहुः पिबन्ति स्त्रियः तस्मादित्येकान्वयः[4] । हे सखि, याः स्त्रियः अस्य अधरामृतं पिबन्ति अनेन गृहीतपाणिभिः ताभिः नूनं व्रतादिना ईश्वरः समर्चितः । यदाशया व्रजस्त्रियो मुमुहुः इति वान्वयः ॥ २९ ॥

ताः काः इति तत्राह— या इति । विशुष्मिणः विशिष्टबलान् चैद्यप्रमुखान् शिशुपालादीन् प्रमथ्य विलोड्य पराजित्य स्वयंवरे वीर्यमेव शुल्कं उत्कोचं तेन याः स्त्रियः हृताः आनीताः ताः । प्रद्युम्नश्च साम्बश्च तौ प्रमुखौ येषां ते तथा प्रद्युम्नसाम्बप्रमुखाः । ते आत्मजाः यासां ताः तथोक्ताः रुक्मिण्याद्याः . याश्च पराः अपराः सहस्रशः कर्षोर्वादिशतोत्तरषोडशसहस्रसंख्याः भौमवधे आहृताः ॥ ३० ॥

एताः पुरा अग्निपुत्रत्वे कृष्णभार्यात्वाय स्त्रीत्वं अवाप्तये आप्तुं समं संभूय साधु शोभनं तपआख्यं कुर्वते अकुर्वत । बत हर्षे । निरस्तशोकमिति क्रियाविशेषणत् । साधुविशेषणं वा ।

---

१ अयं ड पाठः । अन्यत्र य इति नास्ति ।

२ अत्र चकारः क कोशे लभ्यः । तेन बहुव्रीहिद्वयगर्भकर्मधारयाभिप्रायकत्वं सिद्धम् ।

३ सहितस्मितावलोकौ - ड । ४ अयं ड पाठः । अन्यत्र नास्ति ।

सूत उवाच —

एवंविधा गदन्तीनां स गिरः पुण्ययोषितां ।
निरीक्षणेनाभिनन्दन्सस्मितेन ययौ हरिः ॥ ३२ ॥

अजातशत्रुः पृतनां गोपीथाय मधुद्विषः ।
परेभ्यः शङ्कितः स्नेहात् प्रायुंक्त चतुरङ्गिणीम् ॥३३॥

अथ दूरागताञ्शौरिः कौरवान्विदुरान्वितान् ।
सन्निवर्त्य दृढं स्निग्धान्प्रायात्स्वनगरीं प्रियैः ॥३४॥

कुरुजाङ्गलपाञ्चालान् शूरसेनान् सयामुनान् ।
ब्रह्मावर्तं कुरुक्षेत्रं मत्स्यान्सारस्वतानथ ॥ ३५ ॥

मरुधन्वमतिक्रम्य सौवीराभीरसैन्धवान् ।
आनर्तान्भार्गवोपागाच्छ्रान्तवाहो मनाग्विभुः ॥३६॥

तत्र तत्र च तत्रत्यैर्हरिः प्रत्युद्यतार्हणः ।
सायं भेजे दिशं पश्चाद्गविष्ठो गां गतस्तदा ॥ ३७ ॥

---

कुतः ? पुष्करलोचनः पुण्डरीकाक्षः पतिः आकृतिभिः आकारैः चेष्टाविशेषैः हृदि स्पृशन् यासां गृहात् जातु कदाचिदपि नापैति यस्मात् तस्मादित्यन्वयः ॥ ३१ ॥

परेभ्यः शत्रुभ्यः । गोपीथाय रक्षणाय । चतुरङ्गिणीं हस्त्यश्वरथपादातवतीम् । पृतानां सेनां स्नेहात् स्नेहमात्रात् । तदानीं माहात्म्यज्ञानं नास्तीति भावः ॥ ३३ ॥

स्वनगरीं द्वारावतीम् । प्रियैः पुरुषैः सह ॥ ३४ ॥

हे भार्गव शौनक । कुरुजाङ्गलप्रभृत्येकादशदेशानतिक्रम्य मनाक् ईषत् श्रान्ताश्वः विभुः आनर्तान् स्वाधिकृतान् देशान् उपागादित्यन्वयः ॥ ३५ ॥ ३६ ॥

यदा हरिः सायं सन्ध्यासमये पश्चाद्दिशं पश्चिमां दिशं भेजे । कथंभूतः ? तत्र तत्र च स्वराष्ट्रे प्रतिपदं तत्रत्यैः जनैः प्रत्युद्यतार्हणः प्रदत्तप्राभृतधनः तदा गविष्ठः दिवि स्थितः आदित्यः गां समुद्रोदकं गतः अस्तंगत इत्यर्थः । 'असौ वा व गविष्ठोऽप्सुदेत्यप्स्वस्तमेती'ति श्रुतेः ॥ ३७ ॥

आनर्तान्स उपव्रज्य स्वृद्धाञ्जनपदान्स्वकान् ।
दध्मौ दरवरं तेषां विषादं शमयन्निव ॥ ३८ ॥
स उच्चकाशे धवलोदरो दरोऽप्युरुक्रमस्याधरशोणशोणिमा ।
दाध्मायमानः करकञ्जसम्पुटे यथाब्जषण्डे कलहंस उत्स्वनः ॥ ३९ ॥
तमुपश्रुत्य निनदं जगद्भवभयापहम् ।
प्रत्युद्ययुः प्रजाः सर्वाः भर्तृदर्शनलालसाः ॥ ४० ॥
नत्वोपनीतबलयो रवेर्दीपमिवादृताः ।
आत्मारामं पूर्णकामं निजलाभेन नित्यदा ॥ ४१ ॥
प्रीत्युत्फुल्लमुखाः प्रोचुर्हर्षगद्गदया गिरा ।
पितरं सर्वसुहृदमवितारमिवार्भकाः ॥ ४२ ॥

---

स कृष्णः स्वृद्धान् सुष्ठु सम्पन्नान् स्वकान् स्वकीयान् नाम्ना आनर्तान् उपगम्य दरवरं शङ्खश्रेष्ठं दध्मौ पूरयामास । तेषां विषादं अराजकभयं शमयन् परिहरन्निवेत्यन्वयः ॥ ३८ ॥

स दरः पाञ्चजन्याख्य उच्चकाशे । धवलं शुक्लं उदरं यस्य सः धवलोदरः । अपि धवलोदरोऽपि उरुक्रमस्य श्रीकृष्णस्य अधरोष्ठस्य शोणेन रागेण शोणिमा रक्तभावो यस्य सः तथोक्तः । दाध्मायमानः देध्मीयमानः पुनः पुनः पूर्यमाणः । करावेव कञ्जे करकञ्जे हस्तकमले तयोः सम्पुटे मध्ये, वर्तमान इति शेषः । करकञ्जसम्पुटे निधाय दाध्मायमाने इति वा । तत्र दृष्टान्तः अब्जषण्डे कमलवने स्थितः उत्स्वनः उच्चध्वनिः कलहंसः राजहंसः यथा तथेत्यन्वयः ॥ ३९ ॥

भर्तृदर्शनलालसाः श्रीकृष्णस्य दर्शनोत्सुकाः सर्वाः प्रजाः जगतः भवः संसारः तस्मात् भयं अपहन्तीति जगद्भवभयापहः तम् । जगद्भयभयापहं इति पाठे जगद्भयानां दैत्यानां सकाशात् यद्भयं तस्य नाशकः तम् । निनदं शङ्खध्वनिं श्रुत्वा तं कृष्णं प्रत्युद्ययुरित्यन्वयः ॥ ४० ॥

नित्यदा निजलाभेन स्वतोलब्धेन पूर्णकामं अत एव आत्मारामं आत्मन्येव आ समन्तात् रममाणं कृष्णं नत्वा हर्षेण गद्गदया स्खलन्त्या गिरा ताः प्रजाः प्रोचुरित्यन्वयः । कीदृश्यः ? प्रीत्योत्फुल्लं विकसितं मुखं यासां ताः तथोक्ताः । उपनीतः समर्पितः बलिः भागधेयः याभिः ताः तथा बलिः पूजासाधनं वा । कथमिव ? तेजःपुञ्जस्य रवेः दीपमिव आत्मारामस्य बलिं । ददतीति शेषः । आदृताः परमादरयुक्ताः । अर्भकाः बालाः पितरमिव । कथंभूतं हरिं ? अन्नादिदानेन पालकत्वात् पितरम् । सर्वस्मादामादेः सुहृदं अनिमित्तबन्धुम् । ज्ञानादिदानेन अवनकर्तृत्वात् अवितारम् ॥ ४१ ॥ ४२ ॥

---

१ अयं ङ पाठः । अन्यत्र नास्ति । किन्तु मूले दाध्मायमानेति प्रयोग आर्ष इति सूचयितुमयं पाठः आवश्यकः ।
२ अयं ङ पाठः । अन्यत्र नास्ति । ३ देध्मीयमानः -ङ ।

नताः स्म ते नाथ सदाङ्घ्रिपङ्कजं विरिञ्चवैरिञ्च्यसुरेन्द्रवन्दितम् ।
परायणं क्षेममिहेच्छतां परं न यत्र कालः प्रभवेत्परप्रभुः ॥ ४३ ॥
भवाय नस्त्वं भव विश्वभावन त्वमेव माताऽथ सुहृत्पतिः पिता ।
त्वं सद्गुरुर्नः परमश्च दैवतं यस्यानुवृत्त्या कृतिनो बभूविम ॥ ४४ ॥
अहो सनाथा भवता स्म यद्वयं त्रैविष्टपानामपि दूरदर्शनम् ।
प्रेमस्मितस्निग्धनिरीक्षणाननं पश्येम रूपं तव सर्वसौभगम् ॥ ४५ ॥
यर्ह्यम्बुजाक्षाञ्चति माधवो भवान्कुरून्मधून्वाऽथ सुहृद्दिदृक्षया ।
तत्राब्दकोटिप्रतिमः क्षणो भवेद्रविं विनाऽक्ष्णोरिव नस्तवाच्युत ॥४६॥

---

हे नाथ तव अङ्घ्रिपङ्कजं सदा नताः स्मेत्यन्वयः । कीदृशं? विरिञ्चवैरिञ्च्यसुरेन्द्रैः चतुर्मुखशङ्करदेवेन्द्रैः वन्दितम् । इह चेतनराशिमध्ये परं क्षेमं मोक्षं इच्छतां भक्तानां परायणं उत्तमाश्रयम् । परस्य हिरण्यगर्भस्य प्रभुः समर्थोऽपि जननमरणधर्मापादकोऽपि कालः यत्र पदारविन्दे भक्तानां न प्रभवेत् जरादिधर्मापादको न भवति । परेषां अभक्तानां प्रभुः कालः यत्र भक्तानां न प्रभवेत् । अतः तस्य अङ्घ्रिपङ्कजस्य न समर्थ इति किं वाच्यमिति वा ॥ ४३ ॥

हे विश्वभावन जगतः सत्तादिप्रद, त्वं नोऽस्माकं भवाय ज्ञानभक्त्यादिकल्याणाय भव । यस्य तवानुवृत्त्या सेवालक्षणेन अनुवर्तनेन कृतिनः सुकृतिनः बभूविम । स त्वं नः परमं दैवतं इष्टदेवता । नः सद्गुरुः निर्दोषगुरुस्थानीयश्च । त्वमेव माता अभीष्टदानेन । आत्मदा त्वयैव नासत्प्रयत्नेन सुहृत् । पिता पाता । पतिः स्वामी ॥ ४४ ॥

हे नाथ तव रूपं पश्येमेति यत् यस्मात् तस्माद्वयं भवता सनाथाः स्म नाथवन्तो भवाम । अहो अस्मद्भाग्यमित्यन्वयः । कथंभूतं रूपं? त्रैविष्टपानां इन्द्रादिदेवानामपि दूरतः चिरकालतः चीर्णतपःसम्पत्त्या दृश्यत इति दूरदर्शनम् । अनेन दर्शनसाधनसामग्र्येवाभिप्रेता न तु दर्शनाभावः । तैः प्रार्थितत्वेन तत्कार्यार्थमवतीर्णत्वात् । दर्शनतारतम्याभिप्रायो वा । प्रेम्णा स्मितं प्रेमस्मितं स्निग्धं निरीक्षणं मधुरावलोकनं ताभ्यां युक्तं आननं यस्मिन् तत्तथोक्तम् । सर्वं पूर्णं सौभगं सौन्दर्यं यस्मिन् तत्तथोक्तम् ॥ ४५ ॥

हे अम्बुजाक्ष! अथ यर्हि यदा माधवः श्रीवल्लभः भवान् मधुविषयेभ्यः सुहृदां पाण्डवानां दिदृक्षया दर्शनेच्छया कुरून् कुरुविषयान् प्रत्यञ्चति[1] । कुरुविषयेभ्यः मधून्वा अञ्चति गच्छति । हे

---

1 अयं च पाठः । अन्यत्र नास्ति ।

इति चोदीरिता वाचः प्रजानां भक्तवत्सलः ।
शृण्वानोऽनुग्रहं दृष्ट्या वितन्वन्प्राविशत्पुरीम् ॥ ४७ ॥
मधुभोजदशार्हार्हकुकुरान्धकवृष्णिभिः ।
आत्मतुल्यबलैर्गुप्तां नागैर्भोगवतीमिव ॥ ४८ ॥
सर्वर्तुसर्वविभवैः पुण्यवृक्षलताश्रमैः ।
उद्यानोपवनारामैर्वृतपद्माकरश्रियम् ॥ ४९ ॥
गोपुरद्वारमार्गेषु कृतकौतुकतोरणाम् ।
चित्रध्वजपताकाग्रैरन्तःप्रतिहतातपाम् ॥ ५० ॥
सम्मार्जितमहामार्गरथ्यापणकचत्वराम् ।

---

अच्युत तत्र तस्यां अवस्थायाम् । तवेति षष्ठी द्वितीयार्थे । त्वां विना कुरूणां मधूनाञ्च नोऽस्माकं यथा रविं विना अक्ष्णां तथैक क्षणकालः अब्दकोटिप्रतिमः वर्षकोटिसमानः स्यादित्येकान्वयः ॥४६॥

दृष्ट्या दर्शनेन । शृण्वानः शृण्वन् । चशब्दात् वन्दिमागधादीनां गिरः ॥ ४७ ॥

गुप्तां रक्षिताम् । भोगवती नाम नागानां पुरी । आत्मतुल्यबलैः परस्परं आत्मना तुल्यवीर्यैः । अधिकदृष्टान्तन्यायो वा ॥ ४८ ॥

वसन्तादिसर्वर्तुभिः सर्वविभवैः पूर्णपुष्पफलसम्पत्तिभिः । पुण्यवृक्षैः अश्वत्थादिभिः लताभिः न्यग्रोधवल्लीभिः । फलवल्लीभिर्वा । आश्रमैः उपवेशस्थानैः[1] । उद्यानैः प्रमदादिभिः सह राज्ञां क्रीडाभूमिभिः । उपवनैः नगरान्नातिदूरे आरोपितवृक्षसमुदायैः । आरामैः पुराद्बहिः स्वल्पोभयपार्श्वारोपितवृक्षसमुदायैः । एतैः सर्वर्तुसर्वविभवादिभिः वृता पद्माकराणां श्रीः शोभा यया सा तथोक्ता ताम् ॥ ४९ ॥

गोपुरेषु पुरद्वारेषु अन्यद्वारेषु मार्गेषु कृतानि कौतुकतोरणानि उत्सवतोरणानि यस्यां सा तथा ताम् । अन्तः प्रतिहतः निवारितः आतपः यस्यां सा तथा ताम् ॥ ५० ॥

सम्मार्जितानि विधूतावकराणि महामार्गरथ्यापणकचत्वराणि यस्यां सा तथा ताम् । महामार्गः राजमार्गः । रथ्या रथमार्गः । आपणकानि पण्यविक्रयस्थानानि । चत्वरं चतुष्पथम् । गन्धजलैः चन्दनादितोयैः सिक्तां प्रोक्षिताम् । क्रमुकफलपुष्पाक्षताङ्कुरैः उप्ताम् ॥ ५१ ॥

---

१ उपवेश - इ. ।

सिक्तां गन्धजलैरुप्तां फलपुष्पाक्षताङ्कुरैः ॥ ५१ ॥
द्वारि द्वारि गृहाणाञ्च दध्यक्षतफलेक्षुभिः ।
अलङ्कृतां पूर्णकुम्भैर्बलिभिर्धूपदीपकैः ॥ ५२ ॥
निशम्य कृष्णमायान्तं वसुदेवो महामनाः ।
अक्रूरश्चोग्रसेनश्च रामश्चाद्भुतविक्रमः ॥ ५३ ॥
प्रद्युम्नश्चारुदेष्णश्च साम्बो जाम्बवतीसुतः ।
प्रहर्षवेगोच्छ्वसितशयनासनभोजनाः ॥ ५४ ॥
वारणेन्द्रं पुरस्कृत्य ब्राह्मणैः ससुमङ्गलैः ।
शङ्खतूर्यनिनादेन ब्रह्मघोषेण चादृताः ।
प्रत्युज्जग्मू रथैर्हृष्टाः प्रणयागतसाध्वसाः ॥ ५५ ॥
वारमुख्याश्च शतशो यानैस्तद्दर्शनोत्सुकाः ।
चलत्कुण्डलनिर्भातकपोलवदनश्रियः ॥ ५६ ॥
नटनर्तकगन्धर्वाः सूतमागधवन्दिनः ।
गायन्ति चोत्तमश्लोकचरितान्यद्भुतानि च ॥ ५७ ॥

गृहाणां द्वारि द्वारि दध्यक्षतफलेक्षुभिः पूर्णकुम्भैः । बलिभिः पूजासाधनैः, धूपदीपकैः अलङ्कृतां एवंविधां पुरीं प्राविशदिति पूर्वेणान्वयः ॥ ५२ ॥

वसुदेवाक्रूरादयः आयान्तं कृष्णं निशम्य श्रुत्वा करधृतमौक्तिकपूर्णघटं वारणेन्द्रं पुरस्कृत्य पुरस्कृतैः ब्राह्मणैश्च सार्धं रथैः साधनैः प्रत्युज्जग्मुरित्यन्वयः । किंविशिष्टाः? प्रहर्षवेगेन उच्छ्वसितानि सहसा परित्यक्तानि शयनासनभोजनानि यैस्ते तथा । तूर्यं काहलम् । ब्रह्मघोषः वेदध्वनिः । मय्यासक्तेऽपि मां नाभिजग्मुरिति[२] हार्दो भावः साध्वसम् । प्रणयेनागतं साध्वसं येषां ते तथा । वारमुख्याः नर्तकीषु गणिकासु श्रेष्ठाः तस्य कृष्णस्य दर्शनोत्कण्ठावत्यः चलद्भिः कुण्डलैः निर्भातानि विद्योतितानि कपोलानि येषां तानि तथोक्तानि चलत्कुण्डलनिर्भातकपोलानि च तानि वदनानि च चलत्कुण्डलनिर्भातकपोलवदनानि । तेषां श्रीः यासां ताः तथोक्ताः ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥

अभिनयेन शृङ्गाराद्यनुकरणकर्ता नटः । गीतवाद्यानुसारेण नर्तनकर्ता नर्तकः । षड्जादिकुशलाः गन्धर्वाः । पुराणाद्यर्थानुसारेण स्तावकाः सूताः । पराक्रमाङ्कितस्तुतिकर्तारो मागधाः । मङ्गलपाठकाः वन्दिनः ॥ ५७ ॥

१ अयं ङ पाठः । अन्यत्र-वेदघोषः । २ एतदनन्तरं 'कृष्णः कुप्येदिति' इति वाक्यं प्रदिष्टं चकास्ति ।

भगवांस्तत्र बन्धूनां पौराणामनुवर्तिनाम् ।
यथाविध्युपसङ्गम्य सर्वेषां मानमादधे ॥ ५८ ॥
प्रह्वाभिवादनाश्लेषकरस्पर्शस्मितेक्षणैः ।
आ श्वभ्य आ श्वपाकेभ्यः वरैश्चाभिमतैर्विभुः ॥ ५९ ॥
स्वयञ्च गुरुभिर्विप्रैस्सदारैः स्थविरैरपि ।
आशीर्भिर्युज्यमानोऽन्यैर्बन्दिभिश्चाविशत्पुरम् ॥ ६० ॥
राजमार्गं गते कृष्णे द्वारकायाः कुलस्त्रियः ।
हर्म्याण्यारुरुहुर्विप्र तदीक्षणमहोत्सवाः ॥ ६१ ॥
नित्यं निरीक्षमाणानां यदपि द्वारकौकसाम् ।
न वितृप्यन्ति हि दृशः श्रियो धामाङ्गमच्युतम् ॥ ६२ ॥
श्रियो निवासो यस्योरः पानपात्रं मुखं दृशाम् ।
बाहवो लोकपालानां सारङ्गाणां पदाम्बुजम् ॥ ६३ ॥

---

तत्र तेषु वसुदेवादिष्वागतेषु सत्सु श्रीकृष्णो भगवान् सर्वेषां बन्ध्वादीनां यथाविधि उपसङ्गम्य मानं आदधे चकारेत्यन्वयः ॥ ५८ ॥

प्रह्वैः । प्रह्वादिभिः ॥ ५९ ॥ ६० ॥

हर्म्याणि सौधानि । तदीक्षणं तस्य कृष्णस्य दर्शनमेव महोत्सवो यासां ताः तथोक्ताः ॥ ६१ ॥ दृष्टचरस्य तस्य अदृष्टपूर्ववद्दर्शने किमित्युत्कण्ठातिशयः इति तत्राह– नित्यमिति । श्रियः धाम स्थानं अङ्गं वपुः यस्य सः तथा तं अच्युतं नित्यं निरीक्षमाणानां द्वारकानिवासिनामपि दृशः न वितृप्यन्ति पुनः पुनः दृष्ट्वाऽपि अलं दर्शनेनेति भावं न प्राप्नुवन्ति यस्मात् तस्मात् युक्तः उत्कण्ठातिशयो हीत्यन्वयः ॥ ६२ ॥

नैतदाश्चर्यमित्याह– श्रिय इति । यस्य हरेः उरः वक्षस्थलं श्रियः लक्ष्म्याः निवासस्थानम् । यस्य मुखं दृशां लावण्यं पातुं पानपात्रम् । यस्य बाहवः लोकपालानां बलस्थानम् । यस्य पदाम्बुजं सारङ्गाणां सारग्राहिणां ब्रह्मादीनां परायणम् ॥ ६३ ॥

सितातपत्रव्यजनैरुपस्कृतः प्रसूनवर्षैरभिवर्षितः पथि ।
पिशङ्गवासा वनमालया बभौ घनो यथार्कोडुपचापवैद्युतैः ॥ ६४ ॥
प्रविष्टस्तु गृहं पित्रोः परिष्वक्तः स्वमातृभिः ।
ववन्दे शिरसा सप्त देवकीप्रमुखा मुदा ॥ ६५ ॥
ताः पुत्रमङ्कमारोप्य स्नेहस्नुतपयोधराः ।
हर्षविह्वलितात्मानः सिषिचुर्नेत्रजैर्जलैः ॥ ६६ ॥
अथाविशत्स्वभवनं सर्वकाममनुत्तमम् ।
प्रासादा यत्र पत्नीनां सहस्राणि च षोडश ।
शतमष्टोत्तरं चैव वज्रवैडूर्यमण्डिताः ॥ ६७ ॥
पत्न्यः पतिं प्रोष्य गृहानुपागतं विलोक्य सञ्जातमनोमहोत्सवाः ।
उत्तस्थुरारात्सहसाऽऽसनाश्रयात् साकम्पितव्रीडितलोचनाननाः ॥६८॥

---

सितातपत्रव्यजनादिभिरलङ्कृतो भगवान् तथा बभौ यथा अर्कादिभिरन्वितो मेघो भातीत्यन्वयः । अत्रायं विभागः — मध्याह्नार्कस्थानीयं श्वेतच्छत्रम् । उडुपस्थानीयं व्यजनम् । इन्द्रचापस्थानीयं पीतवस्त्रम् । विद्युत्स्थानीया माला । मेघस्थानीयो भगवान् । अर्कस्थानीयं किरीटम् । उडुपस्थानीयं श्वेतच्छत्रम् । मन्दारादिप्रसूनमाला इन्द्रचापस्थानीया । विद्युत्स्थानीयं व्यजनमिति वा ॥ ६४ ॥

पित्रोः मातापित्रोः । स्वमातृभिः देवक्यादिभिः । परिष्वक्तः आश्लिष्टः ॥ ६५ ॥

ताः मातरः पुन्नाम्नो नरकात् त्रायत इति पुत्रः कृष्णः तं सिषिचुः अभ्यषिञ्चन् । 'षिच सेके' । हर्षेण विह्वलीकृतः विवशीकृतः आत्मा अन्तःकरणं यासां ताः तथोक्ताः ॥ ६६ ॥

यत्र यस्मिन् भवने वज्रवैडूर्यमणिमण्डिताः षोडशसहस्राणि पुनरष्टोत्तरशतं पत्नीनां प्रासादाः सन्ति तदनुत्तमं सर्वकामं स्वभवनमाविशदित्येकान्वयः । काम्यन्त इति कामाः इच्छाविषयाः ते सर्वे यत्र सन्ति तत्तथोक्तम् ॥ ६७ ॥

पत्न्यः आरात् दूरादेव विलोक्य सञ्जातः मनसि महोत्सवो यासां ताः तथोक्ताः । सहसा झटिति उत्तस्थुरित्यन्वयः । कथंभूतं ? प्रोष्य प्रवासं कृत्वा गृहानुपागतम् । कीदृश्यः पत्न्यः ? साकम्पिताश्च व्रीडितलोचनाननाश्च साकम्पितव्रीडितलोचनाननाः । सहितमाकम्पितं याभिस्ताः तथा । व्रीडितानि लोचनानि आननानि च यासां ताः तथा ॥ ६८ ॥

तमात्मजैर्दृष्टिभिरन्तरात्मना दुरन्तभावाः परिरेभिरे पतिम् ।
निरुद्धमप्यस्रवदम्बु नेत्रयोः विलज्जतीनां भृगुवर्य वैक्लवात् ॥ ६९ ॥
यद्यप्यसौ पार्श्वगतो रहोगतस्तासां तथाप्यङ्घ्रियुगं नवं नवम् ।
पदे पदे का विरमेत तत्पदाच्चलापि यं श्रीर्न जहाति कर्हिचित् ॥ ७० ॥
एवं नृपाणां क्षितिभारजन्मनामक्षौहिणीभिः परिवृत्ततेजसाम् ।
विधाय वैरं श्वसनो यथानलं मिथो वधेनोपरतो निरायुधः ॥ ७१ ॥
स एष नरलोकेऽस्मिन्नवतीर्णः स्वमायया ।
रेमे स्त्रीरत्नकूटस्थः भगवान्प्राकृतो यथा ॥ ७२ ॥
उद्दामभावपिशुनामलवल्गुहासव्रीडावलोकनिहतो मदनोऽपि यासाम् ।
सम्मुह्य चापमजहात् प्रमदोत्तमास्ता यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः ॥

---

दुरन्तभावाः वेलातीतस्नेहाः । अनन्तशृङ्गारा वा । अन्यैरज्ञाताभिप्राया वा । दृष्टिभि आत्मजैः अन्तरात्मना मनसा च तं पतिं परिरेभिरे । वैक्लवात्पारवश्याद्विलज्जतीनां तासां नेत्रयोः निरुद्धमप्यम्बु अस्रवदित्येकान्वयः ॥ ६९ ॥

नैतत्तासां स्नेहकातर्यं चित्रमित्याह--यदीति । यद्यप्यसौ कृष्णः रहोगतः एकान्तगतः । सदा तासां पार्श्वगतः समीपस्थः । तथापि अनुपदं तासां तस्य अङ्घ्रियुगं नवं नवं नूतनान्नूतनम् । तथाहि का स्त्री तस्य पदकमलात् अलमिति विरमेत विरामं कुर्यात् ? अन्यत्र चञ्चलविभवप्रदाऽपि श्रीः यं भगवन्तं कर्हिचित् न जहातीत्येकान्वयः ॥ ७० ॥

वायुर्यथा वनदहनाय वेणूनां मिथः सङ्घट्टनेन अग्निमुत्पादयति तथा अक्षौहिणीभिः क्षितिभार-जन्मनां भूमेर्भारभूतं जन्म येषां ते तथोक्ताः तेषां परिवृत्तं परिवृद्धं तेजः येषां ते तथोक्ताः तेषां असुराणां विनाशाय कुरुपाण्डवपक्षपातिनां नृपाणां मिथो वैरं विधाय, स्वयं निरायुधः परस्परवधेन विनाशं विधाय च उपरतः उदास्ते इत्यन्वयः ॥ ७१ ॥

स्वमायया स्वेच्छया । प्राकृतः स्त्रीजितः । स्त्रीरत्नकूटस्थः स्त्रीश्रेष्ठसमूहस्थः ॥ ७२ ॥

स्त्रीश्रेष्ठसमूहस्थः[1] स्त्रीजिताननुकरोत्येव । परं न स्वयं स्त्रीजित इत्याह-- उद्दामेति । यासामुद्दामभावस्य उत्कृष्टशृङ्गारचेष्टितस्य पिशुनः सूचकः अमलः निर्व्यलीकः वल्गुः कोमलः हासः स्मितम् । व्रीडया अवलोकः कटाक्षवीक्षणम् । उद्दामभावपिशुनामलवल्गुहासेन व्रीडावलोकनेन

---

१ प्रवृद्धं ख । २ समुद्गतः ङ ।

मन्यते तन्मयं लोको ह्यसङ्गमपि सङ्गिनम् ।
आत्मौपम्येन मनुजं प्रावृण्वानमतोऽबुधः ॥ ७४ ॥
यत्तदीशनमीशस्य प्रकृतिस्थोऽपि तद्गुणैः ।
न युज्यते सदात्मस्थैर्यथा बुद्धिस्तदाश्रया ॥ ७५ ॥
तं मेनिरे खला मूढास्त्रैणश्चानुव्रतं हरेः ।
अप्रमाणविदो भर्तुरीश्वरं मतयो यथा ॥ ७६ ॥

---

न विहतः ताडितः मदनोऽपि मन्मुखः पुष्पाख्यं चापं अजहात् मुक्तवान् ताः प्रमदोत्तमाः कुहकैः उद्दामभावादिभिः यस्य श्रीकृष्णस्य इन्द्रियं प्रमथितुं प्रमथ्य वशीकर्तुं न शेकुः । तस्य कुतः स्त्रीजित-त्वमित्यन्वयः ॥ ७३ ॥

तस्य स्त्रीजितत्वपरिवादोऽज्ञसम्मत्येत्याह– मन्यत इति । अज्ञलोकः स्वसुखानुभवेनैव आप्तकामतया स्त्रीष्वसक्तमपि आत्मौपम्येन आत्मानं दृष्टान्तीकृत्य स्त्रीसङ्गिनं तन्मयं स्त्रीमयं मन्यते हि यस्मात् तस्मादयं जनः अबुधः अज्ञः । कथंभूतं मनुजं? प्रावृण्वानं आच्छादयन्तम् ॥ ७४ ॥

तर्हि ज्ञानिप्रवादः कीदृश इति तत्राह– यत्तदिति । प्रकृतिस्थोऽपि सदा आत्मस्थैः स्वाधारैः तद्गुणैः प्रकृतिगुणैः सत्वादिभिः शब्दादिभिश्च न युज्यते न सम्बध्यत इति यत् तत् ईशस्य ईशनं ईश्वरत्वम् । तत्र व्यत्यासदृष्टान्तमाह– यथेति । यथा प्रकृतिस्थानां ज्ञानिनां तदाश्रया तस्य कृष्णस्य आश्रया बुद्धिः प्रकृतिगुणैः न सम्बध्यते । किन्तु तस्य प्रकृतिगुणसम्बन्धो नेत्यतोऽबुधजनप्रवाद इति भावः ॥ ॥ ७५ ॥

तथाविदोऽसुरा इति सोदाहरणमाह– तमिति । खलाः इन्द्रियारामाः मूढाः शास्त्रार्थाविदः तान्-स्राव(?)प्रकृतयः अतएव हरेः अप्रमाणविदः अनन्तगुणत्वादिप्रमाणाविदः तं कृष्णं भृत्यवदनुगतं स्त्रैणं स्त्रीजितं मेनिरे । वैशेषिकादिवादिनां मतयो यथेश्वरं यथामति मेनिरे तथा । तस्मान्न तस्यासक्तानस्य स्त्रीजितत्वमिति भावः ॥ ७६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
प्रथमस्कन्धे दशमोऽध्यायः ॥

## ॥ अथ एकादशोऽध्यायः ॥

शौनक उवाच —

> अश्वत्थाम्ना विसृष्टेन ब्रह्मशीर्ष्णोरुतेजसा ।
> उत्तराया हतो गर्भ ईशेनोज्जीवितः पुनः ॥ १ ॥
>
> तस्य-जन्म महाबुद्धेः कर्माणि च गृणीहि नः ।
> निधनञ्च यथैवासीत्स प्रेत्य गतवान्यथा ॥ २ ॥
>
> तदिदं श्रोतुमिच्छामि वक्तुं वा यदि मन्यसे ।
> ब्रूहि नः श्रद्दधानानां यस्य ज्ञानमदाच्छुकः ॥ ३ ॥

सूत उवाच —

> अपीपलद्धर्मराजः पितृवद्रञ्जयन्प्रजाः ।
> निस्पृहः सर्वकामेभ्यः कृष्णपादानुसेवया ॥ ४ ॥

---

वैराग्यप्रकारः हरेर्भक्तानुकम्पित्वञ्चास्मिन्नध्याये प्रतिपाद्यते । तत्र 'उत्तरेभेऽभिधावन्तीमुत्तरामि' त्यादिश्रुतानुवादपूर्वकं परीक्षिज्जन्मादिप्रवृत्तिं पृच्छति शौनक इत्याह - अश्वत्थाम्नेत्यादिना । उरुतेजसा अश्वत्थाम्ना विसृष्टेन ब्रह्मास्त्रेण उत्तरायाः हतो गर्भः पुनरीशेनोज्जीवित[1] इत्येकान्वयः ॥१॥

निधनं मरणम् । यथा कथम् । प्रेत्य मृत्वा । गतवान् । कं लोकमिति शेषः ॥ २ ॥

'वक्तुं वा यदि मन्यस' इत्यनेन वक्तव्यस्यातिगोप्यत्वं सूचयति ॥ ३ ॥

अपीपलत् अरक्षत् । 'निस्पृहः सर्वकामेभ्य' इत्यनेन कृष्णपादसेवायाः अतिस्वादुत्वं दर्शितम् । कामानां तिक्तत्वञ्च ॥ ४ ॥

---

1 एतदनन्तरं 'इति त्वयोक्तमिति शेष' इत्यधिकपाठः - घ ।

सम्पदः क्रतवो विप्रा महिषी भ्रातरो मही ।
जम्बुद्वीपाधिपत्यञ्च यशश्च त्रिदिवं गतम् ॥ ५ ॥

किन्ते कामातुरस्यार्थाः मुकुन्दमनसो द्विजाः ।
नाधिजह्रुर्मुदं राज्ञः क्षुधितस्य यथेतरे ॥ ६ ॥

मातुर्गर्भगतो वीरः स तदा भृगुनन्दन ।
ददर्श पुरुषं कञ्चिद्दह्यमानोऽस्त्रतेजसा ॥ ७ ॥

अङ्गुष्ठमात्रममलं स्फुरत्पुरटमौलिनम् ।
आपीच्यदर्शनं श्यामं तडिद्वाससमच्युतम् ॥ ८ ॥

श्रीमद्दीर्घचतुर्बाहुं तप्तकाञ्चनकुण्डलम् ।
क्षतजाक्षं गदापाणिमात्मनः सर्वतोदिशम् ॥ ९ ॥

परिभ्रमन्तमुल्काभां भ्रामयन्तं गदां मुहुः ।
अस्त्रतेजः स्वगदया नीहारमिव गोपतिः ।
विधमन्तं सन्निकर्षे पर्यैक्षत क इत्यसौ ॥ १० ॥

---

एतदेव स्पष्टमाह– सम्पद इति ॥ ५ ॥

कामातुरस्य अर्थाः विषयाः विषयविरक्तस्य मुकुन्दमनसः युधिष्ठिरस्य अर्थाः किं ? पुरुषार्थत्वेन नार्थ्याः[1] । कुत इति तत्राह– नेति । यथा क्षुधितस्य इतरे वीणादयः न तृप्तिं कुर्वन्ति । तथा अन्ते दुःखहेतुत्वात् ते मुदं नाकुर्वन्नित्यर्थः । अनेन विषयवैराग्यातिशये मोक्षसुखातिशयो[2] दर्शितः ॥ ६ ॥

कंचित् लोकविलक्षणम् ॥ ७ ॥

स्फुरत्पुरटमौलिनं देदीप्यमानस्वर्णमुकुटम् । आपिच्यदर्शनं आपोडशवर्षवद् दृश्यमानम् । मेघश्यामम् ॥ ८ ॥

क्षतजवत् रुधिरवत् अरुणे अक्षिणी यस्य सः तथा तम् । आत्मनः स्वस्य सर्वतोदिशं पूर्वादिदिक्षु परिभ्रमन्तं परितो वर्तमानम् । उल्काभां गगनात्पतत्तारकाविशेषसदृशीम् । गोपतिः सूर्यः । नीहारं हिमम् । विधमन्तं शमयन्तम् । पुनः सन्निकर्षे समीपे दृष्ट्वा कोऽयं पुरुष इति पर्यैक्षत आलोचनमकरोत् ॥९॥१०॥

---

१ नार्थ्याः - क ग घ ङ ज ठ ।   २ वैराग्यातिशयो मोक्षे सुखातिशयो - क । वैराग्यातिशयात् मोक्ष-सुखातिशयो - ख ज । वैराग्यातिशयो मोक्षातिशयः सुखातिशयो - कोशान्तरेषु सर्वत्र पाठः ।

विभूय तदमेयात्मा भगवान् धर्मगुब्विभुः ।
मिषतो दशमास्यस्य तत्रैवान्तर्दधे हरिः ॥ ११ ॥

ततः सर्वगुणोदर्के सानुकूलग्रहोदये ।
जज्ञे वंशधरः पाण्डोर्भूयः पाण्डुरिवौजसा ॥ १२ ॥

तस्य प्रीतमना राजा विप्रैर्धौम्यकृपादिभिः ।
जातकं कारयामास वाचयित्वा च मङ्गलम् ॥ १३ ॥

हिरण्यं गां महीं ग्रामान्हस्त्यश्वान्नृपतिर्वरान् ।
प्रादात्स्वन्नञ्च विप्रेभ्यः प्रजातीर्थे स तीर्थवित् ॥ १४ ॥

---

धर्मं गोपायति रक्षतीति धर्मगुप् । अमेयात्मा अनन्तरूपः दशमास्यस्य दशमासभवस्य[1] कुमारस्य पश्यतः सत इति शेषः । विभुः समर्थः । हरिः सर्वपापहरणशीलः[2] । भगवान् षड्गुणोपेतः ॥११॥

ततः हरेः अदर्शनानन्तरम् । सर्वगुणोदर्के सकलगुणोत्तरफले । सानुकूलाः ये ग्रहाः तेषामुदयः अस्मिन् सः तथोक्तः तस्मिन् काले पाण्डोः वंशधरः सन्तानानुच्छेदकर्ता ओजसा भूयः पुनरुत्पन्नः पाण्डुरिव स्थितः ॥ १२ ॥

जातकं जातकर्म । मङ्गलं पुण्याहम् ॥ १३ ॥

तीर्थं शास्त्रं पात्रं वा वेत्तीति तीर्थवित् । प्रजातीर्थे पुत्राख्यशुद्धजले पुत्रजन्मशुद्धकाले वा । सतीर्थविदित्येकं वा पदम् । सतीर्थज्ञ[3] इत्यर्थः ॥ १४ ॥

---

१ अयं पाठः ख ग छ कोशगतः । मूलकोशे क कोशे च - दशमासारम्भस्य । दशममासे भवस्य - घ ।

२ अयं पाठः ङ कोशस्थः । मूलकोशेऽन्यत्र च - पापाकर्षणशीलः ।

३ सतीर्थाः शास्त्रज्ञाः । त एव सत्पात्राणीति जानातीत्यर्थः ।

तमूचुर्ब्राह्मणास्तुष्टा राजानं प्रश्रयानतम् ।
एष ह्यस्मिन्प्रजातन्तौ कुरूणां पौरवर्षभ ॥ १५ ॥

दैवेनाप्रतिघातेन कुले संस्थामुपेयुषि ।
रातो वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना ॥ १६ ॥

तस्मान्नाम्ना विष्णुरात इति लोके बृहच्छ्रवाः ।
भविष्यति न सन्देहो महाभागवतो महान् ॥ १७ ॥

राजोवाच —

अप्येष वंश्यान्राजर्षीन्पुण्यश्लोकान्महात्मनः ।
अनुवर्तिता स्विद्यशसा साधुवादेन सत्तमाः ॥ १८ ॥

ब्राह्मणा ऊचुः —

पार्थ प्रजाविता साक्षादिक्ष्वाकुरिव मानवः ।
ब्रह्मण्यः सत्यसन्धश्च रामो दाशरथिर्यथा ॥ १९ ॥

एष धाता[1] शरण्यश्च यथा ह्यौशीनरः शिबिः ।
यशो वितनिता स्वानां दौष्यन्तिरिव यज्वनाम् ॥ २० ॥

---

प्रश्रयानतं प्रावण्यगुणावनतम् । कुरूणां कुलवंशजातानाम् । अस्मिन् कुले प्रजातन्तौ पुत्राख्यसन्ताने संस्थां विनाशं उपेयुषि गच्छति सति वः युष्माकं अनुग्रहाख्यप्रयोजनाय प्रभविष्णुना विष्णुना रातो दत्त इति यस्मात् तस्मात् लोके विष्णुरात इति बृहच्छ्रवाः विख्यातयशाः भविष्यति ॥ १५ ॥ ॥ १६ ॥ १७ ॥

ब्राह्मणवचनानन्तरं युधिष्ठिरस्तानप्राक्षीदित्याह– अपीति । हे सत्तमाः । अपिशब्दस्य स्विदित्यनेनान्वयः । साधुषु वादो यस्य तत् साधुवादम् । तेन । साधुरिति वादेन वा ॥ १८ ॥

हे पार्थ पृथायाः सुत युधिष्ठिर । मानवः मनुपुत्रः । प्रजानामविता । दाशरथिः दशरथपुत्रः । सत्यसन्धः सत्यप्रतिज्ञः ॥ १९ ॥

औशीनरः उशीनरपुत्रः । दौष्यन्तिः दुष्यन्तपुत्रः इव यज्वनां यशोविस्तारकर्ता यथा तथा अयमपि स्वानां स्ववंशजन्मनां यशो वितनिता ॥ २० ॥

---

१ दाता - क ख ।

धन्विनामग्रणीरेषः तुल्यश्चार्जुनयोर्द्वयोः ।
हुताश इव दुर्धर्षः समुद्र इव दुस्तरः ॥ २१ ॥

मृगेन्द्र इव विक्रान्तो निषेव्यो हिमवानिव ।
तितिक्षुर्वसुधेवासौ सहिष्णुः पितराविव ॥ २२ ॥

पितामहसमः साम्ये प्रसादे गिरिशोपमः ।
आश्रयः सर्वभूतानां यथा देवो रमाश्रयः ॥ २३ ॥

सर्वसद्गुणमाहात्म्य एष कृष्णमनुव्रतः ।
रन्तिदेव इवोदारो ययातिरिव धार्मिकः ॥ २४ ॥

धृत्यां बलिसमः कृष्णे प्रह्लाद इव सद्ग्रहः ।
आहर्तैषोऽश्वमेधानां वृद्धानां पर्युपासकः ॥ २५ ॥

राजर्षीणां जनयिता शास्ता चोत्पथगामिनाम् ।
निगृहीता कलेरेष भुवो धर्मस्य कारणात् ॥ २६ ॥

---

द्वयोरर्जुनयोः कार्तवीर्यपाण्डवयोः तुल्यः । दुर्धर्षः दुःसहः ॥ २१ ॥

तितिक्षुः क्षमावान् । पितरौ मातापितरौ सहिष्णुः सहनशीलः ॥ २२ ॥

साम्ये सामञ्जस्ये । पितामहस्य विरिञ्चस्य समः । प्रसन्नतायां शिवसमः । रमायाः आश्रयः पतिः ॥ २३ ॥

सर्वैः सतां गुणैः माहात्म्यं महात्मत्वं यस्य स तथोक्तः । अथवा-सर्वसद्गुणमाहात्म्यविषये कृष्णं यादवेन्द्रं अनुगतः तथाभूतः । कृष्णमर्जुनं वा ॥ २४ ॥

धृत्यां धैर्ये । गृह्णातीति ग्रहो भक्तिः । सती भक्तिः यस्य स तथोक्तः । 'अन्युपदग्रहणात्तु न तथात्वम्' इति सूत्रात् ॥ २५ ॥

राजर्षीणां कुमाराणां जनयिता उत्पादकः । उत्पथगामिनां अशास्त्रविहितमार्गवर्तिनां शास्ता । धर्मस्य भगवतो[1] दुःखापादनकारणात् कलेः निग्रहीता निगृह्य शिक्षाकर्ता ॥ २६ ॥

---

१ भवतो - घ । अत्र कोशे टिप्पण्यपि यथा - द्यूतकाले अक्षकर्मेणेति ।

तक्षकादात्मनो मृत्युं द्विजपुत्रोपसर्जितात् ।
प्रपत्स्यत उपश्रुत्य मुक्तसङ्गः पदं हरेः ॥ २७ ॥

जिज्ञासितात्मयाथात्म्यो मुनेर्व्याससुतादसौ ।
हित्वेदं नृप गङ्गायां यास्यत्यद्धाऽकुतोभयम् ॥ २८ ॥

इति राज्ञ उपादिश्य विप्रा जातककोविदाः ।
लब्धापचितयः सर्वे प्रतिजग्मुः स्वकान्गृहान् ॥ २९ ॥

स एष लोके विख्यातः परीक्षिदिति यः प्रभुः ।
सर्पदृष्टिमनुध्यायन्परीक्षेत नरेष्विह ॥ ३० ॥

स राजपुत्रो ववृधे आशु शुक्ल इवोडुपः ।
आपूर्यमाणः पितृभिः काष्ठाभिरिव सोऽन्वहम् ॥ ३१ ॥

---

द्विजपुत्रोपसर्जितात्[1] द्विजकुमारप्रेरितात् तक्षकनागात् मुक्तसङ्गः पुत्रादिसङ्गरहितः ॥ २७ ॥

व्याससुतात् श्रीशुकात् मुनेः जिज्ञासितं विचारितं आत्मनः परमात्मनः यथास्वरूपसम्बन्धिगुणादिकं[2] येन स तथोक्तः । इदं शरीरं अद्धा समिचीनं अकुतोभयं स्वरूपानन्दाविर्भावलक्षणं मोक्षं यास्यतीत्यन्वयः ॥ २८ ॥

लब्धा प्राप्ता अपचितिः पूजा यैः ते तथोक्ताः ॥ २९ ॥

यः प्रभुः सर्पदृष्टिं तक्षकादृष्टसर्पदर्शनं[3] अनुध्यायन् निरन्तरं चिन्तयन् इह नरेषु समीपं[4] आगच्छत्सु परीक्षेतेति यस्मात् तस्मात् स एषः लोके परीक्षिदिति विख्यात इति परीक्षिन्नामनिरुक्तिरित्यन्वयः ॥ ३० ॥

उडुपश्चन्द्रः शुक्ले पक्षे काष्ठाभिः दिग्देवतान्तरस्थतेजोभिः अन्वहं यथा पूर्यते तथा स राजपुत्रोऽपि पितृभिः युधिष्ठिरादिभिः अन्वहं अन्नपानादिभिः पूर्यमाण ऐधतेत्यर्थः ॥ ३१ ॥

---

१ सर्पि - ख ग ङ ड ।

२ गुणगणादिकं - ख छ ज ठ । गुणाधिक्यं - क च । ३ सर्पदृष्टिं तक्षकादृष्टसर्पदर्शनं - क ग घ ङ छ ज ठ । एतेषु कोशेषु मूलश्लोकेऽपि सर्पदृष्टिमित्येव पाठः । ङकोशे मूलधृत एव पाठः ।

४ स्वसमीपम् - ङ ।

यक्ष्यमाणोऽश्वमेधेन ज्ञातिद्रोहजिहासया ।
राजलब्धधनो दध्यावन्यत्र करदण्डयोः ॥ ३२ ॥

तदभिप्रेतमालक्ष्य भ्रातरोऽच्युतनोदिताः ।
धनं प्रहीणमाजह्रुरुदीच्यां भूरिशो दिशः ॥ ३३ ॥

तेन सम्भृतसम्भारो लब्धकामो युधिष्ठिरः ।
वाजिमेधैस्त्रिभी[3] राजा यज्ञेशमयजद्धरिम् ॥ ३४ ॥

आहूतो भगवान् राज्ञा याजयित्वा द्विजैर्नृपम् ।
उवास कतिचिन्मासान्सुहृदः प्रियकाम्यया ॥ ३५ ॥

ततो राज्ञाऽभ्यनुज्ञातः कृष्णया सह बन्धुभिः ।
ययौ द्वारवतीं ब्रह्मन्सार्जुनो यदुभिर्वृतः ॥ ३६ ॥

॥ इति एकादशोऽध्यायः ॥

---

ज्ञातिद्रोहजिहासया[1] भीष्मादिवधनिमित्तपापहानेच्छया[2] । अश्वमेधयज्ञेन भगवन्तं यष्टुकामो राजा करदण्डयोरन्यत्र करं दण्डञ्च वर्जयित्वा, न लब्धं धनं येन सः अलब्धधनः दध्यावित्यन्वयः ॥ ३२ ॥

उदीच्याः उत्तरस्याः दिशः भूरिशः बहुलं प्रहीणं यज्ञशिष्टम् । मरुत्तेन पूर्वजेन स्थापितं धनम् ॥ ३३ ॥

तेन द्रव्येण सम्भृतः सम्पन्नः सम्भारो यज्ञसाधनं येन सः तथोक्तः ॥ ३४ ॥

सुहृदः युधिष्ठिरस्य । प्रियेच्छया ॥ ३५ ॥

बन्धुभिः सह कृष्णया द्रौपद्या च अभ्यनुज्ञातः सार्जुनः अर्जुनेन सहितः । यदुभिश्च परिवृतः श्रीकृष्णः द्वारवतीं ययावित्यन्वयः ॥ ३६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
प्रथमस्कन्धे एकादशोऽध्यायः ॥

---

१ जिघांसया - ग । २ अयं खण्ठः । अन्यत्र - पापहननेच्छया ।
३ वाजिमेधैस्त्रिभिर्भीतो यज्ञैः समयजद्धरिम् - क घ छ ज ठ ।

## ॥ अथ द्वादशोऽध्यायः ॥

सूत उवाच —

विदुरस्तीर्थयात्रायां मैत्रेयादात्मनो गतिम् ।
ज्ञात्वाऽऽगाद्धास्तिनपुरं तयावाप्तविविित्सितः ॥ १ ॥

यावतः कृतवान्प्रश्नान्क्षत्ता कौषारवाग्रतः ।
जातैकभक्तिर्गोविन्दे तेभ्यश्चोपरराम ह ॥ २ ॥

तं बन्धुमागतं दृष्ट्वा धर्मपुत्रः सहानुजः ।
धृतराष्ट्रो युयुत्सुश्च सूतः शारद्वतः पृथा ॥ ३ ॥

---

विषयरागः संसाराय; तदभावो विमुक्तये इत्यतो मुमुक्षुणा वैराग्यं स्वतो वा परतो वा सम्पादनीयमिति अयमर्थः प्रतिपाद्यतेऽस्मिन्नध्याये । तत्र शुद्धान्तःकरणस्यैव विषयविरागः सुदृढ इति स च कर्मणा तीर्थसेवया वा स्यात् इत्यभिप्रेत्य विदुरस्य तीर्थसेवां कृत्वा युधिष्ठिरादिबन्धुदिदृक्षया हस्तिनपुरागतिमाह— विदुर इति । विदुरो हस्तिनपुरमागादित्यन्वयः । किं कृत्वा? तीर्थयात्रायां कृष्णादिष्टात् मैत्रेयादात्मनः परमात्मनः गतिं,[2] गम्यते अवगम्यते अनयेति गतिः विद्या तां ज्ञात्वा । आत्मनो जीवस्य गतिं स्वर्गनरकादिविषयामिति वा । तया परमात्मविद्यया अवाप्तं विविित्सितं ज्ञातुमिष्टं येन स तथोक्तः ॥ १ ॥

नापृष्टः कस्यचिद् ब्रूयादिति वचनात् प्रश्नप्रतिवचनाभ्यां तत्त्वमवगम्यालम्बुद्धिरभूदित्याह— यावत इति । क्षत्ता विदुरः । कुषारवस्यापत्यस्य मैत्रेयस्याग्रतः यावतः प्रश्नान् कृतवान् तेभ्यः प्रश्नेभ्यः मैत्रेयेण परिहृतेभ्यः उपरराम ज्ञातत्वादलंबुद्धिमानभूत् । हशब्दः तृप्तिसूचकः । चशब्द एवार्थे । तत्त्वज्ञानफलमाह— जातेति । तत्त्वज्ञानात् अतिशयेन जाता एका प्रधाना भक्तिर्यस्य सः तथोक्तः । कुत्र ? गोविन्दे श्रीकृष्णे । अनेन भक्तिज्ञानयोरन्योन्यहेतुत्वमसूचि ॥ २ ॥

सूतः सञ्जयः । शारद्वतः कृपः ॥ ३ ॥

---

१ हास्तिन - क छ ङ । २ हास्तिन - क !

३ एतदनन्तरं ज्ञानमित्यधिकः पाठः कोशान्तरेषु सर्वत्र, ङ इकोशौ विहाय ।

गान्धारी द्रौपदी ब्रह्मन्सुभद्रा चोत्तरा कृपी ।
अन्याश्च जामयः पाण्डोर्ज्ञातयः ससुताः स्त्रियः ॥ ४ ॥

प्रत्युज्जग्मुः प्रहर्षेण प्राणांस्तन्व इवागतान् ।
अभिसङ्गम्य विधिवत्परिष्वङ्गाभिवन्दनैः[1] ॥ ५ ॥

मुमुचुः प्रेमबाष्पौघं मिथ औत्कण्ठ्यकातराः ।
राजा तमर्हयाञ्चक्रे कृतासनपरिग्रहम् ॥ ६ ॥

तं भुक्तवन्तमासीनं विश्रान्तं सुखमासने ।
प्रश्रयावनतो राजा प्राह तेषाञ्च शृण्वताम् ॥ ७ ॥

युधिष्ठिर उवाच —

अपि स्मरथ नो युष्मत्पक्षच्छाया समेधितान् ।
विपद्गणाद्विषाग्न्यादेर्मोचिता यत्समातृकाः ॥ ८ ॥

कया वृत्त्या वर्तितं वै चरद्भिः क्षितिमण्डलम्[2] ।
तीर्थानि क्षेत्रमुख्यानि सेवितानीह भूतले ॥ ९ ॥

---

अन्याः पाण्डोर्जामयः पुत्रभार्याः । अन्याश्च अप्रसिद्धनामानः । जामयः स्वसारो वा ॥ ४ ॥

आगतान् प्राणान् दृष्ट्वा तन्वः भोगायतनानि शरीराणीव । 'तत्प्राणे प्रपन्न उदतिष्ठत्' इति श्रुतेः ॥ ५ ॥

मिथः प्रेमबाष्पौघं प्रेमनिमित्तनेत्रजलप्रवाहम् । अर्हयाञ्चक्रे पूजयामास । औत्कण्ठ्यकातराः औत्कण्ठ्येन परवशाः । कृतः आसनस्य पीठस्य परिग्रहः स्वीकारः येन सः तथोक्तः तम् ॥ ६ ॥

स्वकीयानाञ्च शृण्वतां सताम् ॥ ७ ॥

नः अस्मान् स्मरथ, यूयमिति शेषः । मात्रा सह वर्तमानाः समातृकाः । विषाग्न्यादेः विपद्गणात् मोचिताः यत् येन, तस्मादिति शेषः ॥ ८ ॥

एकभुक्तादिव्रतेन किमिति शेषः । इह भूतले क्षेत्रमुख्यानि क्षेत्रप्रधानानि तीर्थानि यानि तानि सर्वाणि च सेवितानीत्यन्वयः ॥ ९ ॥

---

1 अभिवादनैः - ग । अभिवन्दितैः - छ ।  2 क्षितिमण्डले - क ।

भवद्विधा भागवतास्तीर्थभूतास्स्वयं प्रभो ।
तीर्थीकुर्वन्ति तीर्थानि स्वात्मस्थेन गदाभृता ॥ १० ॥
अपि नः सुहृदस्तात बान्धवाः कृष्णदेवताः ।
दृष्टाः श्रुता वा यदवः स्वपुर्यां सुखमासते ॥ ११ ॥
इत्युक्तो धर्मराजेन सर्वं तत्समवर्णयत् ।
यथानुभूतं भ्रमता विना यदुकुलक्षयम् ॥ १२ ॥
तत्वप्रियं दुर्विषयं नृणां स्वयमुपस्थितम् ।
नावेदयत्सुकरुणो[2] दुःखितान्द्रष्टुमक्षमः ॥ १३ ॥
कश्चित्कालमथावासीत्सत्कृतो देववत्स्वकैः ।
भ्रातुर्ज्येष्ठस्य श्रेयस्कृत्सर्वेषां प्रीतिमावहन् ॥ १४ ॥
अबिभ्रदर्यमा दण्डं यथावमघकारिषु ।
यावद्दधार शूद्रत्वं शापाद्वर्षशतं यमः ॥ १५ ॥

---

हे प्रभो स्वात्मस्थेन स्वहृदयस्थेन गदाभृता हरिणा तीर्थभूताः भवादृशाः भागवताः गङ्गादि तीर्थानि तीर्थीकुर्वन्ति । न स्वयं आत्मशुद्ध्यपेक्षया तीर्थानि गच्छन्तीति शेषः ॥ १० ॥

कृष्णः दैवतं येषां ते तथोक्ताः ॥ ११ ॥

भ्रमता परिवर्तमानेन । क्षितितलमिति शेषः । स्वेन यथानुभूतं तथा तत्सर्वमवर्णयत् । किन्तु यदुकुलक्षयं विना । तीर्थयात्रायां यमुनायां[1] भगवदाज्ञया बदरीं गच्छन्तं उद्धवं दृष्ट्वा तस्मात् विप्रशापाद्धेतोः षट्त्रिंशद्वर्षादुपरि नाशमेष्यद्यदुकुलं श्रुत्वा तन्नावर्णयदिति भावः ॥ १२ ॥

तत्किमिति नावर्णयदिति तत्राह– तत्वेति ॥ १३ ॥

अथ विदुरः किमकार्षीदिति तत्राह- कश्चिदिति । सुखलक्षणं श्रेयः । ज्येष्ठस्य भ्रातुः धृतराष्ट्रस्य ॥ १४ ॥

एवं भगवद्भक्तिज्ञानादिमानयं विदुरो देवेषु कस्यावतार इति तत्राह अबिभ्रदिति । यः अर्यमा वैवस्वतः अघकारिषु पापकृत्सु यथाघं पापमनतिक्रम्य दण्डं अबिभ्रत् शिक्षामकरोत् पापफलमभोजयदित्यर्थः । स यमः

---

१ गङ्गायां– ङ छ ट ढ ।

२ नावेदयेत् सकरुणो – यादुपत्यपाठः । नावेदयत् तत्करुणो— ङ ट । नावेदयत्सकरुणो –– कोशान्तरपाठः ।

युधिष्ठिरो लब्धराज्यो दृष्ट्वा पौत्रं कुलन्धरम् ।
भ्रातृभिर्लोकपालाभैर्मुमुदे परया श्रिया ॥ १६ ॥

अथामन्त्र्याच्युतो बन्धून्निवर्त्यानुगतान्विभुः ।
अर्जुनोद्धवशैनेयैर्ययौ द्वारवतीं हयैः ॥ १७ ॥

एवं गृहेषु सक्तानां प्रमत्तानां गृहेहया ।
अत्यक्रमदविज्ञातः कालः परमदुस्तरः ॥ १८ ॥

---

अणीमाण्डव्यशापात्[1] यावद्वर्षशतं तावत् शूद्रत्वं बभारेत्यन्वयः । माण्डव्यो नाम कश्चिदृषिः कस्मिंश्चिन्नदीतीरे तपश्चरन् तत्र कस्माच्चिन्नगरात् चौर्यं गृहीत्वा आगतैः चोरैः सहानुधावद्भिः नगरपालैः अज्ञानात् गृहीतो राज्ञे[2] निवेद्य[3] तदनुज्ञया शूले समारोपितोऽभूत् । तत्रापि शूले तपः कुर्वन्तमतिजाज्वल्यमानं दृष्ट्वा जनैर्निवेदितो राजा समम्भ्रममुपागम्य शूलादवरोप्य प्रसाद्य प्रस्थापयामास । कोपेन जाज्वल्यमानेन यमसमीपं गतेन तेन मुनिना कस्मादहं शूलमारोपित इति पृष्टो यमः तस्मात् शापमादातुकामः बाल्यावस्थायां काचिन्मक्षिका शूले समारोपिता, तेन दोषेणायमवस्थाविशेषः प्राप्त इति प्राह । तस्मै क्रुद्धो मुनिः राजन्[4] शूद्रो भवेति शशाप तमिति माण्डव्यशापः ॥ १५ ॥

अथ युधिष्ठिरः किञ्चकारेति तत्राह– युधिष्ठिर इति ।

इन्द्रादिलोकपालसमानैः भीमादिभ्रातृभिः लब्धराज्यः युधिष्ठिरः कुलन्धरं पौत्रं दृष्ट्वा परया श्रिया सम्पदा मुमुदे इत्येकान्वयः । कुलं धारयतीति कुलन्धरः ॥ १२ ॥

ययौ द्वारवतीमित्युक्तश्रीकृष्णप्रयाणशेषमाह– अथेति । अथ विभुः व्याप्तः अच्युतः आगनिव्यानीत्यानन्त्य सम्भाव्य यान्तमनुगतान् बन्धून् निवर्त्य[5] अर्जुनादियुक्तः हयैर्युक्तेन रथेन द्वारवतीं ययावित्येकान्वयः ॥ १७ ॥

अधुना धृतराष्ट्रस्य स्वर्गप्राप्तिप्रकारं वक्तुमारभते– एवमिति । एवं उक्तप्रकारेण हरिपरायणानां पाण्डवादिवत् यः कालः एकमपि क्षणं अवन्ध्यतां नेतुं शक्यः स कालः हरिविमुखानां गृहेषु

---

१ आणिमाण्डव्य - ड । मूलधृतः पाठः ग घ ज ठ कोशस्थः । अन्यत्र निदपपदं माण्डव्यपदमास्ति ।

२ अयं पाठः क ग घ ठ डकोशस्थः । राज्ञो - ब छ ज ट ।

३ अयं ड पाठः । अन्यत्र निवेदितश्च । ४ अयं ड पाठः । अन्यत्र नास्ति ।

५ निवर्त्य - क ग घ ज ठ ।

विदुरस्तदभिप्रेत्य धृतराष्ट्रमभाषत ।
राजन्निर्गम्यतां शीघ्रं पश्येदं भयमागतम् ॥ १९ ॥

प्रतिक्रिया न यस्येह कुतश्चित्कर्हिचित् प्रभो ।
स एष भगवान्कालः सर्वेषां नः समागतः ॥ २० ॥

येन चेहाभिपन्नोऽयं प्राणैः प्रियतमैरपि ।
जनः सद्यो वियुज्येत किमुतान्यैर्धनादिभिः ॥ २१ ॥

पितृभ्रातृसुहृत्पुत्रा हतास्ते विगतं वयः ।
आत्मा च जरया ग्रस्तः परगेहमुपाससे ॥ २२ ॥

---

पुत्रमित्रादिलक्षणेषु केवलं शिश्नोदरम्भरतया सक्तानां गृहपोषणधनान्वेषणप्रयत्नैः प्रमत्तानां विस्मृतपरमात्मतत्त्वानां अत एव अविज्ञातोऽत्यकामत् । अतिक्रान्तोऽभूदित्येकान्वयः ॥ १८ ॥

तत् कालस्यातिक्रमणं । विदुर इति नाम सार्थं साधयन्[1] । निर्गम्यतां. गृहादिति शेषः । प्राप्तमिदं मरणभयं पश्येत्यन्वयः ॥ १९ ॥

यस्य कालस्य कुतश्चित् कारणात् कर्हिचिदपि प्रतिक्रिया निवर्तनक्रिया नास्ति स एष भगवान् कालरूपो नः सर्वेषां समागतः । शरीरवियोगकरणाय प्राप्त इत्यन्वयः ॥ २० ॥

इतोऽपि निर्गमनमुचितमित्याह – येनेति । इह जीवलोके येन कालरूपिणा हरिणा अभिपन्नो ग्रस्तः अयं जनः अतिशयेन हृदयङ्गमैः प्राणैरपि वियुज्येत । अन्यैः धनादिभिः वियुज्येत[2] इति किमुतेत्यन्वयः ॥ २१ ॥

अस्तु ममापि मरणं ततः किमिति तत्राह – पित्रिति । तव पित्रादयो हताः । वयश्च विगतम् । आत्मा देहश्च जरया ग्रस्त इति यत् तथापि त्वं परगेहमुपाससे । न श्रेयःसाधनाये[3]हसे । मृतस्य तव अतः परलोके न सुखावाप्तिरित्यर्थः ॥ २२ ॥

---

1 वर्तमानि खलु विदुरः । काले धृतराष्ट्रस्य कर्तव्यं ज्ञात्वोपदिशन् स्वनाम्नः सार्थक्यं स्पष्टीचकार ।

2. विमुच्येत - ग ङ छ ढ ।  3 साधनाय यतसे - ख छ ।

अहो महीयसी जन्तोर्जीविताशा यया भवान् ।
भीमापवर्जितं पिण्डमादत्से गृहपालवत् ॥ २३ ॥

अग्निर्निसृष्टो दत्तश्च गरो दाराश्च दूषिताः ।
हृतं क्षेत्रं धनं येषां तद्दत्तैरसुभिः कियत् ॥ २४ ॥

तस्यापि तव देहोऽयं कृपणस्य जिजीविषोः
परैत्यनिच्छतो जीर्णो जरया वाससी इव ॥ २५ ॥

गतस्वार्थमिमं देहं विरक्तो मुक्तबन्धनः ।
अविज्ञातगतिर्जह्यात्स वै धीर उदाहृतः ॥ २६ ॥

---

परलोके सुखं नेति चेदिहैव दीर्घं जीवनमस्त्वित्यभिप्रायश्चेत्त्वं निरपत्रप इत्यभिप्रेत्याह – अहो इति । जन्तोः जीविताशा बहुकालं जीवामीत्याशा इच्छा महीयसी महत्तरा । अहो अज्ञानातिरेकः । कुतः ? यया जीविताशया भवान् भीमापवर्जितं भीमेन तिरश्चीनहस्तेन दत्तं पिण्डं आदत्ते । क इव? गृहपालवत् सारमेय इव ॥ २३ ॥

ननु विषम उपन्यासः । कनिष्ठपुत्रत्वेन मत्पुत्रत्वात् तद्दत्तेन शरीरपोषणमुचितमिति चेत्, सत्यम् । विषदानादिना त्वया अपराद्धत्वात् तदन्नं विषोपममित्यभिप्रेत्याह – अग्निरिति । अग्निदाहाद्यपराधास्त्वया येषां कृताः तेषां अन्नैः पुष्टैः असुभिः कियत् प्रयोजनम् । लज्जाकरत्वात् मृतिरेव गरीयसी । अतो निर्गम्यतामित्यन्वयः ॥ २४ ॥

युधिष्ठिरादीनां मयि तात्पर्यात् न निर्गमिष्यामीति चेत्तत्राह – तस्येति । जरया ग्रस्ते वाससी इव वस्त्रे इव यथा तथा अनिच्छतो जिजीविषोः जीवितुमिच्छोः कृपणस्य परान्नादननिरतस्यापि तवायं जीर्णो देहः परैति[2] निरस्तायुः स्यात् । अतो देहस्यानित्यत्वात् निर्गच्छत्वितिति वदामीति भावः ॥२५॥

ननु प्रथममेव पतिष्यतीति देहमुपेक्ष्यमाणस्य आत्महननाख्यदोषानुषङ्ग इति तत्राह– गतेति । गतः स्वार्थः ऐहिकामुष्मिकसुखसाधनं यस्मात् सः तथोक्तः, तं इमं देहं देहाभिमानमुक्तः तदनु

---

१ परेति - ग ङ छ । २ परेति - ग ङ छ ।
३ अयं कोशान्तरेषु सर्वत्र स्थितः पाठः । मूलकोशे निर्गच्छत ।

यः स्वतः परतो वेह जातनिर्वेद आत्मवान् ।
हृदि कृत्वा हरिं गेहात्प्रव्रजेत्स नरोत्तमः ॥ २७ ॥

अथोदीचीं दिशं यातु स्वैरज्ञातगतिर्भवान् ।
इतोऽर्वाक्प्रायशः कालः पुंसां गुणविकर्षणः ॥ २८ ॥

एवं राजा विदुरेणानुजेन प्रज्ञाचक्षुर्बोधित आजमीढः ।
छित्वा स्वेषु स्नेहपाशान्द्रढिम्नो निश्चक्राम भ्रातृसन्दर्शिताध्वा ॥

---

भार्यादिस्नेहबन्धनान्मुक्तः अविज्ञातगतिः अन्यैर्जनैरनवबुद्धारण्यदिग्गतिः जह्यात् । स वै स एव धीरः विवेकज्ञानी उदाहृतः । तस्मात् पुरुषार्थसाधनायोग्यदेहहानौ दोषाभावात् निर्जनवनं गत्वा तपश्चर्यया शरीरमिदं सार्थकं कुर्विति भावः ॥ २६ ॥

इतोऽपि प्राप्तवनस्त्वं तपःसाधनमेव श्रेयस्करमिति वक्तीत्याह – य इति । यः स्वतः स्वबुध्द्या परतः परबोधनेन[1] वा जातनिर्वेदः उत्पन्नवैराग्यः आत्मवान् वशीकृतमनाः हरिं हृदि कृत्वा गेहात् प्रव्रजेत् सः नरोत्तमः पुरुषश्रेष्ठः इत्येकान्वयः ॥ २७ ॥

अथ तस्मात् भवान् उदीचीं दिशं यातु । कथम्भूतः ? स्वैरज्ञातगतिः विविक्तगतिः न तु स्वैः पाण्डवैः अविज्ञातगतिः । पाण्डवानुज्ञयैव तस्य वनवासाय गत्युक्तेः । कथं तर्हि शब्दयोजना? स्वैरिणीशब्दार्थवत् स्वेच्छानुसारेण ज्ञाता गतिर्यस्य, न परेच्छातः स तथोक्त इति विवरणोपपत्तेः । अन्यथा अविज्ञातगतिरित्येतत् अपहसितं[4] स्यात् । इतोऽर्वाक् पूर्वतनः कालः पुंसां अविकारिणां ज्ञानभक्त्यादिगुणसामग्र्यापादकः । इतः उपरितनः कालः प्रायेण गुणेषु विषयेषु विकृष्य नाशयतीति गुणविकर्षणः । विविच्य दर्शयतीति वा । 'वेदस्य च विकर्षणमि'त्युक्तेः[6] ॥ २८ ॥

एवं उक्तप्रकारेण अनुजेन विदुरेण बोधितः अतः प्रज्ञा ज्ञानमेव चक्षुः यस्य स तथा । स्वतो जात्यन्धः । प्रज्ञया चक्षेः पश्यति न तु मांसदृष्ट्येति वा । आजमीढः अजमीढवंशोद्भवः । आजेन

---

१ अयं ङ पाठः । अन्यत्र - अनुबन्धात् । २ गमनः - ङ । ३ अयं ङ पाठः । अन्यत्र - परबोधेन ।
४ अपहसितं - क घ छ । ५ गुणं - ख ।
६ देवस्य वा विकर्षणम् - ङ ज । वेदस्य वा विकर्षणं - क घ छ ठ । वेदस्य नाविकर्षणम् - ग ।

पतिं प्रयान्तं सुबलस्य पुत्री-पतिव्रता-चानुजगाम साध्वी ।
हिमालयं न्यस्तदण्डप्रहर्षं मनस्विनामवसत्संविहारम् ॥ ३० ॥

अजातशत्रुः कृतमैत्रो हुताग्निर्विप्रान्नत्वा तिलगोवस्त्ररुग्मैः ।
गृहान्प्रविष्टो[२] गुरुवन्दनाय न चापश्यत्पितरौ सौबलीश्च ॥ ३१ ॥

---

ज्ञानेन मीढः सिक्तः इति वा । 'मिह सेचने' इति धातोः । द्रढिम्नः दृढतरान् स्वेषु स्नेहाख्यपाशान् छित्वा भ्रात्रा विदुरेण सम्यक् दर्शितः उभयविधः लौकिकवैदिकाख्यः अध्वा मार्गो यस्य स तथोक्तः । राजा धृतराष्ट्रः निश्चक्राम निर्गतो बभूवेत्येकान्वयः । गृहादिति शेषः ॥ २९ ॥

सुबलस्य पुत्री गान्धारी पतिशुश्रूषैव व्रतं यस्याः सा तथोक्ता । प्रयान्तं पतिं अनुजगामेत्यन्वयः । चकाराद् कुन्ती च गत्वा कुत्रावसदिति तत्राह – **हिमालयमिति** । कायवाङ्मनोभिः न्यस्तः परित्यक्तः भूतद्रोहलक्षणो दण्डो यैस्तेषां प्रकर्षेण हर्षं जनयतीति न्यस्तदण्डप्रहर्षं, अत एव मनस्विनां वशीकृतेन्द्रियग्रामाणां सन्यासिनां सम्यग्विहारं क्रीडास्थानं हिमालयं हिमवन्तं पर्वतं गत्वा तत्र बदरीकाश्रमेऽवसदित्यन्वयः ॥ ३० ॥

इदानीं युधिष्ठिरस्य मनसि 'तपस्तपतो धृतराष्ट्रस्य प्रायेण मृतिरभूत् । तथाविधशकुनप्रतिभासादि-त्यभिप्रेत्याह – अजातशत्रुरिति । मित्रः सूर्यः । तद्विषयं कर्म मैत्रं सन्ध्योपासनादि । तत्कृतं येन स कृतमैत्रः । गार्हपत्याद्यग्निषु हुतं येन सः हुताग्निः । तिलगोवस्त्ररुग्मैः विप्रान् तर्पयित्वा रुग्मं सुवर्णं दत्वा च पित्राद्युपवेशस्थले पित्रादिगुरुवन्दनाय पितृगृहान् प्रविष्टोऽजातशत्रुः तदायतनं नमस्कुर्वन् पितरौ कुन्तीधृतराष्ट्रौ सौबली गान्धारीश्च मनसा जीवन्तौ नापश्यत् । सम्प्रति ते मृता इति तस्य मनसि तथा प्रत्यभादित्यन्वयः[१] । पितरावित्यत्र पितृशब्देन विदुरोऽत्र नाभिप्रेतः । तस्य शूद्रजातित्वेन अवन्द्यत्वात् । धृतराष्ट्रादिमृतेः पूर्वं युधिष्ठिरेणैकीभूतत्वाच्च । 'न चापश्यदि'त्यस्य अनुक्त्वा धृतराष्ट्रगमना'र्थत्वाङ्गीकारे भारतादौ[३] युधिष्ठिराद्यनुज्ञाया गत्युक्तेः तद्विरोधो दुर्वारः ॥ ३१ ॥

---

१ एतदनन्तरं 'इति प्रत्यभादि'ति त्रुटितमिति भाति ।

२ अयं पाठः छक्कोशेऽप्यस्ति । अन्यत्र 'गृहं प्रविष्ट' इति ।

३ भा.र.वं - ३ ।

तत्र सञ्जयमासीनं पप्रच्छोद्विग्नमानसः ।
गावल्गणे क्व नस्तातो वृद्धो हीनश्च नेत्रयोः
अम्बा वा हतपुत्रार्ता पितृव्यः क्व गतः सुहृत्[2] ॥ ३२ ॥

अपि मय्यकृतप्रज्ञे हतबन्धुः सभार्यया ।
आशंसमानः शमलं गङ्गायां दुःखितोऽपतत् ॥ ३३ ॥

पितर्युपरते पाण्डौ सर्वान्नः सुहृदः शिशून् ।
अरक्षतां व्यसनतः पितृव्यौ क्व गतावितः ॥ ३४ ॥

---

[illegible] प्रतीतपितृत्वयोगस्य युधिष्ठिरस्य तन्मरणानन्तरं तदवसरे तत्रागत्य आसीनं सञ्जयं प्रति पितृपारलौकिकगतिप्रश्नप्रकारमाह – तत्रेति । गवल्गणस्यापत्यं गावल्गणिः । तस्य सम्बुद्धिः हे गावल्गणे । नः तातः क्व कं लोकं प्रतिगतः । कथंभूतः ? नेत्रयोरिति तृतीयार्थे षष्ठी । नेत्राभ्यां हीनः । नेत्रयोर्योगेन वा । वृद्धः जरया च ग्रस्तः । अम्बा कुन्ती वा, हतपुत्रत्वात् आर्ता गान्धारी च परत्र कं लोकं प्रति गते ? पितृव्यो धृतराष्ट्रः क्व गत इति पुनः प्रश्नः तात्पर्यातिशयात् ॥ ३२ ॥

धृतराष्ट्रस्य मरणकाले स्वस्मिन् प्रियाप्रियविवेकं तस्य मरणप्रकारञ्च पृच्छति – **अपीति** । अकृतप्रज्ञे अशिक्षितबुद्धौ मयि स्वभार्यया सह शमलं पापं अपराधं आशंसमानः हतबन्धुः दुःखितः सन् गङ्गायां अपतदपि ? बन्धून् सर्वान् मारयित्वा स्वयं राज्यमादाय मां निष्कासितवानिति शमलबुद्धिः नाभवत्किम् ? तद्दुःखातिशयादेव गङ्गायां पतित्वा मृतो नन्विति भावः ॥ ३३ ॥

स्वस्याकृतप्रज्ञत्वमुपपादयति – **पितरीति** । नः अस्माकं पितरि पाण्डौ उपरते स्वर्गं गते सति यौ गान्धारीधृतराष्ट्रौ[3] शिशून् सर्वान् व्यसनतः अरक्षताम् । सुहृत्त्वं शिशुत्वञ्च रक्षणीयत्वे हेतुः । तौ पितृव्यौ गान्धारीधृतराष्ट्रौ[4] मृत्वा इतः अस्मात् लोकात् परत्र कं लोकं गतावित्यन्वयः । तयोरनवरत-शुश्रूषणादेव कृतप्रज्ञता । तदभावात् अकृतप्रज्ञत्वमिति भावः ॥ ३४ ॥

---

१ अयं ख पाठः । अन्यत्र पितृ इति प्रकारमिति च नास्ति ।

२ अयं ख छ ट ठ पाठः । अन्यत्र – गतो इतः ।

३ कुन्तीधृतराष्ट्रौ – क ख छ ट ड ।

४ कुन्तीधृतराष्ट्रौ – ख ङ छ ट ड ।

सूत उवाच —

कृपया स्नेहवैक्लव्यात्सूतो विरहकर्शितः ।
आत्मेश्वरमचक्षाणो न प्रत्याहातिपीडितः ॥ ३५ ॥

विमृज्याश्रूणि पाणिभ्यां विष्टभ्यात्मानमात्मना ।
अजातशत्रुं प्रत्यूचे प्रभोः पादावनुस्मरन् ॥ ३६ ॥

सञ्जय उवाच —

अहञ्च व्यंसितो राजन् पित्रोर्वः कुलनन्दन ।
न वेद नाऽन्यया गान्धार्या मुषितोऽस्मि महात्मभिः ॥ ३७ ॥

सूत उवाच —

एतस्मिन्नन्तरे विप्राः नारदः प्रत्यदृश्यत ।
वीणां त्रितन्त्रीं ध्वनयन्भगवान्सहतुम्बुरुः ॥ ३८ ॥

राज्ञादरोपनीतार्घ्यं प्रत्युत्थानाभिवन्दितम् ।
परमासन आसीनं कौरवेन्द्रोऽभ्यभाषत ॥ ३९ ॥

---

अतिपीडितः, दुःखेनेति शेषः । आत्मनः स्वस्य ईश्वरं स्वामिनं धृतराष्ट्रं अचक्षाणः मृतत्वे-देवापश्यन् अत एव विरहेण वियोगेन कर्शितः कृशतरः । कुतः ? स्नेहपारवश्यात् दाक्षिण्याच्च । सञ्जयो युधिष्ठिरचोद्योत्तरं वक्तुं नाशकदित्यन्वयः ॥ ३५ ॥

आत्मना मनसा आत्मानं विष्टभ्य संस्थाप्य । प्रभोः धृतराष्ट्रस्य ॥ ३६ ॥

प्रजा रञ्जयित्वा कुलं नन्दयति, नत्वन्यथा इत्यतः पदद्वयं प्रायोजि । न केवलं त्वमेव व्यंसितः अहञ्च वियोजितः इति चार्थः । पित्रोः कुन्तीधृतराष्ट्रयोः । परलोकगतिमिति शेषः । मुषितः वञ्चितोऽस्मि ॥ ३७ ॥

एतस्मिन्नन्तरे युधिष्ठिरसञ्जयसंवादमध्ये । त्रितन्त्रीं तन्त्रीत्रयमेलनोपेतां[1] वीणां ध्वनयन् वादयन् तुम्बुरुणा सह वर्तमानः भगवान् हरेः षड्गुणवेत्ता पूज्यो वा ॥ ३८ ॥

राज्ञा आदरेण उपनीतं दत्तं अर्घ्यं यस्मै सः तथा तम् । प्रत्युत्थानं कृत्वा अभिवन्दितम् परमासने सिंहासनसमानपीठे आसीनं उपविष्टं नारदं कौरवेन्द्रो युधिष्ठिरः अभ्यभाषतेत्यन्वयः ॥ ३९ ॥

---

१ तन्त्रीत्रितयसम्मेलनोपेतां - ङ ।

युधिष्ठिर उवाच[1] —

नाहं वेद गतिं पित्रोर्भगवन्क्व गताविति[2] ।
कर्णधार इवापारे सीदतां पारदर्शनः[3] ॥ ४० ॥

नारद उवाच —

मा कञ्चन शुचो राजन्यदीश्वरवशं जगत् ।
स संयुनक्ति भूतानि स एव वियुनक्ति च ॥ ४१ ॥

यथा गावो नसि प्रोता तन्त्यां बद्धाः स्वदामभिः ।
वाक्तन्त्यां नामभिर्बद्धा वहन्ति बलिमीशितुः ॥ ४२ ॥

---

हे भगवन् मृतयोः पित्रोः पारलौकिकगतिं न वेद । तां भवन्तं पृच्छामि, तौ मृत्वा इतः कं लोकं प्रति गताविति । अपारे सागरे[4] सीदतां बिभ्यतां कर्णधारो नाविक इव त्वं अस्माकं[5] दुःखार्णवे मग्नानां पारं तीरं दुःखशमनोपायं वा दर्शयतीति पारदर्शनः ॥ ४० ॥

धृतराष्ट्रादिषु कञ्चन मा शुचः शोकं माकार्षीः । कुतः ? जगत् ईश्वरवशमिति यत् यस्मात् तस्मात् स एवेश्वरः भूतानि संयुनक्ति स्वकर्मानुसारेण संयोजयति । स एव स्वकर्मावसाने वियुनक्ति वियोजयति च । तस्मादस्ववशत्वात् मा शुच इति भावः ॥ ४१ ॥

ईश्वरजीवस्वातन्त्र्यपारतन्त्र्ये सोदाहरणं दर्शयति – यथेति । यथा गावो बलीवर्दाः नसि नासिकायां त्रिवृत्कृततन्तुदामभिः प्रोताः स्यूताः नासिकाच्छिद्रस्यूतह्रस्वदामभिः आधारभूतायां दीर्घायां तन्त्यां बद्धाः ईशितुः स्वामिनः व्रीह्यादिगोणीं वहन्ति तथा ब्राह्मणक्षत्रियवैश्यशूद्रब्रह्मचारिगृहस्थवानप्रस्थयतय इति नामात्मकदामभिः वाक्तन्त्यां विधिनिषेधात्मकवेदलक्षणायां बद्धाः स्ववर्णाश्रमविहितकर्मभिः ईश्वरस्य बलिं यज्ञादिलक्षणपूजां वहन्ति कुर्वन्ति । तस्मात् स एव स्वतन्त्रो, जीवास्तदधीना इति शोकपरिहाराय स ईशः स्वविहितकर्मणा पूज्य इति भावः ॥ ४२ ॥

---

१ राजोवाच-क । २ इतः परं-'अम्बा वा हतपुत्रार्ता क्व गता च तपस्विनी' । इत्यधिकपाठः - क ग ङ छ ।
३ इतः परं - 'अथाबभाषे भगवान् नारदो मुनिसत्तमः' इत्यधिकपाठः - ग छ ।
४ संसारे - कोशान्तरेषु सर्वत्र । ५ तस्मात्त्वं - क ग घ ङ छ ज ट ठ ।

यथा क्रीडोपस्कराणां संयोगविगमाविह ।
इच्छया क्रीडितुः स्यातां तथैवेशेच्छया नृणाम् ॥ ४३ ॥

यन्मन्यसे ध्रुवं लोकमध्रुवञ्चाथवोभयम् ।
सर्वथा हि न शोच्यास्ते स्नेहादन्यत्र मोहजात् ॥ ४४ ॥

तस्माज्जह्यङ्ग वैक्लव्यमज्ञानकृतमात्मनः ।
कथं त्वनाथाः कृपणा वर्तेरन्यतनामृते ॥ ४५ ॥

---

वेदस्यानेकार्थत्वेन तात्पर्यस्य दुर्ज्ञेयत्वाद्धौरेयाणां च गोण्यादिपातनेन स्वामिकार्याविज्ञानदर्शनात् विषमोऽयमुपन्यास इत्यतो निदर्शनान्तरमाह– यथेति । यथा क्रीडोपस्कराणां लीलासाधनानां संयोगविगमौ क्रीडितुः पुरुषस्य इच्छया, तथैव ईशेच्छया हरेरिच्छया[1] पितृपुत्रादिरूपाणां नृणां मिथः संयोगवियोगौ स्यातामित्यन्वयः । अनेन वेदस्य मुख्यार्थः श्रीनारायण एवेति निरणायि । तस्मात् पराधीनत्वात्[2] न शोकेन प्रयोजनं तवेति भावः ॥ ४३ ॥

'यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः' इति स्मृतेः उक्तार्थनिर्णये केयं युक्तिरिति तत्राह– यदिति । यत् यदि लोकं शरीरं ध्रुवं नित्यं[3] मन्यसे, अध्रुवं अनित्यं वा, अथवोभयं नित्यानित्यं मनुषे इति विकल्प्य परिहरति–सर्वथेति । सर्वप्रकारेण ते[3] पितरो न शोच्याः । तथाहि- नित्यत्वे नाशाभावात् तस्य चादर्शनात्[4] अनित्यत्वेमिति वक्तव्यम् । तस्यापरिहार्यत्वात् । तृतीयोऽनुपपन्नः । व्याहतत्वात् । तर्हि शोके किङ्कारणमिति तत्राह स्नेहादिति । अहं ममेति मोहो बुद्धिभ्रमः । तस्मात् जातात् स्नेहात् अन्यत्र ते[6] शोककारणं नास्ति । तस्मात् भ्रमजन्यस्नेह एव तत्र हेतुरिति भावः ॥ ४४ ॥

ननु 'यस्य देवे परा भक्तिर्यथा देवे तथा गुराविति श्रुतेः गुरुविषयस्नेहलक्षणभक्तेः पुरुषार्थहेतुत्वेनोपयोगात् कथं तस्य मोहजन्यत्वमित्याशङ्क्य तस्य तद्वैलक्षण्यात् मम तत्पोषणकर्तृत्वेन मन्नाथत्वात् मदृते जीवनमेव नास्ति तेषाम् । ईशरक्ष्यत्वाज्ञानादित्यात्मनि अन्यथाभिमाननिमित्तकातर्यं त्वया त्यक्तव्य-

---

१ अयं ङ पाठः । 'हरेरिच्छया' इति अन्यत्र नास्ति । २ अयं ङ पाठः । अन्यत्र नास्ति ।
३ अयं ङ पाठः । अन्यत्र नास्ति । ४ तस्य च दर्शनात् - ख ङ । ५ अनित्यत्वेति - ङ ।
६ अयं ङ पाठः । अन्यत्र - 'अन्यत् ऋते' इति पाठः । ७ ईशरक्ष्यत्वादिज्ञानाभावात् - क ङ ।
८ वनमाश्रिताः - क ङ छ ट ठ ।

कालकर्मगुणाधीनो देहोऽयं पाञ्चभौतिकः ।
कथमन्यांस्तु गोपायेत् सर्पग्रस्तो यथा परम् ॥ ४६ ॥

अहस्तानि सहस्तानामपदो द्विचतुष्पदाम् ।
अणूनि तात महतां जीवो जीवस्य जीवनम् ॥ ४७ ॥

---

नित्याह- तस्मादिति आत्मनः परमात्मनः अज्ञानेन ज्ञानं देहस्वं नहि त्यजेत्तमन्वदः । परमात्मन स्वातन्त्र्यपरानन्दोनेति शेषः ॥ ४५ ॥

किञ्च तवायं देहः स्वाधीनः पराधीनो वा । स्वाधीनत्वे स्वभोगायोग्यनिवारणाक्षमता[1] कथम् । नहि कश्चित् दुःखं मे स्यादित्याकाङ्क्षते विचक्षणः । तस्मात् पराधीन इति वक्तव्यम् । तथाच तस्य पररक्षणसामर्थ्यं न घटत इत्याह- कालेति । कालः पक्षमासादिलक्षणः । कर्म फलपाचकं पुण्यपापलक्षणमदृष्टम् । गुणाः सत्वादयः । तन्निमित्तो[2]पादानकारणजन्यत्वेन कालाद्यधीनः सर्जोदोऽयं देहः पञ्चभिः भूतैः आरब्धः स्वव्यतिरिक्तान् कथं गोपायेत् रक्षेत् । तत्र दृष्टान्तः- सर्पग्रस्तो मण्डूकः सर्पग्रस्तं परं मण्डूकान्तरं रक्षितुं न समर्थः तथेति । तुशब्देन अनुभवसिद्धमेवेदमिति द्योतयति । तस्मात् अहं पित्रादिरक्षाकर्तेत्याद्यज्ञानं त्यजेति भावः ॥ ४६ ॥

ननु भगवन् ! सत्यमेतत् । तथापि वृद्धानां अन्धानाञ्च अन्नादिदौःस्थ्यात् तज्जीवने मम सन्देहः इति चेत्तत्राह- अहस्तानीति । हे तात वत्स, अहस्तानि शशवराह[3]पक्षिप्रभृतीनि सत्वानि सहस्तानां मनुष्याणां जीवनं देहधारणसाधनम् । द्विपदां च[4] चतुष्पदाञ्च अन्नतृणादयः[5] तत्र द्विपास्त्वपि अणूनि मनुष्यादीनि महतां राक्षसादीनां जीवनमित्यनुवर्तते । एवं जीव एव जीवस्य जीवनं विधात्रा विहितम् । अतो न तान्प्रति चिन्ता कर्तव्येत्यर्थः ॥ ४७ ॥

---

१ अयं ङ पाठः । अन्यत्र - स्वभोगयोग्यदुःखनिवारणाक्षमता ।
२ अयं क छ पाठः । अन्यत्र तदेति नास्ति ।  ३ शशपारावत - क ग घ ङ छ ज ट ठ ।
४ चकारः ङ पाठस्थः । अन्यत्र नास्ति ।  ५ अयं ङ पाठः । अन्यत्र - अन्नं तृणादयः ।

तदिदं भगवान्राजन्नेक आत्माऽऽत्मनां स्वदृक् ।
अन्तरोऽनन्तरो भाति पश्य त्वं माययोरुताम् ॥ ४८ ॥
सोऽयमद्य महाराज भगवान्भूतभावनः ।
कालरूपोऽवतीर्णोऽस्यामभावाय सुरद्विषाम् ॥ ४९ ॥
निष्पादितं देवकृत्यमवशेषं प्रतीक्षते ।
तावद्यूयमवेक्षध्वं भवेद्यावदिहेश्वरः ॥ ५० ॥

---

इतोऽपि न शोकः कर्तव्यः, किन्तु अखिलस्य हर्यधीनत्वात् तद्भजनमेवाऽवश्यं कर्तव्यमित्याह– तदिदमिति । एवं इदं हरेरितरत्सर्वं अनित्यं अस्वतन्त्रं चेति यत् तत् तस्मात् हे राजन् भगवान् आत्मनां जीवानां आत्मा आदानादिकर्ता एकः अद्वितीयः स्वदृक् स्वयंप्रकाशः विवेकज्ञानिनां मते अन्तरः अस्य जगतः अन्तः स्थित्वा रतिकृत् अनन्तरः गुणगुण्यादिभेदरहितः भाति । तस्मात् त्वमपि देवोत्तमावतारत्वेन विवेकित्वात् मायया स्वेच्छया कृतां उरुतां अनेकावतारान्तर्याम्याद्यात्मिकां निर्भेदां हरेः विभूतिं पश्य । पश्यन् च तमेव भजेति वाक्यशेषः ।

'स्वदृक् भगवानात्मा स एक एव इदं जगद्भाति । कथं? भोक्तृरूपेणान्तरः भोग्यरूपेणानन्तरः । नन्वेकस्य अनेकत्वं कथं तत्राह– पश्येति । तं परमेश्वरं मायया बहुधा वर्तमानं पश्येति' केचिद्योजयन्ति । एकस्य भोक्तृभोग्यरूपत्वानुपपत्तेः, अनिर्वाच्यमायायाः अप्रामाणिकत्वेनानङ्गीकार्यत्वात् अनादरणीयमेव तदिति ॥ ४८ ॥

ननु भगवता ईश्वरवशं जगदित्युक्तम् । तमीश्वरं वयं कथं बुध्यामहे इति तत्राह– सोऽयमिति । यः सकलं स्ववशं विधायास्ते सोऽयं अद्य देवैः प्रार्थितः अस्यां उर्व्यां यदुकुलेऽवतीर्ण इत्यन्वयः । कथंभूतः ? भूतानां भावनः वर्धनः । कालरूपः संहाररूपः । किमर्थं ? सुरद्विषामभावाय विनाशाय ॥ ४९ ॥

अवतारप्रयोजनञ्च सम्पन्नप्रायमिति ब्रूत इत्याह–निष्पादितमिति । भूभारदैत्यसंहाराख्यं देवकार्यं तेन निष्पादितम् । स पुनः अवशेषं अवशिष्टयदुकुलक्षयं प्रतीक्षते । पश्चाद्वैकुण्ठमेष्यतीति शेषः । श्रीकृष्णः इह भूतले यावत् यावन्तं कालं तिष्ठति यूयमपि तावन्तं समयं अनुवर्तध्वमित्यन्वयः ॥ ५० ॥

---

१ अयं ग ड पाठः यादुपत्यसंनतश्च । पदर्यंरत्वमिति अन्यत्र पाठः । २ अयं ड पाठः । अन्यत्र · यस्मात् ।

धृतराष्ट्रः सह भ्रात्रा गान्धार्या च स्वभार्यया ।
दक्षिणेन हिमवता ऋषीणामाश्रमं गतः ॥ ५१ ॥

स्रोतोभिः सप्तभिर्यत्र स्वर्धुनी सप्तधाऽभ्यगात् ।
सप्तानां प्रीतये नाम्ना सप्तस्रोतः प्रचक्षते ॥ ५२ ॥

स्नात्वा त्रिषवणं तस्मिन्हुत्वा चाग्नीन्यथाविधि ।
अब्भक्ष उपशान्तात्मा स आस्ते विगतेक्षणः ॥ ५३ ॥

जितासनो जितश्वासः प्रत्याहृतषडिन्द्रियः ।
हरिभावनया ध्वस्तरजःसत्वतमोमलः ॥ ५४ ॥

---

नाहं वेद गतिमिति प्रश्नं परिहरिष्यन् धृतराष्ट्रस्य तपश्चरणाश्रमतीर्थनाम वक्तीत्याह- धृतराष्ट्र इति । भ्रात्रा[1] विदुरेण चशब्दात् कुन्त्या सह गतः । हस्तिनपुरान्निर्गम्य हिमवतः पर्वतस्य दक्षिणेन दक्षिणदिग्गतं ऋषीणां आश्रमं सप्तस्रोतो नाम[2] गतोऽभूदित्यन्वयः ॥ ५१ ॥

कस्मात् सप्तस्रोतो नाम तस्येति तत्राह– स्रोतोभिरिति । यत्र यस्मिन्नाश्रमे स्वर्धुनी भागीरथी सप्तानां ऋषीणां प्रीतये सप्तभिः स्रोतोभिः जलस्यन्दनधाराभिः सप्तधा सप्तभिः द्रोणीभिः अभ्यगात्, समुद्रमिति शेषः । इति यस्मात् तेन विचक्षणाः सप्तस्रोत इति संज्ञया प्रचक्षत इत्यन्वयः ॥ ५२ ॥

उपशान्तः आत्मा अन्तःकरणं यस्य सः तथोक्तः । विगतेक्षणः नष्टमांसदृष्टिः । वौ परमात्मनि गतं प्राप्तं ईक्षणं निरन्तरचिन्तनं यस्येति वा । अब्भक्षः कृतजलभक्षः[3] । सः धृतराष्ट्रः तस्मिन् आश्रमे स्नात्वा यथाविधि अग्नींश्च हुत्वा आस्ते इत्यन्वयः । आस्ते इति लट् भूतार्थे । अन्यथा उक्तार्थ-विरोधः स्यात् ॥ ५३ ॥

'अपि मयी'ति मृतिकालीननिष्ठासौमनस्य[4]विषयं प्रश्नं परिहरतीत्याह जितासन इति । धृतराष्ट्रः उक्तविधिना तपः कुर्वन् अभ्यासपाटवेन जितासनः स्वस्तिकाद्यासनजयवान् जितश्वासः प्राण-जयवान् विषयेभ्यः प्रत्याहृतश्रोत्रादिषडिन्द्रियः सन् हरिभावनया निरन्तरहरिध्यानेन ध्वस्तं रजः-सत्वतमोनिमित्तं मनोमलं येन सः तथा ॥ ५४ ॥

---

१ इतः पूर्वं 'गमनसमये' इत्यधिकः पाठः मूलकोशे, घ ज ठ कोशेषु च ।

२ नामेत्यन्वेतत्त्वं - क ग घ ङ ज ट ठ । ३ अयं ग घ ङ छ ज ट ठ पाठः । जलाहारः - क । कृतजलपारणः - ख ट । ४ मृत्युकालीनवैमनस्य - क ।

विज्ञानात्मनि संयोज्य क्षेत्रज्ञे प्रविलाप्य तम् ।
ब्रह्मण्यात्मानमाधारे घटाम्बरमिवाम्बरे ॥ ५५ ॥

ध्वस्तमायागुणोद्रेको निरुद्धकारणाशयः ।
निवर्तिताखिलाहार आस्ते स्थाणुरिवाधुना ।
तस्यान्तरायो नैवाभूत्[3] सन्यस्ताखिलकर्मणः ॥ ५६ ॥

स वा अद्यतनाद्राजा परतः पञ्चमेऽहनि ।
कलेवरं हास्यति ह तच्च भस्मीभविष्यति ॥ ५७ ॥

---

स्वल्पज्ञानेन स्वस्वरूपमारभ्य परतत्त्वपर्यन्तान्यशेषतत्त्वान्यपरोक्षीकृत्य सर्वं जगत् विज्ञानात्मनि विज्ञानतत्त्वाभिमानिनि विरिञ्चे संयोज्य तत्र प्रविलाप्य लयमेष्यतीति ध्यात्वा तं विरिञ्चं क्षेत्रज्ञे स्वहृदि स्थिते हरौ अन्तर्यामिणि प्रविलाप्य घटाम्बरं अम्बरं इव उत्पद्यमानघटवर्तिनोः महाकाशस्वरूप-तद्भिद्यमानाकाशयोर्मध्ये महाकाशस्वरूपघटाकाशो, महाकाशे घटे भिन्ने यथैकीभवति तथा आत्मानं स्वान्तर्यामिणं हरिं आधारे सर्वाधारे ब्रह्मणि सर्वगते प्रविलाप्य एकीभावेन चिन्तयन् ॥ ५५ ॥

अत एव ध्वस्तमायागुणोद्रेक इति हेतुगर्भम् । निरस्तसत्त्वादिप्रकृतिगुणोद्रेकत्वात्[1] हरावेव निरुद्धाशेषकरणमनाः अत एव निवर्तिताखिलाशनः अधुना स्थाणुरिव अचल आस्ते । तदा मृतिकाले आसीदित्येकान्वयः । तस्मात् न त्वयि शमलमाशंसमानो नापि दुःखितो गङ्गायामभ्यपतदिति[2] भावः । ब्रह्मार्पणबुद्ध्या सन्यस्तसमस्तकर्मणः तस्य धृतराष्ट्रस्य तपोविघ्नो नैवाभूदित्यन्वयः[4,5] ॥ ५६ ॥

इदानीं धृतराष्ट्रमृतिकालं वक्तीत्याह — स वा इति । सः धृतराष्ट्रः अद्यतनात् अह्नः परतः पूर्वस्मिन्[6] पञ्चमेऽहनि कलेवरं हास्यति जहौ । तच्च भस्मीभविष्यति भस्मसादभूत् । हशब्देन सुप्तिङुपग्रहलिङ्गनराणामिति[7] व्याकरणसूत्रमत्र प्रमाणीकरोति । इतिहासं वा सूचयति । वै इत्यनेन 'तांस्तदा नारदो विद्वाञ्छमयामास धर्मवित् । उक्त्वोत्तमां गतिं तेषां निष्ठां तात्कालिकीं तथा' इति स्कान्दपुराणवाक्यं सूचयति । चशब्द एवार्थे । तत्कलेवरमेव भस्मीभविष्यति । न तु स्वयं शून्यता-मेष्यति । चेतनस्य नित्यत्वात् ॥ ५७ ॥

---

१ निरस्तप्रकृतिसत्त्वादि - कोशान्तरेषु सर्वत्र । २ अभ्यपतत् - क । ३ मैवा - घ ज ठ ।
४ मैवा - घ ज ठ । ५ अयं ङ पाठः । अन्यत्र - इति भावः ।
६ परशब्दस्य पूर्वापरोभयवाचकत्वं भाग. तात्पर्ये उक्तम् । [1.12.57]
७ 'कालहलच् स्वरकर्तृयङ्गाञ्च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन' इति सूत्रशेषः ।

दह्यमानेऽग्निभिर्देहे पत्युः पत्नी सहोटजे ।
बहिःस्थिता पतिं साध्वी तमग्निमनुवेक्ष्यति ॥ ५८ ॥

विदुरस्तु तदाश्चर्यं निशाम्य कुरुनन्दन ।
हर्षशोकयुतस्तस्माद्गन्ता तीर्थनिषेवकः ॥ ५९॥

इत्युक्त्वाऽथारुहत्स्वर्गं नारदः सहतुम्बुरुः ।
युधिष्ठिरो वचस्तस्य हृदि कृत्वाऽजहाच्छुचः ॥ ६० ॥

॥ इति श्रीमद्भागवते द्वादशोऽध्यायः ॥

---

उटजेन पर्णशालया सह वर्तमानः सहोटजः । तस्मिन् प्रवेक्ष्यति प्राविशत् । साध्वीशब्देन कुन्ती च । साग्निमाविशत्[1] । तस्मात् उत्तमगतिं प्रापान् तान् प्रति परलोकमुद्दिश्य न शोचितव्यमिति भावः ॥ ५८ ॥

प्रत्यक्षज्ञस्य विदुरस्य धृतराष्ट्रवनप्रवेशात् उपरितनाचरणप्रकारमाह– विदुर इति । सर्वज्ञो विदुरः दिव्यज्ञानेन भविष्यदाश्चर्यं धृतराष्ट्रपाण्डवयादवानां स्वर्निर्याणं निशाम्य हरिसान्निध्यस्मरणेन बन्धुमरणस्मरणेन च हर्षशोकान्वितः 'सर्वमनित्यं ईश एव नित्यः ततः तीर्थयात्रादिरत्त्वेवैव पुरुषार्थप्रदेऽत्यतः कारणात् तीर्थनिषेवको गन्ता । गङ्गादितीर्थानां भागवतादिशास्त्राणाञ्च सेवनाय ययौ । तुशब्दो गन्तेति लुटो भूतार्थत्वभेदमाह । 'तुः स्याद्भेदेऽवधारणे' इत्यभिधानात् । स च पुनः धृतराष्ट्रपरिसरनागतो भवंस्तु[3] धृतराष्ट्रादिदिदृक्षया वनं गतेषु भवन्तं प्रविश्य एकत्वमागतो हि । तस्मात् न तस्य गतिर्मया वर्णनीयेति भावः । पुरा दिदृक्षार्थं वनमागतेषु पाण्डवेषु राजानं प्रविश्यैकत्वमागतः इति स्कान्दकथितार्थभेदे वा वर्तत इति तुशब्दः ॥ ५९ ॥

सतुम्बुरुरिति वक्तव्ये सहतुम्बुरुरिति नारदः सर्वदा तुम्बुरुणा सहैव वर्तते, न तं विहायेति द्योतनार्थः । कुन्त्यादिविषयाः शुचः ॥ ६० ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
प्रथमस्कन्धे द्वादशोऽध्यायः ॥

---

१ सा चाग्निम् - ङ । २ उत्तर - कोशान्तरेषु सर्वत्र पाठः । ३ अयं ङ छ ट पाठः । अ... - पूर्वतना ।
४ भगवत् - कोशान्तरेषु सर्वत्र पाठः ।

सूत उवाच —

सम्प्रस्थिते द्वारकायां जिष्णौ बन्धुदिदृक्षया ।
ज्ञातुं मायामनुष्यस्य वासुदेवस्य चेहितम् ॥ १ ॥

व्यतीताः कतिचिन्मासास्तदा तु शतशो नृपः ।
ददर्श घोररूपाणि निमित्तानि भृगूद्वह ॥ २ ॥

कालस्य च गतिं रौद्रां विपर्यस्तर्तुधर्मिणः ।
पापीयसीं नृणां वार्तां क्रोधलोभानृतात्मनाम् ॥ ३ ॥

---

दुर्निमित्तादिसंसारयात्राप्रतिपादनात् तस्यानित्यत्वज्ञापनेन हरौ परा भक्तिर्जायते इत्यतस्त-न्निरूप्यते[1]ऽस्मिन्नध्याये । तत्र 'अवशेषं प्रतीक्षत' इत्युक्तयदुकुलसंहारकथनपूर्वकं श्रीकृष्णस्य स्वधामप्राप्ति वक्तुमुपक्रमते- संप्रस्थित इति । नारदोक्तपरामर्शेन वीतशोकतया राज्यं पालयन्नृपः स्वानुमतेन जिष्णौ अर्जुने द्वारकायां स्थितानां बन्धूनां दर्शनेच्छया मायया इच्छया गृहीतमनुष्यवेषस्य वासुदेवस्य ईहितं चेष्टितञ्च ज्ञातुं द्वारकां प्रति सम्प्रस्थिते गते सति ॥ १ ॥

यदा कतिचिन्मासाः दिवसाः व्यतीताः अतिक्रान्ताः तदा शतशः सहस्राणि घोररूपाणि भयङ्करापदर्शकानि[2] निमित्तानि आध्यात्मिकाधिभौतिकाधिदैविकानुत्पातान् ददर्शेत्यन्वयः । 'अहस्तु मासशब्दोक्तं यत्र चिन्तायुत व्रजेत्' इत्यभिधानं तुशब्देन गृहीतम् ॥ २ ॥

उत्पातं दृष्ट्वा किं चकार नृप इति तत्राह—कालस्येति । कालगत्यादिकं दृष्ट्वा नृपः अनुजं भीमसेनं इत्यभाषतेत्यन्वयः[3] । विपर्यस्ताः व्यत्यस्ताः वसन्तादीनां ऋतूनां धर्माः पुष्पोद्गमाः अस्य सन्तीति विपर्यस्तर्तुधर्मी । तस्य कालस्य । रौद्रामित्यपाठात्[4] गतेरपरिहार्यत्वं वक्ति । क्रोधा-दिष्वात्मा मनो येषां ते तथोक्ताः तेषां नृणां वार्तां श्रुत्वा जीवनोपायप्रवृत्तिं पापीयसीं पापभूयिष्ठां दृष्ट्वा ॥ ३ ॥

---

१. इत्यर्थो निरूप्यते - क ग घ ङ ज ट ठ ।
२. अयं ग पाठः । भयंकराणि - क । भयंकरापद्दर्शनकराणि - घ ङ ज ट ठ ढ ।
३. इत्थमभाषत - ङ ४. रौद्रामिति पाठात् - क छ । रौद्रामिति पदात् - ङ ट ।

जिह्मप्रायं व्यवहृतं शाठ्यमिश्रञ्च सौहृदम् ।
पितृमातृसुहृद्भ्रातृदम्पतीनाञ्च कल्कितम् ॥ ४ ॥
निमित्तान्यप्यरिष्टानि काले त्वनुगते नृणाम् ।
लोभाद्यधर्मप्रकृतिं दृष्ट्वोवाचानुजं नृपः ॥ ५ ॥
युधिष्ठिर उवाच—
सम्प्रेषिते द्वारकायां जिष्णौ बन्धुदिदृक्षया ।
ज्ञातुञ्च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ॥ ६ ॥
गताः सप्ताधुना मासा भीमसेन तवानुजः ।
नायाति कस्य वा हेतोर्नाहं वेदेदमञ्जसा ॥ ७ ॥
अपि देवर्षिणाऽऽदिष्टः स कालः प्रत्युपस्थितः ।
यदात्मनोऽङ्गमाक्रीडं भगवानुत्सिसृक्षति ॥ ८ ॥

---

व्यवहृतं हानोपादानादिव्यवहारं जिह्मप्रायं कपटप्रचुरं सौहृदं स्नेहं शाठ्यमिश्रं स्वप्रयोजनोपेतम् । पित्रादीनां कल्कितां कलङ्कितां[1] कलहं वा ॥ ४ ॥

अरिष्टानि अशुभानि । 'अरिष्टं पापशुभयोः' 'अरिष्टमशुभेऽपि निर्दिष्टं' इत्यभिधानात्[2] । इष्टनपि[3]शब्देनाग्राहि । पूर्वकालवैलक्षण्यद्योतकस्तुशब्दः । लोभादिना अधर्मस्वभावम् ॥ ५ ॥

अत्रापि मासाः दिवसाः । अहं अञ्जसा इदं कारणं न वेद । त्वमिदं वेत्थ किमिति वाक्यशेषः ॥ ७ ॥

आत्मनः स्वस्य आक्रीडं क्रीडास्थानम् । अङ्गं भूमिम् । 'यस्य पृथिवी शरीर'मित्यादेः । यत् यदा । देवर्षिणा नारदेन 'यूयं तावदवेक्षध्वमि'ति निर्दिष्टः स कालः प्रत्युपस्थितः आसन्नः अपि किम् ॥ ८ ॥

---

१ अयं ख ङ पाठः । अन्यत्र - कलङ्कताम् ।
२ अयं ख ग घ ङ ट पाठः । अन्यत्र - अरिष्टममशुभेऽपि चेत्यभिधानम् ।
३ इष्टमिति ग ङ छ कोशपाठः । अन्यत्र नास्ति ।

येषां नः सम्पदो राज्यं दाराः प्राणाः कुलं प्रजाः ।
आसन्सपत्नविजयो लोकाश्च यदनुग्रहात् ॥ ९ ॥
पश्योत्पातान्नरव्याघ्र भौमान्दिव्यान्सदैहिकान् ।
घोरमाशंसतोऽदूराद्भयं नो बुद्धिमोहनम् ॥ १० ॥
ऊर्वक्षिबाहवो मह्यं स्फुरन्त्यङ्ग पुनः पुनः ।
वेपथुश्चापि हृदये आराद्दास्यन्ति विप्रियम् ॥ ११ ॥
शिवैषोद्यन्तमरुणमभिरौत्यनलानना ।
मामङ्ग सारमेयोऽयमिभिरौत्यभीतवत् ॥ १२ ॥
शस्ताः कुर्वन्ति मां सव्यं दक्षिणं पशवोऽपरे ।
वाहांश्च पुरुषव्याघ्र लक्षये रुदतो मम ॥ १३ ॥

---

यस्य कृष्णस्य अनुग्रहात् येषां अस्माकं सम्पदादयः आसन् । तेषां नः सः कालः आसन्न इत्यन्वयः । दाराः भार्याः । सपत्नानां शत्रूणां विजयः । लोकाः स्वर्गादयः । प्रजाः पुत्राः ॥ ९ ॥

कुत आशङ्कस इति तत्राह–पश्येति । दिव्यान् सूर्यपरिवेषादीन्[1] । भौमान् भूकम्पादीन् । देहे भवाः दैहिकाः नेत्रोरुस्फुरणादयः तैः सह वर्तमानाः सदैहिकाः तान् । इति त्रिविधान् अदृष्टव्यतिरिक्तकारणशून्यान् अशुभसूचकान् उत्पातान् पश्येत्यन्वयः । कीदृशान् ? बुद्धिमोहनं भयं अदूरात् इदानीमेव आशंसतः कथयतः । तस्मादाशङ्क इति भावः ॥ १० ॥

दैहिकान् वक्तीत्याह- ऊर्वक्षीति । ममोरुसङ्गादयः पुनः पुनः स्फुरन्ति कम्पन्ते । एते आरात् क्षिप्रं विप्रियं मह्यं दास्यन्तीत्यन्वयः ॥ ११ ॥

अनलो अग्निः आनने यस्याः सा तथोक्ता । मुखादग्निज्वालामुद्गिरन्तीत्यर्थः । एषा शिवा शृगाली[4] उद्यं गच्छन्तं अरुणं आदित्यं अभिमुखं रौति रटति । रटै सृगालाक्रोशे काकाह्वाने च । सारमेयः श्वा ॥ १२ ॥

शस्ताः भारद्वाजादयः मां सव्यं अप्रदक्षिणं अपरे पशवो वेसरगर्दभादयः मां प्रदक्षिणं कुर्वन्ति । वाहान् अश्वादींश्च रोदनं कुर्वतः मनसा निरूपयामि ॥ १३ ॥

---

१ अ ग घ पाठः । अन्यत्र सूर्यप्रकाशादीन् । २ ठकोशं विहायान्यत्र सर्वत्र दृष्टेति पाठः ।
३ आदित्यन् - ङ ट कोशौ मूलकोशं च विहायान्यत्र पाठः । ४ सृगालः - ख ड ।
५ रु इतिपाठेन भाव्यमिति भाति । ६ ऽ शस्त - ख ।

मृत्युदूतः कपोतोऽग्नावुलूकः कम्पयन्मनः ।
प्रत्युलूकश्च हुङ्कारैरनिद्रौ शून्यमिच्छतः ॥ १४ ॥

धूम्रा दिशः परिधयः कम्पते कुः सहाद्रिभिः ।
निर्घातश्च महांस्तात साकञ्च स्तनयित्नुभिः ॥ १५ ॥

वायुर्वाति खरस्पर्शो रजसा विसृजंस्तमः ।
असृग्वर्षन्ति जलदाः बीभत्समिव सर्वतः ॥ १६ ॥

सूर्यं हतप्रभं पश्य ग्रहमर्दं मिथो दिवि ।
ससङ्कुले तु भगणे ज्वलिते इव रोदसी ॥ १७ ॥

---

मृत्युदूतः मरणसूचकः कपोतः शिकाकणाशनपक्षी अग्नौ पदं करोति । 'यत्कपोतः पदमग्नौ कृणोति' इति मन्त्रात् । इदं स्वप्नदर्शनमिति ज्ञातव्यम् । मे मनः कम्पयन् उलूकः प्रत्युलूकश्च मिथः हुङ्कारैः जगच्छून्यमिच्छतः । सर्वनाशे यथा तथा ह्वानं कुरुत इत्यर्थः । कुह्वानैरिति[1] केचित्पठन्ति । कुह्वानं नाम तज्जातिध्वनिविशेषः ॥ १४ ॥

परिधयः दिशः धूम्राः धूम्रवर्णाः ज्वलिताः । परिवेषा वा । स्तनयित्नुभिः अशनिभिः अकालमेघैर्वा साकं महान् निर्घातः निर्मेघगर्जनम् । चशब्दस्त्वपकर्षकालमाह[4] ॥ १५ ॥

वायुः शंसत्यपकर्षकालमित्याह-वायुरिति । रजसा धूल्या तमोऽन्धकारं विसृजन् निष्ठुरस्पर्शः वायुः वाति । अथ दिव्यानाह-असृगिति । जलदाः सर्वतो दिशं बीभत्समिव भीषकमिव असृक् रुधिरं वर्षन्ति ॥ १६ ॥

दिवि व्योम्नि परस्परं ग्रहमर्दं ग्रहयुद्धम् । भगणे नक्षत्रसमूहे ससङ्कुले साङ्कर्यसहिते । भावप्रधानत्वद्योतनाय ससङ्कुल इत्युक्तम् । तेनातिभयप्रापकत्वमाह । तुशब्देन एवञ्चेदेवं स्यादिति ज्योतिःशास्त्रं प्रमाणीकरोति । रोदसी द्यावापृथिव्यौ ज्वालाकुले इव भातः ॥ १७ ॥

---

१ कुह्वानमिति - क ग घ ङ ञ ट ठ ।

२ दिश इति स्थाने दीप्ता इति श्लोकपाठः क्वचिद् दृश्यते । युक्तश्च । परिधिशब्दव्याख्यारूपो दिश इति शब्दो हि टीकायामस्ति । ज्वलिता इति टीकायाः मूले व्याख्येयं पदं नास्ति । दीप्ता इति पाठे तु न कोऽपि दोषः ।

३ श्लोकान्तरं तु आसीदिति पाठः । सोऽनुपपन्नः । यादृपत्ये भवतीति शेषपूरणं दृश्यते ।

४ मूलकोशं श्लोकं च विहायान्यत्रेदं वाक्यं नास्ति ।

५ अयं ख पाठः । अन्यत्र - तेनापि ।

नद्यो नदाश्च क्षुभिताः सरांसि च मनांसि च ।
न ज्वलत्यग्निराज्येन कालोऽयं किं विधास्यति ॥ १८ ॥
न पिबन्ति स्तनं वत्साः न दुह्यन्ति च मातरः ।
रुदन्त्यश्रुमुखा गावो न हृष्यन्त्यृषभा व्रजे ।
दैवतानि रुदन्तीव स्विद्यन्ति ह्युच्चलन्ति च ॥ १९ ॥
इमे जनपदाः ग्रामाः पुरोद्यानकराश्रमाः ।
भ्रष्टश्रियो निरानन्दाः किमघं दर्शयन्ति नः ॥ २० ॥
मन्य एतैर्महोत्पातैर्नूनं भगवतः पदैः ।
अनन्यपुरुषश्रीभिर्हीना भूर्हतसौभगा ॥ २१ ॥
इति चिन्तयतस्तस्य दृष्टारिष्टेन चेतसा ।
राज्ञः प्रत्यागमद्ब्रह्मन्यदुपुर्याः कपिध्वजः ॥ २२ ॥

---

पुनश्च भौमानाह नद्य इति । स्वर्णद्यादीनां[1] दिव्यत्वसंग्रहार्थं अत्र नापाठि[2] । नदाः पुन्नद्यः शोणादयः । क्षुभिताः निमित्तमन्तरेण कलुषाः । नित्यं आज्येन ज्वलनस्वभावो वह्निः आज्येन न ज्वलतीति यस्मात् अतोऽयं कालः किं अमलं विधास्यति ? ॥ १८ ॥

व्रजे गोष्ठे अश्रु मुखे यासां ताः तथोक्ताः । न हृष्यन्ति नोऽविष्किरन्ति[3] तटाघातं न कुर्वन्तीत्यर्थः । दैवतानि प्रतिमाः । रोदनादौ यो भावः तं कुर्वन्ति ॥ १९ ॥

भ्रष्टश्रियः । अत एव निरानन्दाः । समृद्धिरहिताः सुखमुक्ता वा । अघं व्यसनम् ॥ २० ॥

एषां उत्पातानां फलं स्वयमेवानुमिनोतीत्याह- मन्य इति । एतैः महोत्पातैः प्रायेण यादवेन्द्रस्य भगवतः पदैः हीना त्यक्ता अत एव हतसौभगा भूः महीति मन्ये । कथंभूतैः पदैः ? अनन्यपुरुषश्रीभिः नान्ये पुरुषाः स्त्रियश्च सौन्दर्ये साम्ये आविषये च वर्तन्ते येषां तानि अनन्यपुरुषश्रीणि तैः । दीर्घः छान्दसः । अनन्यैः भगवदेकशरणैः पुरुषैः स्त्रीभिश्च हीनेति वा ॥ २१ ॥

दृष्टारिष्टेन दृष्टाशुभेन व्यसनमनुमिमानेन चेतसा तस्य युधिष्ठिरस्य राज्ञः इति चिन्तयतः, अर्जुनं प्रति कथयतश्च सतः इति शेषः । कपिध्वजः अर्जुनः यदुपुर्याः द्वारकायाः हस्तिनपुरं प्रत्यागमदित्यन्वयः ॥ २२ ॥

---

१ स्वर्णद्यादीनां - ङ ।  २ अत्रापाठि - ख ङ ।  ३ नावष्किरन्ति - ख ।

तं पादयोर्निपतितमयथापूर्वमातुरम् ।
अधोवदनमब्बिन्दून्मुञ्चन्तं नयनाब्जयोः ॥ २३ ॥

विलोक्योद्विग्नहृदयो विच्छायमनुजं नृपः
पृच्छति स्म सुहृन्मध्ये संस्मरन्नारदेरितम् ॥ २४ ॥

युधिष्ठिर उवाच—

कच्चिदानर्तपुर्यां नः स्वजनाः सुखमासते ।
मधुभोजदशार्हार्हसात्वतान्धकवृष्णयः ॥ २५ ॥

शूरो मातामहः कच्चित्स्वस्त्यास्ते चाथ मारिषः ॥
मातुलः सानुजः कच्चित्कुशल्यानकदुन्दुभिः ॥ २६ ॥

सप्तस्वसारः तत्पत्न्यो मातुलान्यः सहात्मजाः ॥ न्यः
आसते सस्नुषा क्षेमं देवकीप्रमुखा स्त्रियः ॥ २७ ॥

---

अयथापूर्वं पूर्वं यथा तथा न भवतीति तत् । आतुरं सम्भ्रान्तं रोगिकल्पं वा । अधोवदनं अवाङ्मुखम् । अब्बिन्दून् जलबिन्दून् ॥ २३ ॥

विच्छायं विगतश्रीकम् । अनुजं निरीक्ष्य उद्विग्नहृदयः त्वरितमना पृच्छति स्म । अपृच्छदित्यन्वयः ॥ २४ ॥

आनर्तपुर्यां द्वारवत्याम् । मधवश्च भोजाश्च दशार्हाश्च अर्हाश्च सात्वताश्च अन्धकाश्च वृष्णयश्च मधुभोजदशार्हार्हसात्वतान्धकवृष्णयः ॥ २५ ॥

मारिषः आर्यः । मातामहः मातुः पिता । मातुलः मातुः सहोदरः । आनकदुन्दुभिः वसुदेवः । कच्चिच्छब्दः प्रश्नार्थे । कुशली सुखी ॥ २६ ॥

वसुदेवस्य सप्तस्वसारः सहोदर्यः कुशलवत्यः किम् ? तस्य वसुदेवस्य पत्न्यः अस्माकं मातुलान्यः मातुलभार्याः आत्मजैः सह वर्तमानाः । अनेन तत्पुत्राणाञ्च कुशलप्रश्नः कृत इति ज्ञातव्यम् । स्नुषाभिः पुत्रभार्याभिः सहिताः ॥ २७ ॥

कच्चिद्राजाहुको जीवत्यसत्पुत्रोऽस्य चानुजः ।
हृदीकः ससुतोऽक्रूरो जयन्तगदसारणाः ॥ २८ ॥

आसते कुशलं कच्चिद्ये च शत्रुजिदादयः ।
कच्चिदास्ते सुखं रामो भगवान्सात्वतां पतिः ॥ २९ ॥

प्रद्युम्नः सर्ववृष्णीनां सुखमास्ते महारथः ।
गम्भीररयोऽनिरुद्धो वर्तते भगवानुत ॥ ३० ॥

सुषेणश्चारुदेष्णश्च साम्बो जाम्बवतीसुतः ।
अन्ये च कार्ष्णिप्रवराः सपुत्राः ऋषभादयः ॥ ३१ ॥

तथैवानुचराः शौरेः श्रुतसेनोद्धवादयः ।
सुनन्दनन्दशीर्षण्या ये चान्ये सात्वतर्षभाः ॥ ३२ ॥

---

असन् दुष्टः पुत्रः कंसनामा यस्य सः असत्पुत्रः । आहुकः उग्रसेनः । अस्य उग्रसेनस्य अनुजः देवकः । ससुतः कृतवर्माख्यपुत्रसहितः हृदीकः[1] । पुत्रैः सहितोऽक्रूरो वा ॥ २८ ॥

ये शत्रुजिदादयः ते च सुखमासते किम्? । रामो बलभद्रः ॥ २९ ॥

सर्ववृष्णीनां मध्ये महारथः । गम्भीररयः उग्रवेगः । अगाधज्ञानो वा । रय गतौ, गतिर्ज्ञानम् ॥ ३० ॥

कार्ष्णीनां कृष्णसुतानां प्रवराः कार्ष्णिप्रवराः॥ ३१ ॥

श्रुतसेनोद्धवादयः शौरेः अनुचराः भृत्याः । सुनन्दनन्दौ शीर्षण्यौ प्रधानौ येषां ते सुनन्दनन्दशीर्षण्याः । सुनन्दनन्दप्रधाना इत्यर्थः । सुनन्दनन्दशीर्षाद्या इति पाठे सुनन्दो नन्दशीर्षश्च आद्यौ येषां ते तथोक्ताः इति योजनीयम् । शीर्षशब्दः प्रधानवाची । पार्षदेषु प्रधानौ सुनन्दनन्दौ अद्यौ येषां ते तथोक्ता इति वा ॥ ३२ ॥

---

१ अयं क पाठः । अन्यत्र श्लोके हृषीक इति, टीकायां च हृदिक इति पाठः । ग छ ज कोशेषु उभयत्र हृदिक इत्येव पाठः ।

अपि स्वस्त्यासते सर्वे रामकृष्णभुजाश्रयाः ।
अपि स्मरन्ति कुशलमस्माकं बद्धसौहृदाः ॥ ३३ ॥

भगवानपि गोविन्दो ब्रह्मण्यो भक्तवत्सलः ।
कच्चित्पुरे सुधर्मायां सुखमास्ते सुहृद्वृतः ॥ ३४ ॥

मङ्गलाय च लोकानां क्षेमाय च भवाय च ।
आस्ते यदुकुलाम्भोधावाद्योऽनन्तसखः पुमान् ॥ ३५ ॥

यद्बाहुदण्डैर्गुप्तायां स्वपुर्यां यदवोऽर्चिताः ।
क्रीडन्ति परमानन्दं महापौरुषिका इव ॥ ३६ ॥

यत्पादशुश्रूषणमुख्यकर्मणा
सत्यादयो द्व्यष्टसहस्रयोषितः ।
निर्जित्य सङ्ख्ये त्रिदशांस्तदाशिषो
हरन्ति वज्रायुधवल्लभोचिताः ॥ ३७ ॥

---

सुधर्मायां सभायाम् । ब्रह्मणा वेदेन गम्यत इति ब्रह्मण्यः । विप्रप्रियो वा । नित्यसुखस्य हरेः कुशलोद्देशो[1] न नै प्रश्नः किन्तु लोकसुखकरत्वं देश इत्ययमर्थोऽपिशब्देन दर्शितः ॥ ३४ ॥

एतमेवार्थं दर्शयति– मङ्गलायेति ।

यदवो यस्य कृष्णस्य बाहुदण्डैः रक्षितायां स्वपुर्यां क्रीडन्तीत्यन्वयः । क इव ? परमानन्दं प्राप्य महापौरुषिका[2] इव मुक्ता इव । परमानन्दापरपर्यायं वैश्रवणबाहुदण्डगुप्तं चैत्ररथं प्राप्य महापौरुषिका यक्षा इवेति वा[3] ॥

यस्य हरेः पादयोः शुश्रूषणं सेवालक्षणं तदेव मुख्यं कर्म तेन साधनेन सत्यादयः सत्यभामापुरःसराः द्व्यष्टसहस्रयोषितः षोडशसहस्रसङ्ख्याः[4] स्त्रियः सङ्ख्ये युद्धे त्रिदशान् इन्द्रादीन् निर्जित्य वज्रायुधस्य इन्द्रस्य वल्लभायाः शच्याः उचिताः तदाशिषः तेषां इन्द्रादीनां आशिषः पारिजातादिकाः हरन्ति आच्छिद्य स्वीकुर्वन्तीत्यन्वयः ॥

---

१ कुशलोद्देशो इति कोशान्तरपाठः । २ महा पूरुषिका - ख ढ
३ यक्षा इव वा - क घ ज ट ४ संख्याकाः - घ

यद्बाहुदण्डाभ्युदयानुजीविनो
यदुप्रवीराः ह्यकुतोभयाः मुहुः ।
अधिक्रमन्त्यङ्घ्रिभिराहृतां बलात्
सभां सुधर्मां सुरसत्तमोचिताम् ॥ ३८ ॥
कच्चित्तेऽनामयं तात भ्रष्टतेजा विभासि मे ।
अलब्धमानोऽवज्ञातः किं वा तात चिरोषितः ॥ ३९ ॥
कच्चिन्नाभिहतो भावैः शब्दादिभिरमङ्गलैः ।
न दत्तं युक्तमर्थिभ्यः आशया यत्प्रतिश्रुतम् ॥ ४० ॥

---

यस्य हरेः बाहुदण्डानां अभ्युदयो दिग्विजयश्रीः तां अनुजीवितुं शीलाः अत एवाकुतोभयाः यदुप्रवीराः सुरसत्तमस्य इन्द्रस्य उचितां बाहुबलात् आहृतां आनीतां सुधर्माख्यां सभां अङ्घ्रिभिः अनुदिनं अधिक्रमन्ति आक्रम्य तिष्ठन्तीत्यन्वयः ॥

[1]सः अनन्तः शेषः सखा यस्य सः अनन्तसखः । आद्यः पुमान् । लोकानां मङ्गलाय शुभाय क्षेमाय प्राप्तपरिपालनाय भवाय वृद्धये यदुकुलसमुद्रे आस्ते कच्चिदित्यन्वयः । चशब्दाः मिथःसमुच्चयार्थाः मङ्गलाद्यनेकप्रयोजनार्थाः वा[2] ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

तव किमेतादृशदुःखनिमित्तमिति पृच्छतीत्याह- कच्चिदिति । हे तात ते तव अनामयं कच्चित् सुखं किम् । कुतः कुशलप्रश्न इति तत्राह- भ्रष्टतेजा इति । भ्रष्टतेजस्त्वे कारणं पृच्छति- अलब्धेति । अलब्धो मानो येन सः तथोक्तः । न केवलं मानलाभाभावः । किन्तु अवज्ञातश्च किमित्याह- अवज्ञात इति । पूर्वं चिरोषितोऽद्य किं वा क्षिप्रमागतः । तद् ब्रूहीत्यर्थः ॥ ३९ ॥

अवज्ञा च इङ्गितैः क्रियया वाचा वा स्यात् । तत्र तत्रैकेन, सर्वैः किं वा? इत्यभिप्रेत्य पृच्छति- कच्चिदिति । आदिशब्देनेङ्गितक्रिये गृहीते । शब्दादिभिरवज्ञाने कारणं स्वदोषः परदोषो वा । तत्र स्वदोषो नास्ति हीति पृच्छति- न दत्तमिति । वित्ताशया प्राप्तेभ्योऽर्थिभ्यो युक्तं यं यं वदान्या-मीति प्रतिज्ञातं तत्र दत्तमितीयं[3] स्वदोषात् । दत्त्वापि तदाशापूर्तिपर्यन्तं न दत्तमितीयं परदोषात् । उभयञ्च न प्राप्तं हीति वाक्यार्थः ॥ ४० ॥

---

१ सः अनन्त इत्यादि टीकापंक्तयः ३५ तम श्लोकव्याख्यारूपाः । ख ङ ट ड छ कोशान् विहायान्यत्र ३५ तम श्लोक एव पठ्यन्ते । २ वाकारः ख ङ ट ड कोश पाठः । अन्यत्र नास्ति ।

३ तत्र दत्तं किमितीयं वै - कोशान्तरे सर्वत्र पाठः ।

कच्चित्त्वं न ब्राह्मणं बालं गां वृद्धं रोगिणं स्त्रियम् ।
शरण्योपसृतं सत्त्वं नात्याक्षीः शरणप्रदः ॥ ४१ ॥

कच्चित्त्वं नागमोऽगम्यां गम्यां वाऽसत्कृतां स्त्रियम् ।
पराजितो वाऽथ भवान्नोत्तमैर्नाधमैः पथि ॥ ४२ ॥

अपिस्वित्पर्यभुङ्थास्त्वं सम्भोज्यावृद्धबालकान् ।
जुगुप्सितं कर्म किञ्चित्कृतवानसदक्षमम् ॥ ४३ ॥

कच्चित्प्रेष्ठतमेनाथ हृदयेनात्मबन्धुना ।
शून्योऽस्मि रहितो नित्यं मन्यसे तेऽन्यथा हि रुक् ॥ ४४ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे त्रयोदशोऽध्यायः ।

---

ब्राह्मणादिसत्त्वं जीवजातं शरण्योपसृतं शरणार्थितया प्राप्तं शरणप्रदस्त्वं न अत्याक्षीः रक्षामकृत्वा त्यक्तवानसि? किं अरक्षितैस्तैरवज्ञातः? इति वाक्यार्थः ॥ ४१ ॥

अगम्यां विधवां परस्त्रियं वा गम्यां असत्कृतां स्नानादिसंस्काररहितां प्रदानकर्मरहितां वा स्त्रियं नागमः न गतवानसि किं? इयत्र पार्थ एवंविधं कर्म करोतीति काचित्त्वदोपनिमित्तावज्ञा ॥४२॥

आवृद्धबालकान् वृद्धबालाववधिसर्वान् सम्भोज्य भोजयित्वा[1] पर्यभुङ्थाः भुक्तवानसि[2] किम्? सम्भोज्यानिति पाठे सह भोक्तुं योग्यान् परिवर्जयित्वा भुक्तवानसीत्यर्थः । असत् अक्षमं अकर्तुमशक्यं[3] तादृशं किञ्चित् शास्त्रनिषिद्धं कर्म कृतवान् किम्? एकादशीभोजनं स्वर्णस्तेयं निधानोद्धरणमित्यादि जुगुप्सितं कर्म ॥ ४३ ॥

उक्तं सर्वं विच्छायत्वे न पूर्णमिति मत्वा कारणान्तरं पृच्छति कच्चिदिति । अथ[4] यं नित्यं प्रेष्ठादिगुणवत्त्वेन मन्यसे तेन रहितः प्रेष्ठेन प्रियतमेन हृदयेन मनोहारिणा आत्मबन्धुना स्वाभाविकबन्धुना

---

१ अभोज्य अभोजयित्वा - ङ ज ट । अभोज्य न भोजयित्वा - ट । आभोज्यान् भोजयित्वा - न ।
अभोज्यान् भोजयित्वा - क घ न छ ।

२ भोजनं कृतवानसि - ङ ।

३ ङकोशेऽप्ययमेव पाठः । अन्यत्र - कर्तुमशक्यम् ।

४ अथेति - ग घ च ज कोशान् विहाय सर्वत्र पाठः ।

## अथ चतुर्दशोऽध्यायः

सूत उवाच–

एवं कृष्णसखः कृष्णो भ्रात्रा राज्ञा विकल्पितः ।
नानाशङ्कास्पदं रूपं कृष्णविश्लेषकर्शितः ॥ १ ॥
शोकाग्निशुष्यद्वदनहृत्सरोजं हतप्रभम् ।
विभुं तमेवानुध्यायन्नाशक्नोत्प्रतिभाषितुम् ॥ २ ॥

---

कृष्णेन रहितः वियुक्तः सन् शून्यः अमङ्गलोऽसि कच्चित् । ते तव रुक् शरीरप्रभा अन्यथा न पूर्ववत् हि यस्मात् तस्मात् तेन वियुक्तोऽमङ्गलो भवितुमर्हसीति मन्यसे । नित्यं प्रेष्ठतमेन रहितः शून्योऽस्मीति आत्मानं हृदयेन मन्यसे । सर्वथा तव शरीरकान्तिस्तु अन्यथा न पूर्ववत् इति वा । प्रेष्ठेन तेन रहितः शून्योऽस्मीति मन्यसे अन्यथा तथामननाभावे तव रुक् रोगः मनोऽन्यथा कथमिति वा । त्वं मन्निष्ठत्वात् मत्कनिष्ठत्वाच्च[2] कृष्णप्रेष्ठत्वाच्च[3] लोकशास्त्रनिषिद्धं न करोषि हि । तस्मात्तेन कृष्णेन वियुक्तत्वात्तव विच्छायत्वमिति मन्ये इति हिशब्दार्थः ॥ ४४ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
प्रथमस्कन्धे त्रयोदशोऽध्यायः ॥

* * *

## अथ चतुर्दशोऽध्यायः

भगवति भक्तिविधानार्थं दुःखकथनव्याजेन तन्महिमा प्रतिपाद्यतेऽस्मिन्नध्याये ।

कृष्णस्य विश्लेषेण वियोगेन कर्शितः । उक्तनानाशङ्कायाः आस्पदं शोकाग्निना शुष्यती वदनहृत्सरोजे यस्य तत्तथोक्तम् । अत एव हतप्रभं नष्टकान्ति रूपं आकारं दृष्ट्वा भ्रात्रा राज्ञा विकल्पितः एवं वा नैवं[4] वेति बहुकोटिविषयीकृतः तमेव विभुं अनुध्यायन् निरन्तरं चिन्तयन् कृष्णस्य सखा अर्जुनः प्रतिभाषितुं नाशक्नोदित्येकान्वयः ॥ १ ॥ २ ॥

---

१ अयं ग पाठः । अन्यत्र - मन्ये । २ अयं ग पाठः । अन्यत्र - आत्मैकनिष्ठत्वाच्च ।
३ चकारो नास्ति – ङ । ४ वानेवं - ङ । एवं वा एवं वा - क घ ठ ।

कृच्छ्रेण संस्तभ्य शुचः पाणिनाऽऽमृज्य नेत्रजम् ।
पारोक्ष्येण समुन्नद्धप्रणयौत्कण्ठ्यकातरः ॥ ३ ॥

सख्यं मैत्रीं सौहृदं च सारथ्यादिषु संस्मरन् ।
नृपमग्रजमित्याह बाष्पगद्गदया गिरा ॥ ४ ॥

अर्जुन उवाच–

वञ्चितोऽहं महाराज हरिणा बन्धुरूपिणा ।
येन मेऽपहृतं तेजो देवविस्मापनं महत् ॥ ५ ॥

यस्य क्षणवियोगेन लोको ह्यप्रियदर्शनः ।
उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा ॥ ६ ॥

---

शोकहेतूनामनेकत्वात् बहुवचनं — शुचः शोकान् । कृच्छ्रेण संस्तभ्य, पाणिना नेत्रजमश्रु आमृज्य कृष्णस्य पारोक्ष्येणाप्रत्यक्षत्वेन समुन्नद्धेन समृद्धेन[1] प्रणयेन कदानु पश्येयमित्यौत्कण्ठ्येन कातरो विवशः ॥ ३ ॥

सारथ्यादिषु कर्मसु सख्यादिकं सम्यक् स्मरन्नर्जुनः बाष्पेण निमित्तेन गद्गदया स्खलन्त्या गिरा अग्रजं नृपं, इति वक्ष्यमाणप्रकारेण, आहेत्येकान्वयः ॥ ४ ॥

देवानपि विस्मापयतीति देवविस्मापनम् । महत् तेजः सामर्थ्यलक्षणं येन कृष्णेन अपहृतं सहैव नीतं तेन बन्धुरूपिणा प्रधानबन्धुना हरिणा अर्जुनोऽहं वञ्चित इत्येकान्वयः । वञ्चित इति हरौ न दोष आरोप्यते । किन्तु तेन वियुक्त इति तद्वियोगमात्रम् । वियोगोऽपि गृहीतमानुषाकारेण[2] । न साक्षात्, सर्वदा[3] हृदि सन्निहितत्वात्तस्येत्यभिप्रायेण बन्धुरूपिणेत्युक्तम् । तस्माच्छोकाच्छून्योऽस्मीति भावः ॥ ५ ॥

पुनरर्थं सदृष्टान्तमाह–यस्येति । यथा उक्थेन प्राणेन रहितः एष देहः मृतकः कुणप इति प्रोच्यते । तथा यस्य कृष्णस्य क्षणवियोगेन लोकोऽपि अप्रियं अमङ्गलं पश्यतीति अप्रियदर्शनः हि[4]

---

१ समृद्धेनेति ड पाठः । अन्यत्र नास्ति ।

२ गृहीतेन मानुषाकारेण - घ  ३ अयं छ ड पाठः : अन्यत्र - सर्वहृदि ।

४ 'हि' इति ड पाठः । अन्यत्र नास्ति ।

यत्संश्रयाद्द्रुपदगेह उपागतानां
राज्ञां स्वयंवरमुखे स्मरदुर्मदानाम् ।
तेजो हृतं खलु मया विहतश्च मत्स्यः
सज्जीकृतेन धनुषाऽधिगता च कृष्णा ॥ ७ ॥

यत्सन्निधावहमु खाण्डवमग्नयेऽदा-
मिन्द्रञ्च सामरगणं तरसा विजित्य ।
लब्धा सभा मयकृताऽद्भुतशिल्पमाया
दिग्भ्योऽहरन्नृपतयो बलिमध्वरे ते ॥ ८ ॥

---

यस्मात् तस्मात् शून्यत्वमित्यर्थः । प्राणत्यागे पित्रादिशरीरमपि पुत्रादेः अप्रियत्वाद्बहिर्भूमौ निक्षिप्यते यथा, तथा अहमपि बन्धुभिः अप्रियत्वात् अवज्ञातवद्[1] दृष्ट इति भावः । मनायं लोको देहः अप्रियदर्शनो जात इति वा । प्रथमहिशब्देन प्राणवियुक्तदेहस्य कुणपत्वं श्रुतिसिद्धमिति दर्शयति । न केवलमहमेवाप्रियदर्शनः । किन्तु अयं लोको बन्धुजनः द्वारवत्यादिप्रदेशो वा इति वा[2] । उक्थेन पित्रादिना वियुक्त एवं[3] बन्धुजनोऽपीति वा दृष्टान्तयोजना ॥ ६ ॥

'यत्संश्रयात्' 'यत्सन्निधौ' इत्यादि 'यदनुभावनिरस्तचित्ता' इत्यन्तानां श्लोकानां 'तेनाहमद्य मुषित' इति मध्यगतश्लोकेन मध्यकुलकन्यायेनान्वयः । यत्संश्रयात् यस्य कृष्णस्य सेवाबलात् द्रुपदगेहे पाञ्चालपुरे स्वयंवरमुखे स्वयंवरश्रेष्ठे उपागतानां मिलितानां स्मरेण कारणेन जातो दुष्टो मदो येषां ते तथोक्ताः तेषां राज्ञां जरासन्धादीनां तेजः अभिमानलक्षणं मया ईदृशेन हृतं खलु । किञ्च सज्जीकृतेन धनुषा यन्त्रविहितो मत्स्यः विहतः पातितश्च । किञ्च मया कृष्णा द्रौपदी च अधिगता । वेदाध्ययनवदादरेण प्राप्ता इत्येकान्वयः ॥ ७ ॥

यस्य सन्निधौ अहमेव अमरगणैः सह वर्तमानं इन्द्रञ्च तरसा वेगेन बलेन वा विजित्य खाण्डवाख्यं वनमपि याचमानायाग्नये अदां दत्तवानस्मि । अद्भुतानि शिल्पानि स्थले जलप्रत्ययादीनि मायाश्च[4] यस्यां सन्ति सा तथोक्ता मयनाम्ना तक्ष्णा कृता सभा मया लब्धा । यत्सन्निधानविशेषादिति

---

१ अवज्ञात इव दृष्टः - क  २ 'इति वे'ति ङकोशं विहाय अन्यत्र नास्ति ।

३ अयं ख ट पाठः । अन्यत्र - एवं । एव वियुक्तः - ग ।

४ प्रत्ययादिमायाश्च - ङ

यत्सन्निधौ नृपशिरोङ्घ्रिमहन्मखार्थ
आर्योऽनुजस्तव गदायुधसत्त्ववीर्यः ।
तेनाहृताः प्रमथनाथमखाय भूपा
यन्मोचिता भ्युदनयन्बलिमध्वरे ते ॥ ९ ॥

पत्न्यास्तवापि मखक्लृप्तमहाभिषेक-
श्लाघिष्ठचारुकबरं कितवैः सभायाम् ।
स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्यो
यैस्तत्स्त्रियो न्यकृत तत्स विमुक्तकेश्यः ॥ १० ॥

---

योज्यम् । ते तव अध्वरे यत्र राजसूयलक्षणे दिग्भ्यः आगताः नृपतयः बलिं ते तुभ्यं अहरन् ददुरित्यन्वयः ॥ ८ ॥

गदाख्यं आयुधञ्च सत्त्वं हृदयसारञ्च वीर्यं वीरभावश्च, सत्त्वं मानसबलं वीर्यं कायबलं वा यस्य सः गदायुधसत्त्ववीर्यः तवानुजः मम ज्येष्ठो भीमसेनः नृपशिरस्तु आङ्घ्रिः यस्य सः तथोक्तः तं जरासन्धं यत्सन्निधौ अहन् हतवानित्यन्वयः । किमर्थं ? मखार्थं राजसूययज्ञमुद्दिश्य । जरासन्धेन तेन प्रमथनाथमखाय रुद्रमुद्दिश्य पुरुषमेधाख्ययज्ञाय आहृताः गृहीताः येन कृष्णेन मोचिताः, जरासन्धवधेनेति शेषः । भूपाः[२] ते तव अध्वरे बलिं मभ्युदनयन् अभिगम्यानीतवन्त इत्यन्वयः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यत्र अभेरप्युपसङ्ख्यानं कर्तव्यम् ॥ ९ ॥

कुरुसभायां तव पत्न्याः द्रौपद्या अपि राजसूयनाम्नि मखे क्लृप्तेन कृतेन महाभिषेकेण श्लाघिष्ठं अतिशयेन श्लाघ्यं अत एव चारु रुचिरं कबरं केशबन्धनं यैः अक्षकितवैः दुःशासनादिभिः स्पृष्टं यत् तत्कबरं विकीर्य यत्पदयोः पतितायाः तस्याः अश्रुमुख्यः अश्रुप्रधानः यः सः तत्पदयोः पतितत्वादेव, तत्स्त्रियः तेषां कितवानां स्त्रियः भार्याः विमुक्तकेश्यः भीमाविद्धगदाभग्नोरुदण्डान् स्वपतीनालिङ्ग्य रुदतीः विकीर्णकेशपाशाः न्यकृत नितरामकार्षीदित्येकान्वयः । अश्रुशब्दः उभयलिङ्गोऽप्यस्ति धनुश्शब्दवत् ॥ १० ॥

---

१ नायं बहुव्रीहिः । द्वन्द्वोत्तरमत्वर्थीयप्रत्ययार्थानुवादः । २ भूयः - कोशान्तरेषु सर्वत्र ।

यत्तेजसाऽथ भगवान्युधि शूलपाणि-
र्विस्मापितः स गिरिशोऽस्त्रमदान्निजं मे ।
अन्येऽपि चाहममुनैव कलेवरेण
प्राप्तो महेन्द्रभवने महदासनार्धम् ॥ ११ ॥

तत्रैव मे विहरतो भुजदण्डयुग्मं
गाण्डीवलक्षणमरातिवधाय देवाः ।
सेन्द्राः श्रिता यदनुभावितमाजमीढ
तेनाहमद्य मुषितः पुरुषेण भूम्ना ॥ १२ ॥

यद्बान्धवः कुरुबलाब्धिमनन्तपार-
मेको रथेन तरसाऽतरमार्यसत्त्वः ।
प्रत्याहृतं पुरधनञ्च मया परेषां
तेजः परं मणिमयञ्च हृतं शिरोभ्यः ॥ १३ ॥

---

यत्तेजसा यस्य तेजसा युधि वराहनिमित्तयुद्धे विस्मापितः विस्मयं गमितः शूलं पाणौ यस्य सः शूलपाणिः स गिरिशः निजं अस्त्रं पाशुपताख्यं मे मह्यं अदादित्यन्वयः । अन्ये लोकपाला अपि, स्वं स्वं अस्त्रं अदुरिति शेषः । अपि च अर्जुनोऽहं अमुनैव कलेवरेण नान्येन महेन्द्रभवने अमरावत्यां महतो देवेन्द्रस्यासनार्धं प्राप्त इत्येकान्वयः । अथान्यच्च श्रीकृष्णस्य माहात्म्यं वक्ष्यामि विशेषतः इति अथशब्दार्थः ॥ ११ ॥

येन कृष्णेन अनुभावितं प्रवृद्धबलवत्कृतं गाण्डीवज्याघातलाञ्छनं भुजदण्डयुग्मं श्रिताः । के ? इन्द्रेण सह वर्तमानाः देवाः अरातिवधाय निवातकवचनाम्नां शत्रूणां हननाय । कस्य भुजदण्डयुग्मं ? तत्र महेन्द्रभवन एव विहरतः क्रीडमानस्य मे मम ॥ १२ ॥

यस्य बान्धवोऽहं कुरुभिः विराटगोग्रहणे अनन्तपारं अदृश्यतीरान्तरं अनन्तः अपरिच्छिन्नः पारः पूर्तिः यस्य स तथा तं कुरुसेनासमुद्रं रथेन तरसा वेगेन अतरं तीर्णवानस्मीत्यन्वयः । कथंभूतः ? एकोऽसहायः आर्यसत्त्वः पूज्यबलः । किञ्च यद्बान्धवेन मया विराटपुरगोधनञ्च प्रत्याहृतं पुनरानीतम् । तथा परेषां शत्रुभूतानां भीष्मादीनां शिरोभ्यः मणिमयं धनं उष्णीषलक्षणं न केवलं हृतं किन्तु परं केवलं तेजः अभिमानलक्षणं सामर्थ्यमेवापहृतमित्यन्वयः ॥ १३ ॥

---

१ अदद्दुः - ख । ददुः - क ।

यो भीष्मकर्णगुरुशल्यचमूष्वदभ्र-
राजन्यवर्यरथमण्डलमण्डितासु ।
अग्रेचरो मम रथे रथयूथपाना-
मायुर्मनांसि च दृशा सहसा य आर्च्छत् ॥ १४ ॥

यद्दोष्षु मां प्रणिहितं गुरुभीष्मकर्ण-
द्रौणित्रिगर्तशलसैन्धवबाह्लिकाद्यैः ।
अस्त्राण्यमेयमहिमानि निरूपितानि
नोपस्पृशुर्नृहरिदासमिवासुराणि ॥ १५ ॥

यन्मे नृपेन्द्र तदतर्क्यविहार ईशो
यो ऽलब्धरूपमवदद्रणमूर्ध्नि दर्शी ।
यन्मायया ऽऽवृतदृशो न विदुः परं तं
सूत्रादयो ऽहमहमस्मि ममेति भव्याः ॥ १६ ॥

---

राजन्यानां वर्याणां[1] श्रेष्ठानां रथानां मण्डलैः समूहैः मण्डितासु अलङ्कृतासु भीष्मश्च कर्णश्च गुरुश्च शल्यश्च ते तथोक्ताः तेषां सेनापतीनां चमूषु सेनासु मध्ये मम यः रथः तस्मिन् रथे यः अग्रेचरः सारथित्वात्पुरोभागवर्ती तेषामेव रथयूथपानां भीष्मादीनां आयुः मनांसि च सहसा शीघ्रं दृशा दर्शनेन आर्च्छत् अपाहरदित्येकान्वयः । चशब्द एवार्थे । यत् आर्च्छत् तद्दृशैव, नायुधादिना । समुच्चये वा ॥ १४ ॥

गुरुभीष्मादिभिः निरूपितानि प्रयुक्तानि अमेयमहिमानि अचिन्त्यसामर्थ्यानि अस्त्राणि यस्य कृष्णस्य दोष्षु भुजेषु प्रणिहितं निक्षिप्तं मां[2] नोपस्पृशुः न तापं चक्रुरित्यन्वयः । 'स्पृश उपताप' इति धातुः । कानि कमिव ? आसुराणि हिरण्यकशिपुप्रेरितासुरप्रयुक्तानि नृहरिदासं प्रह्लादं यथा न व्यथयन्ति तथेति ॥ १५ ॥

हे नृपेन्द्र दर्शी सर्वज्ञः यः ईशः रणमूर्ध्नि अलब्धरूपं केनाप्यज्ञातपूर्वरूपं मे अवदत् । सूत्रादयः मुख्यप्राणमुखाः देवाः तं न विदुरिति यत् यस्मात् तत् तस्मादीशः अतर्क्यविहारः अचिन्त्यक्रीड

---

१ ङकोशेऽप्ययमेव पाठः । अन्यत्र - राजन्यवर्याणाम् । २ मा मां - ख ङ ।
३ अयं ख ङ पाठः । अन्यत्र - प्रेरितानि असुर । ४ ङकोशेऽप्ययं पाठः । अन्यत्र - नरेन्द्र ।

सौत्ये वृतः कुमतिनाऽऽत्मद ईश्वरो मे
यत्पादपद्ममभवाय भजन्ति भव्याः ।
संश्रान्तवाहमरयो रथिनो भुविष्टं
न प्राहरन्यदनुभावनिरस्तचित्ताः ॥ १७ ॥

नर्माण्युदाररुचिरस्मितशोभनानि
हे पार्थ हेऽर्जुन सखे कुरुनन्दनेति ।
सञ्जल्पितानि नरदेव हृदिस्पृशानि
स्मर्तुर्लुठन्ति हृदयं मम माधवस्य ॥ १८ ॥

---

इत्यन्वय. । लब्धरूपं आनन्दरूपमिति वा । कथंभूताः सूत्रादयः ? यस्य मायया मोहकशक्त्या आवृतदृशः पिहितनेत्राः । नष्टज्ञाना इति यावत् । कथमावृतदृश इति तत्राह— अहमहमिति । भव्याः ज्ञातुं योग्यतावन्तः, सकलमङ्गलरूपा इति वा ॥ १६ ॥

भव्याः मुमुक्षवः यत्पादपद्मं अभवाय मोक्षाय भजन्ति । यस्य श्रीकृष्णस्य अनुभावेन महिम्ना निरस्तं मुग्धं चित्तं येषां ते तथोक्ताः अरयः कर्णादयः मां न प्राहरन् नायुध्यन् । कथंभूताः ? रथिनः रथादियुद्धसाधनोपेताः । किंविशिष्टं मां ? भुविष्टं भूमौ स्थितम् । सम्यक् श्रान्ताः वाहाः अश्वाः यस्य सः तथोक्तः तं. श्रान्तानां वाहानां जलपानाय रथादवरुह्य युद्धसाधनमन्तरेण भूमितले स्थितमित्यर्थः । सोयमीश्वरः[1] कुमतिना मया मे मत्सम्बन्धिनि सौत्ये सारथिकर्मणि वृतः । किंविशिष्टः ? आत्मानं ददातीति आत्मदः । 'य आत्मदा बलदा' इति श्रुतेः । अद्य तेन भूम्ना पुरुषेण मुषितोऽस्मीति परमोऽन्वयः ॥ १७ ॥

हे नरदेव माधवस्य हृदिस्पृशानि मनोहराणि हे पार्थ हे[2] अर्जुनेत्यादीनि गोष्ठ्यां सञ्जल्पितानि नर्माणि परिहासलक्षणानि स्मर्तुः मम हृदयं लुठन्ति परिवर्तन्ते । हृदयान्न निर्गच्छन्ति । कथंभूतानि ? उदारं गम्भीरं रुचिरं यत् स्मितं तेन शोभनानि मङ्गलानि ॥ १८ ॥

---

१ सोयमीश्वर इति ड पाठः । अन्यत्र नास्ति ।

२ हे इति ड पाठः । अन्यत्र नास्ति ।

शय्यासनाटनविकत्थनभोजनादि-
ष्वैक्याद्वयस्य ऋतुमानिति विप्रलब्धः ।
सख्युः सखेव पितृवत्तनयस्य सर्वं
सेहे महामहितया कुमतेरघं मे ॥ १९ ॥

सोऽहं नृपेन्द्र रहितः पुरुषोत्तमेन
सख्या प्रियेण सुहृदा हृदयेन शून्यः ।
अध्वन्युरुक्रमपरिग्रहमङ्ग रक्ष-
न्गोपैरसद्भिरबलेव विनिर्जितोऽस्मि ॥ २० ॥

---

'ममायं कृष्णः वयस्यः । अहमेतादृशेन कृष्णेन समानवयस्कत्वात् ऋतुमान् सखेव ।' इति मत्वे । परमेष्टदैवेन श्रीकृष्णेन शय्यादिष्वैक्यात् तेन वञ्चितः । तादृशबुद्धेस्तदधीनत्वात् । परदेवतया शय्याद्यैक्यं अपराधो हि यस्मात् तस्मात् वञ्चितोऽस्मि । शय्या शयनम् । विकत्थनं गालीवचनम् । स्तवनं वा । तथापि स कृष्णः महतो महित्वेन सख्युः अघं अपराधं सखेव पुत्रस्याघं पितेव कुत्सितबुद्धेर्मे अघं सेहे[1] । मया विप्रलब्धोऽपि वञ्चितोऽपि[2] महामहितया[3] कुमतेः मे अघं सेहे इति वा । शय्यादिषु ऋतुमान् महात्माऽपि विप्रलब्धः तिरस्कृतः । किमिति ? वयस्यः सखेति ऐक्यव्यवहारात् । तथापि महामाहात्म्येन ममापराधं सेहे इति वा ॥ १९ ॥

'शून्योऽस्मी'ति[4] विकल्पं स्पष्टं परिहरतीत्याह सोऽहमिति । हे नृपेन्द्र सख्या जन्मप्रभृति सह वर्तमानेन प्रियेण विषयादिसुखप्रापकेण सुहृदा अनिमित्तबन्धुना हृदयेन अतिस्निग्धेन अतिकान्तेन[7] वा पुरुषोत्तमेन क्षराक्षरमतीत्य वर्तमानेन श्रीकृष्णेन रहितः शून्यः अमङ्गलोऽस्मीत्येकान्वयः । 'येन मे हृतं तेन' इत्येतद्विवृणोति– अध्वनीति । अङ्ग राजन् मार्गे उरुक्रमस्य हरेः परिग्रहं कलत्रं रक्षन् आगच्छन् असद्भिः अप्राधुभिः गोपैः अबला योषेव विनिर्जितोऽस्मि । तस्मात्तेन मत्तेजोऽपहृत-मिति भावः ॥ २० ॥

---

१ सेहे इति ङ पाठः । अन्यत्र नास्ति । २ विसंवादितोऽपि - ङ । ३ महानमहितया - ङ
४ अस्मीति च पाठः । अन्यत्र नास्ति । मूलकोशेषु महात्मतयेति पाठः । ५ शून्योऽस्मीति - क ।
६ एतदनन्तरं पुनरित्यधिकः पाठः कोशान्तरेषु नवेत्र । ७ अयं क पाठः । अन्यत्र - अतिकान्तेन ।

तद्वै धनुस्त इषवः स रथो हयास्ते
सोऽहं रथी नृपतयो यत आमनन्ति[2] ।
सर्वं क्षणेन तदभूदसदीशरिक्तं
भस्मन्हुतं कुहकराद्धमिवोप्तमूष्यां[4] ॥ २१ ॥

राजंस्त्वयाभिपृष्टानां[5] सुहृदां नः सुहृत्पुरे ।
विप्रशापविमूढानां निघ्नतां मुष्टिभिर्मिथः ॥ २२ ॥

वारुणीं मदिरां पीत्वा मदोन्मथितचेतसाम् ।
अजानतामिवात्मानं चतुःपञ्चावशेषिताः ॥ २३ ॥

---

तदेव स्पष्टयति इत्याह[1] तदिति । धनुः तद्वै तदेव । त इषवः तद्दृशाः शराः । स रथ तादृशो रथः । ते हयाः तादृशाः अश्वाः । रथी सोऽहं नान्यः । यतः यस्मै नृपतय आनमन्ति । तत्सर्वं ईशरिक्तं श्रीकृष्णतेजसा विहीनं क्षणेन असत् अशक्तं[3] अप्रयोजकमभूत् । कथमिव? भस्मन् भस्मनि हुतमिव । कुहकेन राद्धं चोरेण सिद्धमिव । ऊषे ऊषरे[4] उप्तमिव । भस्मनि हुतस्य मन्त्रोच्चारणादिना किञ्चित् फलं स्यादित्यतः — कुहकेति । ऐन्द्रजालिकेन कुटुम्बभरणमुद्दिश्य द्रव्याहरणात् तदुज्जीवनेन ऐहिकफलदर्शनादित्यत उक्तं— उप्तमूष इति । न तत्र किञ्चित् बीजं प्ररोहति इत्यभिप्रायेण निदर्शनत्रयमुक्तमिति वेदितव्यम् ॥ २१ ॥

'कच्चिदानर्तपुर्यामि'त्यादिबान्धवकुशलप्रश्नं परिहरतीत्याह— राजन्निति । सुहृत्पुरे द्वारवत्याम् ॥ २२ ॥

नाम्ना वारुणीं वरुणनिर्मितां मदिरां मदकरीं सुरां पीत्वा । अन्यच्च निमित्तमस्तीत्याह— विप्रशापेति । ब्राह्मणशापेन विमूढानां कृत्याकृत्यज्ञानरहितानां अत एवात्मानमजानताम् ॥ २३ ॥

---

१ अयं ङ पाठः । अन्यत्र नास्ति । २ आनमन्ति - ख ।
३ अयं ख ङ ट ड पाठः । अन्यत्र - नाशवत् ।
४ अयं ग ड पाठः । औषे औषरे - ख । ऊषे ऊषरे - क घ ज ठ । उषे उषरे - ङ ट ।
५ अयं ङ ट पाठः । अन्यत्र - त्वयानुपृष्टानाम् ।

प्रायेणैतद्भगवतः ईश्वरस्य विचेष्टितम् ।
मिथो निघ्नन्ति भूतानि भावयन्ति च यन्मिथः ॥ २४ ॥

जलौकसां जले यद्वन्महान्तोऽदन्त्यणीयसः ।
दुर्बलान्बलिनो राजन्महान्तो बलिनो मिथः ॥ २५ ॥

एवं बलिष्ठैर्यदुभिर्महद्भिरितरान्विभुः ।
यदून्यदुभिरन्योन्यं भूभारं सञ्जहार ह ।
कण्टकं कण्टकेनैव द्वयञ्चापीशितुः समम् ॥ २६ ॥

देशकालार्थयुक्तानि हृत्तापोपशमानि च ।
हरन्ति स्मरतश्चित्तं गोविन्दाभिहितानि मे ॥ २७ ॥

---

इदं यादवनिधनमपि श्रीकृष्णकृतमित्यभिप्रेत्य ब्रूते इत्याह– प्रायेणेति । भूतानि मिथो निघ्नन्ति भावयन्ति उत्पादयन्ति चेति यत् तत् ईश्वरस्य भगवतः विशिष्टचेष्टितमिति मन्ये । प्रायःशब्दस्य प्राचुर्यवाचित्वे[1]ऽप्यत्र अवधारणार्थ एव । चशब्दः समुच्चयार्थः ॥ २४ ॥

इममर्थं सोदाहरणं स्पष्टयतीत्याह– जलौकसामिति । जलौकसां यादसां मध्ये महान्तः अणीयसः अणुतरानदन्ति । बलिनः दुर्बलान् भक्षयन्ति । ये महान्तः ये च बलिनः ते मिथः अन्योन्यं भक्षयन्ति [2]यद्वत् यथा । २५ ॥

एवं विभुः बलिष्ठैः महद्भिः यदुभिः इतरान् हत्वा यदुभिरेव यदून् अन्योन्यं हत्वा भूभारं दैत्यकुलं सञ्जहारेत्येकान्वयः । भूभारहरणमेवावतारप्रयोजनमित्येतत् हशब्देनाह । 'यद्बाहुदण्डाभ्युदयानुजीविनः' 'यदून्यदुभिरन्योन्यमि'त्याद्युक्तं पालनं संहरणञ्च हरेर्विषमं ननु इति तत्राह– द्वयमिति । तत्तत्कर्मानुसारिफलदातुरीश्वरस्य आप्तकामस्य तेषां सञ्जीवनं मरणञ्चोभयं सममेव । जीवनेनोपादेयाभावात् मरणेन हान्यभावाच्च । अतः द्वयं न विषममिति भावः ॥ २६ ॥

स्वदुःखकारणं ब्रूते इत्याह– देशेति । देशकालार्थयुक्तानि तत्तद्देशतत्तत्कालतत्तद्वस्तूचितानि हृत्तापोपशमनानि अहङ्काराश्रितसंसारसमुद्रशोषणकारणानि गोविन्दस्य अभिहितानि वचनानि स्मरतो मम चित्तं हरन्तीति यस्मात् तस्मात् तद्रहितत्वेन शोचामीत्येकान्वयः ॥ २७ ॥

---

१ प्राचुर्यार्थं - ड । २ यद्वदिति ख क ट ह पाठः । अन्यत्र नास्ति ।

सूत उवाच—

एवं चिन्तयतो जिष्णोः कृष्णपादसरोरुहम् ।
सौहार्देनातिगाढेन शान्ताऽऽसीद्विमला मतिः ॥ २८ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे चतुर्दशोऽध्यायः ॥

* * *

॥ अथ पञ्चदशोऽध्यायः ॥

सूत उवाच—

वासुदेवाङ्घ्र्यभिध्यानपरिबृंहितरंहसा ।
भक्त्या निर्मथिताशेषकषायधिषणोऽर्जुनः ॥ १ ॥
गीतं भगवता ज्ञानं यत्तत्संग्राममूर्धनि ।
कालकर्मतमोरुद्धं पुनरध्यगमद्विभुः ॥ २ ॥
विशोको ब्रह्मसम्पत्त्या सञ्छिन्नद्वैतसंशयः ।
लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसंभवः ॥ ३ ॥

---

बान्धवनिमित्तस्नेहलक्षणभक्त्यतिशयेन तच्चरणस्मरणफल[1]माह– **एवमिति** । अतिगाढेन अतिशयेन दृढेन । तत्रैवातिशयेन मग्नेन वा । सौहार्देन प्रेमलक्षणभक्तिसाधनेन कृष्णपादपद्मं एवं उक्तप्रकारेण स्मरतः जिष्णोः निर्मला मतिः मननसमर्था बुद्धिः शान्ता सुखपूर्णा पूर्वस्मादतिशयेन भगवन्निष्ठावती आसीदित्येकान्वयः ॥ २८ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां प्रथमस्कन्धे चतुर्दशोऽध्यायः ॥

* * *

नन्वर्जुनस्य नानाविधक्षत्रहत्या[2]तिपापोपरक्तायाः तामस्याः बुद्धेः नैर्मल्यं कथं युज्यते इत्याशङ्क्य जीवन्मुक्तेष्वेकत्वात् भगवदर्पणबुद्ध्या कृतदुष्टक्षत्रहत्यस्य तस्य मतेः नैर्मल्यं युक्तमिति दर्शयति– वासुदेवेति । ब्रह्मसम्पत्त्या ब्रह्मणोऽवगत्या ब्रह्मापरोक्षज्ञानेन विशोकः । तस्मादेव सञ्छिन्नौ निवृत्तौ द्वैतसंशयौ यस्मात् सः तथोक्तः । द्वे इतं द्वीतं द्विधा गतं ज्ञातम् । तस्य भावः द्वैतम् । अन्यथाज्ञानमिति यावत् । संशयः इदं वा अदो वेति उभयकोटिविषयज्ञानम् । विच्छिन्नः जीवब्रह्मविषयः संशयो येनेति वा । लीना अपसारिता प्रकृतिः अहङ्कारात्मिका यस्मात् सः तथोक्तः ; भावप्रधानो निर्देशः ;

---

१ फलमिति ख कोशेऽप्यस्ति । अन्यत्र नास्ति ।  २ अयं ङ पाठः । अन्यत्र अतीति नास्ति ।

निशम्य भगवन्मार्गं संस्थां यदुकुलस्य च ।
स्वःपथाय मतिं चक्रे निवृत्तात्मा युधिष्ठिरः ॥ ४ ॥

यदा मुकुन्दो भगवानिमां महीं
जहौ स्वतन्वा श्रवणीयसत्कथः ।
तदा हरावप्रतिबुद्धचेतसा-
मभद्रहेतुः कलिरन्ववर्तत ॥ ५ ॥

---

तस्मात् लीनप्रकृतित्वात् निर्गतानि सत्वादिगुणकार्याणि यस्मात् सः तथोक्तः तस्य भावो नैर्गुण्यं तस्मात् अलिङ्गत्वात् सूक्ष्मशरीररहितत्वात् । असम्भवः अनारब्धकर्ममूला या पुनरुत्पत्तिः तया वर्जितः । अनारब्धकर्मणां ज्ञानोदयेन नाशात् आरब्धकर्मणामेवोर्वरितत्वात् ज्ञानोदयकाले । एवंभूतः सन्नर्जुनः रणमूर्धनि आरब्धकर्मणा स्वर्नर्मे अधर्मवृद्धये आत्मने भगवता यत् ज्ञानं गीतं उपदिष्टं तत् आरब्धकर्ममूलैः कालकर्मतमोभिः रुद्धं[2] कालेन कर्मणा तमसा चावृतं पुनः अभ्यगमत् अवगतवान् आवर्तितवानित्यन्वयः । कीदृशः? वासुदेवस्य अङ्घ्र्योः अभितः सम्यक् ध्यानेन परितो बृंहितं वृद्धं रंहः वेगः यस्याः सा तथोक्ता । तया भक्त्या निर्मथिताः अशेषाः समूलाः कषायाः पापलक्षणाः रागलक्षणा वा यस्याः सा तथोक्ता निर्मथिताशेषकषाया धिषणा बुद्धिः यस्य सः तथा । अत्र न सर्वारब्धकर्मणां निर्मथनमभिप्रेतम् । किन्तु महता भगवत्कारुण्यादिना कारणेन केषाञ्चिदेव । अन्यथा 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते' 'तस्य तावदेव चिरमि'त्यादि सूत्रश्रुतिविरोधः स्यात् । 'महता कारणेनैव प्रारब्धान्यपि कानिचित् । कर्माणि क्षयमायान्ति ब्रह्मदृष्टिमतः क्वचिदि'त्युक्तत्वाच्च । अतोऽत्राशेषशब्दो निर्मथनयोग्याशेषप्रारब्धविषयः इति भावः ॥ १ ॥ २ ॥ ३ ॥

एवं यादवसंस्थां श्रीकृष्णस्य स्वधामप्राप्तिञ्च अभिधाय पाण्डवस्वर्यागमनुक्रमते निशम्येति । भगवतः श्रीकृष्णस्य स्वधामगमनप्रकारं यदुकुलस्य संस्थां विनाशञ्च श्रुत्वा निवृत्तात्मा राज्यादिभ्यो व्यावृत्तमनाः । नितरां वृत्ते सदाचारे आत्मा यस्येति वा । युधिष्ठिरः कामक्रोधादिजयलक्षणयुद्धे स्थिरः स्वःपथाय स्वर्गमार्गाय वीराध्वने मतिं चक्रे इत्यन्वयः ॥ ४ ॥

स्वर्यानिर्णये कारणमाह– यदेति । यदा श्रवणीयसत्कथः मुकुन्दः स्वतन्वा स्वाभिन्नया मूर्त्या इमां महीं जहौ त्यक्तवान् तदा हरौ अप्रतिबुद्धचेतसां हरिविषयप्रबोधरहितबुद्धीनां पुंसां अभद्रहेतुः पापकारणं कलिः अन्ववर्ततेत्यन्वयः ॥ ५ ॥

---

१ स्वात्मने - ड । २ अयं क ज पाठः । अन्यत्र - तमोऽन्धम् ।

युधिष्ठिरस्तत्परिसर्पणं बुधः
पुरे च राष्ट्रे च गृहे तथात्मनि ।
विभाव्य लोभानृतजिह्महिंसना-
द्यधर्मचक्रं गमनाय पर्यधात् ॥ ६ ॥

स्वराट् पौत्रं विनीतन्तमात्मनोऽनवमं गुणैः ।
तोयनीव्याः पतिं भूमेरभ्यषिञ्चद्गजाह्वये ॥ ७ ॥

मथुरायां ततो वज्रं शूरसेनपतिं ततः ।
प्राजापत्यां निरूप्येष्टिमग्नीनपिबदीश्वरः ॥ ८ ॥

विसृज्य तत्र तत्सर्वं दुकूलवलयादिकम् ।
निर्ममो निरहङ्कारः सञ्छिन्नाशेषबन्धनः ॥ ९ ॥

---

बुधः विवेकज्ञानी युधिष्ठिरः राज्ये पुरे च गृहे भार्यादौ च तथा आत्मनि स्वस्मिंश्च तस्य कलेः परितः सर्पणं व्याप्तिं विभाव्य ज्ञात्वा कलिव्याप्तिमूलं लोभाद्यधर्मसमुदायञ्च विज्ञाय गमनाय वीराध्वयात्रायै[1] पर्यधात् निश्चितवानित्येकान्वयः । 'प्रणिधानन्तु निक्षेपः परिधानं तु[2] निश्चये' इत्यभिधानम् । लोभश्च अनृतञ्च जिह्मं कौटिल्यञ्च हिंसनञ्च लोभानृतजिह्महिंसनानि आदिर्यस्य पौल्यादेः तत्तथोक्तम् ॥ ६ ॥

स्वराट् चक्रवर्ती । स्वपौत्रत्वे[3] गुणै अनवमं योग्यं पौत्रं[4] अभिमन्योः सुतं परीक्षितम् । तोयमेव नीवी वसनं यस्याः सा तथोक्ता तस्याः ॥ ७ ॥

मथुरायां[5] अनिरुद्धपुत्रं नाम्ना वज्रं शूरसेनविषयपतिं, अभ्यषिञ्चदिति शेषः । प्राजापत्यां प्रजापतिदेवत्यां इष्टिं निरूप्य सर्वस्वदक्षिणां इष्टिं कृत्वा त्रेताग्नीनपिबत् आत्मनि समारोपयामास । स कीदृशः ? ईश्वरः राज्यादिषु निर्विद्य संन्यसने समर्थः ॥ ८ ॥

तदेवाह विसृज्येति । सञ्छिन्नाशेषाशापाशादिबन्धनः[6] ॥ ९ ॥

---

१ अयं ख ङ पाठः । अन्यत्र - वीराध्वगमनाय ।
२ परिधानं वि - ख ङ । ३ पदमिदं - क घ । ४ स्वपौत्रं नं - क ।
५ मधुरायां - ङ । ६ संछिन्न शेषपापादि - कोशान्तरेषु सर्वत्र ।

वाचं जुहाव मनसि तत्प्राण इतरे परम् ।
धृत्या ह्यपानं सोत्सर्गं तत्परत्वे ह्यजोहवीत् ॥ १० ॥
त्रित्वे हुत्वाऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः ।
सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये ॥ ११ ॥
चीरवासा निराहारो बद्धवाङ्मुक्तमूर्धजः ।
दर्शयन्नात्मनो रूपं जडोन्मत्तपिशाचवत् ।
अनपेक्षमाणो निरगादशृण्वन्बधिरो यथा ॥ १२ ॥
उदीचीं प्रविवेशाशां गतपूर्वां महात्मभिः ।
हृदि ब्रह्म ध्यायन्नावर्तेत गतो यतः ॥ १३ ॥

स्वमरणकाले एतच्चिन्तनीयमित्यभिप्रेत्य तत्कृतमित्याह– वाचमिति । वाचं वागभिमानिनीं उमां मनसि मनोभिमानिनि रुद्रे जुहाव । अस्याः अस्मिन् लयः भावीत्यचिन्तयत् । न तु तदानीं कृतवानित्यर्थः । तत् मनः प्राणे मनःकारणे जुहाव । मनसः परं उत्तमं प्राणं इतरे इतरस्मिन् अपाने उत्सर्गकर्माभिमानिनि जुहाव । धृत्या मनस एकाग्रतया सोत्सर्गं सवृत्तिकं अपानं तत्परत्वे तस्मादपानात् पूर्वभाविनि व्याने अजोहवीत् । हि. तथाहि ग्रन्थान्तरप्रसिद्धिः ॥ १० ॥

अथ व्यानापानलयचिन्तनानन्तरं अवशिष्टावुदानसमानौ त्रित्वे त्रित्वसङ्ख्याविशिष्टेषु स्वकारणेषु प्राणापानव्यानेषु हुत्वा लयं विचिन्त्य तच्च पञ्चत्वं पञ्चत्वसङ्ख्याविशिष्टान् प्राणापानव्यनोदानसमानांश्च एकत्वे एकत्वसंख्याविशिष्टे पञ्चानां कारणे मूलप्राणे अजुहोत् । मुनिः मौनी । तत् पूर्वोक्तं सर्वं तस्य मूलप्राणस्यापि कारणे आत्मनि स्वहृदि स्थिते विष्णौ अजुहोत् । तच्चात्मानं अव्यये विनाशरहिते ब्रह्मणि सर्वगते तदभिव्यक्तिकारणे विष्णौ अजुहोदित्येकान्वयः । अत्र वागादीन्द्रियाणां तदभिमानि-देव[2]शरीराणाञ्च अग्नावाज्यलयवत् स्वकारणेषु विलय एवेति ज्ञातव्यम् ॥ ११ ॥

चीरवासाः वल्कलवस्त्रः । निराहारः मनुष्यान्नवर्जितः । बद्धवाक् वचनवृत्तिविधुरः । मूर्धजाः केशाः । जडादिवत् आत्मनो रूपं दर्शयन । बधिरो यथा तथा अशृण्वन् । अत एवान-पेक्षमाणः स्वयं गेहान्निरगादित्येकान्वयः ॥ १२ ॥

यावच्छरीरपातं भुवं प्रदक्षिणीकृत्य निरन्तराटनमेव सङ्कल्प्य हृदि परं ब्रह्म ध्यायन् क्षत्रियैः महात्मभिः गतपूर्वां उदीचीं आशां उत्तरां दिशं प्रविवेश । वीरगतिं गमिष्यन् यतो गतः नावर्तेत । यां वीरगतिं गतः पुनः नावर्तेत, तामित्यन्वयः ॥ १३ ॥

---

१ अयं कोशान्तर पाठः । मूलकोशे - नमग्रान्तिकम् ।     २ तदभिमानिदेवानां च - क ग घ ङ ज ट ठ ।

सर्वे तमनु निर्जग्मुर्भ्रातरः कृतनिश्चयाः ।
कलिनाऽधर्ममित्रेण दृष्ट्वा स्पृष्टाः प्रजा भुवि ॥ १४ ॥

ते साधुकृतसर्वार्था ज्ञात्वाऽऽत्यन्तिकमात्मनः ।
मनसा धारयामासुर्वैकुण्ठचरणाम्बुजम् ॥ १५ ॥

तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः परे ।
तस्मिन्नारायणपदे एकान्तमतयोऽपतन् ॥ १६ ॥

अवापुर्दुरवापन्ते असद्भिर्विषयात्मभिः ।
विधूतकल्मषस्थानं विरजेनात्मनैव हि ॥ १७ ॥

---

भ्रातरः भीमसेनादयः । अधर्ममित्रेण अधर्मप्रधानेन ॥ १४ ॥

आत्मनः परमात्मनः स्वरूपं आत्यन्तिकं सर्वातिशयम् । अथवा आत्मनः स्वेषां[1] आत्यन्तिकं अन्तकाले कर्तव्यं ज्ञात्वा साधु सम्यक् कृताः अनुष्ठिताः धर्मादिसर्वार्थाः[2] यैस्ते तथा । साधुना कर्मणा पुण्यलक्षणेन कृताः छिन्नाः निरस्ताः सर्वे अर्थाः शब्दादिविषया यैस्ते तथोक्ता इति वा । 'कृ छेदने'[3] इति धातुः । अत्र हरौ मनोधारणा नाम अखण्डस्मरणमिति ज्ञातव्यम् ॥ १५ ॥

इत्थं नारायणचरणाम्बुजं हृदि सन्निधाय[4] तद्ध्यानेन उद्रिक्तया भक्त्या विशुद्धमतयः[5] अहोभिः सप्तभिः भुवं प्रदक्षिणीकृत्य गन्धमादनगिरिवरे बदर्याख्यं नारायणाश्रमपदं प्राप्य तस्मिन् परे मनोहरे नारायणपदे नारायणाश्रमे एकान्तमतयः एकान्तं नारायणं ध्यायन्तः ते पाण्डवाः अपतन् शरीराणि तत्यजुरित्यन्वयः[6] । एकमनस्का वा ॥१६ ॥

शब्दादिविषयमनस्कैः असद्भिः अमङ्गलैः पुरुषैर्दुरवापं गन्तुमशक्यं निरस्तजरामरणादिकल्मषं स्थानं स्वस्वरूपलक्षणं विरजेन रजआदिगुणात्मकलिङ्गशरीराभिमानरहितेन आत्मना मनसा उपलक्षिताः ते प्राप्ता[7] इत्येकान्वयः । एवकारस्तु देवदूतदर्शितमायया युधिष्ठिरदृष्टभीमादिरोदनापादकलोकं

---

१ स्वस्य - कोशान्तरेषु सर्वत्र । २. कृतः अनुष्ठितः सर्वार्थः धर्मादिः - क ग घ ज छ ठ ।
३ अयं ड पाठः । अन्यत्र 'कृती छेदने' इति पाठः । ४ अयं ङ ट ड पाठः । अन्यत्र - संविधाय ।
५ बुद्धयः - ड । ६ अन्वयार्थः - ड । ७ प्रापुः - ड ।

द्रौपदी च तदाज्ञाय पतीनामनपेक्षताम् ।
वासुदेवे भगवति एकान्तमतिरापतत् ॥ १८ ॥

यः श्रद्धयैतद्भगवत्प्रयाणं पाण्डोः सुतानामपि संप्रयाणम् ।
श्रृणोत्यलं स्वस्त्ययनं पवित्रं लब्ध्वा हरौ भक्तिमुपैति शान्तिम् ॥

इति श्रीमद्भागवते प्रथमस्कन्धे पञ्चदशोऽध्यायः ॥

---

नापुरित्यस्लिङ्गर्थं[1] । न तु स्वेच्छिमिश्रितात्मनेत्यत्र वा । हिशब्दस्तु न दोषात् देहपातः किन्तु प्रारब्ध-कर्मनाशादित्यलिङ्गर्थं अप्रसिद्धिं द्योतयति । श्रुतिरपि सकलसुरोत्तमशशिशकलमौलिपुरःसरसुरगणैः[2] आराधितचरणैः श्रीभगवत्पादैः सकलपुराणसारसंग्रहगृहे श्रीमन्महाभारततात्पर्यनिर्णये उदाहृता नास्मा-भिरत्रोदाह्रियते । ग्रन्थबाहुल्यभयादिति । विदुरोऽपि परित्यज्येति प्रक्षेपश्लोकः[3] ॥ १७ ॥

अनपेक्षतां देहाद्यनभिमानताम् । एकान्तमतिः एकाग्रचित्ता ॥ १८ ॥

श्रीकृष्णपाण्डवानां स्वधामप्रवेशश्रवणादिना किं प्रयोजनं येनात्रावश्यं वक्तव्यं स्यादिति तत्राह– य इति । य एतद् भगवत्स्वधामप्रयाणं तद्भक्तानां पाण्डवानाञ्च प्रयाणादिकं[4] श्रृणोति स हरौ भक्तिं लब्ध्वा शान्तिं मुक्तिं उपैति इत्यन्वयः । अलं त्रिकरणशुद्ध्या ॥ १९ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
प्रथमस्कन्धे पञ्चदशोऽध्यायः ॥

---

१ अयं ङ पाठः । अन्यत्र - इत्यर्थे ।

२ ङकोशेऽप्ययमेव पाठः । अन्यत्र - सकलसुरोत्तमालिपुरःसरगणैः ।

३ विदुरोपि परित्यज्य प्रभासे देहमात्मवान् ।
कृष्णादेशेन तच्चित्तः पितृभिः स्वक्षयं ययौ ॥ इति श्लोकः ।

४ य एतद्भगवत्स्वधामप्रवेशादिकं - ङ ।

## अथ षोडशोऽध्यायः

सूत उवाच—

ततः परीक्षिद् द्विजवर्यशिक्षया महीं महाभागवतः शशास ह ।
यथा हि सूत्यामभिजातकोविदाः समादिशन्विप्रमहद्गुणांस्तथा ॥ १ ॥

स उत्तरस्य तनयामुपयेम इरावतीम् ।
जनमेजयादींश्चतुरस्तस्यामुत्पादयत्सुतान् ॥ २ ॥

आजहाराश्वमेधांस्त्रीन्गङ्गायां भूरिदक्षिणान् ।
शारद्वतं गुरुं कृत्वा देवा यत्राक्षिगोचराः ॥ ३ ॥

निजग्राहौजसा धीरः कलिं दिग्विजये क्वचित् ।
नृपलिङ्गधरं शूद्रं घ्नन्तं गोमिथुनं पदा ॥ ४ ॥

---

## ॥ अथ षोडशोऽध्यायः ॥

अत्र भगवति भक्तिविधानार्थं भगवद्भक्तपरीक्षितः कलिबन्धनादिमाहात्म्यवर्णनेन हरिमहिमैव प्रतिपाद्यते इति तन्महिमा प्रतिपाद्यतेऽस्मिन्नध्याये । तत्र प्रथमं राज्यपालनादिमहिमोच्यत इत्याह—तत इति । ततः पाण्डवस्वर्याणानन्तरं द्विजवर्यशिक्षया कृपादिब्राह्मणश्रेष्ठतदुपदेशेन । शिक्षा विद्योपादानम्[1] । अभिजातकोविदाः जातकज्ञानपटवः सूत्यां उत्पत्तौ यथा महद्गुणान्[2] उपादिशन् तथा तदनुसारेण महीं शशासेत्यन्वयः ॥ १ ॥

उत्तरस्य विराटपुत्रस्य पुत्रीं नाम्ना इरावतीं उपयेमे । उपयमनं विवाहः । उत्पादयत् उदपादयत् अजनयत् । चतुर इति पाठः[3] ॥ २ ॥

शारद्वतं कृपम् । यत्र येषु अश्वमेधेषु देवाः इन्द्रादयः अक्षिगोचराः प्रत्यक्षाः । तादृशानिति शेषः ॥ ३ ॥

सः धीरः दिशां जये ओजसा स्वाभाविकशक्त्या कलिं निगृहीतवानित्यन्वयः । नृपाणां लिङ्गं लक्षणं धारयतीति नृपलिङ्गधरः तम् । कर्मणा शूद्रम् । तदेवाह — पदेति । पदा गोमिथुनं घ्नन्तं ताडयन्तम् । क्वचित् एकान्तप्रदेशे ॥ ४ ॥

---

१ विद्योपपादनम् - ग घ ङ ज ट ।    २ महतो गुणान् - ख ।    ३ चतुर इति वा पाठः - ग ।

शौनक उवाच—

कस्य हेतोर्निजग्राह कलिं दिग्विजये नृपः ।
नृदेवचिह्नधृक् शूद्रः कोऽसौ गां यः पदाऽहनत् ॥ ५ ॥

तत्कथ्यतां महाभाग यदि विष्णुकथाश्रयम् ।
अथ वाऽस्य पदाम्भोजमकरन्दलिहां सताम् ॥ ६ ॥

किमन्यैरसदालापैरायुषो यदसद्व्ययः ।
क्षुद्रायुषां नृणामङ्ग मर्त्यानां मृतिमिच्छताम् ॥ ७ ॥

इहोपहूतो भगवान्मृत्युः शामित्रकर्मणि ।
न कश्चिन्म्रियते तावद्यावदास्त इहान्तकः ॥ ८ ॥

---

नृपलिङ्गधृक् यः शूद्रः पदा गां अहनत् तं कलिं दिग्विजये निजग्राह असौ कः कष्टकर्मा इत्याक्षेपः । न प्रश्नः । कलिमित्युक्त्या ज्ञातत्वेन सिद्धप्रश्नत्वापातात् ॥ ५ ॥

विष्णुकथा आश्रयो यस्य तत् तथोक्तम् । एतादृशं कलिवर्णनं चेत् तर्हि कथ्यताम् । अथ पक्षान्तरे वा यदि, अस्य हरेः मकरं मदकरं भावं ददातीति मकरन्दः सेवनं तं लिहन्ति आस्वादयन्ति तेषां कथाश्रयं तर्हि कथ्यतामित्यन्वयः ॥ ६ ॥

किमिति विष्णुवैभवकथाकथनमिति तत्राह- किमन्यैरिति । असदालापैः अमङ्गलप्रसङ्गैः किं प्रयोजनम् । न किमपि । कुतः? आयुषः असद्व्ययः व्यर्थव्ययः इति यत् यस्मात् भवेत् इत्यर्थः । यत् यैः असदालापैः आयुषः असमीचीनः व्ययः इति वा । इतोऽपि इतरप्रसङ्गो नापेक्षित इति ब्रूत इत्याह- क्षुद्रायुषामिति । क्षुद्रायुषां अल्पायुषां मर्त्यानां मरणधर्मिणां अत एव मृतिं इच्छतां नृणां मारकः मृत्युः भगवान् नरसिंहः शामित्रकर्मणि । पशुसञ्ज्ञपनकर्मकर्ता शमिता । तस्य कर्म शामित्रम् । तादर्थ्ये सप्तमी । शामित्रकर्मार्थं ऋषिभिः नैमिशारण्यवासिभिः इहोपहूत आहूय प्रसाद्य स्थापितः । अन्तं करोतीत्यन्तकः सः भगवान् यावदिहास्ते न तावत् कश्चिन्म्रियत इत्यन्वयः ॥ ७ ॥ ८ ॥

---

१ मरणधर्माणां - कोशान्तरेषु पाठः ।

एतदर्थं हि भगवानाहूतः परमर्षिभिः ।
अहो नृलोके पीयेत हरिलीलामृतं वचः ॥ ९ ॥

मन्दस्य मन्दप्रज्ञस्य प्रायो मन्दायुषश्च वै ।
निद्रया ह्रियते नक्तं दिवा चाप्यर्थकर्मभिः ॥ १० ॥

सूत उवाच –

यदा परीक्षित्कुरुजाङ्गले वसन्कलिं प्रविष्टं निजचक्रवर्तिते ।
निशम्य वार्तामनतिप्रियां ततः शरासनं संयुगशौचिरादद ॥११॥

---

अनेन प्रकृते किमायातमिति तत्राह एतदर्थमिति । अत्र संगते नृलोके मृत्युभयविधुरतया स्थितैर्मर्त्यैः हरिलीलामृतं वचः पीयेतेत्येतदर्थं हि परमकृपिभिरिहाहूतः । अहो आश्चर्यम् । मरणधर्मिणामपि हरिलीलामृतपानं अमृतत्वप्रदं हि यस्मात् तस्मात् विष्णुवैष्णवकथाश्रयं चेत् कथ्यता-मिति भावः ॥ ९ ॥

यथा मर्त्यस्य अन्यप्रसङ्गात आयुषो वैयर्थ्यं तथा निद्रार्थादिपरत्वापत्त्याह– मन्दस्येति । अलसस्यापि प्रज्ञाबाहुल्यात् अनेकवेदशास्त्रतदर्थग्रहणं स्यादित्यतो मन्दप्रज्ञस्येति । मन्दप्रज्ञस्य कल्पायुः तत्स्यादित्यतो मन्दायुष इति । अल्पायुषोऽपि भाग्यवशात् न स्यादित्यतो मन्दस्येति । मन्दस्य निर्भाग्यस्य । एवंविधस्य मर्त्यस्य नक्तं रात्रिः निद्रया ह्रियते । हिरण्याद्यर्थान्वेषणकर्मभिः दिवा दिन-मपि ह्रियते । चशब्दो हेत्वर्थे । तस्मात् निद्रादिजयेन हरिकथावणकथा त्वत्र त्वया कथ्यतामिति भावः । वा इत्यनेन अनुभवसिद्धमेतदिति दर्शयति । सत्रदिदृक्षया अत्र आगतैः नरैश्च आकर्ण्यताम् । भूत्या च त्वत्सङ्गिर्वित्यस्मिन्नर्थे आद्यश्चशब्दः ॥ १० ॥

कुरुजाङ्गले कुरुविषये हस्तिनापुरे वसन् परीक्षित् यदा निजचक्रवर्तिते निजचक्रेण स्वानुज्ञया निजानां पाण्डवानां आज्ञया वा वर्तिते राष्ट्रे प्रविष्टं कलिं शुश्रावेति शेषः । ततः तदा संयुगशौचिः युद्धेच्छुः राष्ट्रविप्लवरूपां अनतिप्रियां वार्तां निशम्य शरासनमाददे इत्यन्वयः । संयुगं रोचयतीति धनुर्विशेषणं वा ॥ ११ ॥

---

१ मन्दप्रज्ञस्याप्यायुर्बाहुल्यात् - ङ । २ भूत्यावत्र सत्वेष्वस्मिन्नर्थे वा - ख ग ठ ।

स्वलङ्कृतं श्यामतुरङ्गयोजितं रथं मृगेन्द्रध्वजमाश्रितः पुरात् ।
वृतो रथाश्वद्विपपत्तियुक्तया स्वसेनया दिग्विजयाय निर्गतः ॥१२॥

भद्राश्वं केतुमालञ्च भारतञ्चोत्तरान्कुरून् ।
किम्पुरुषादीनि सर्वाणि विजित्य जगृहे बलिम् ॥ १३ ॥

तत्र तत्रोपशृण्वानः स्वपूर्वेषां महात्मनाम् ।
प्रगीयमानं पुरतः कृष्णमाहात्म्यसूचनम् ॥ १४ ॥

आत्मानञ्च परित्रातमश्वत्थाम्नोऽल्पतेजसः ।
स्नेहञ्च वृष्णिपार्थानां तेषां भक्तिञ्च केशवे ॥ १५ ॥

तेभ्यः परमसन्तुष्टः प्रीत्युज्जृम्भितलोचनः ।
महाधनानि वासांसि ददौ हारान्महामनाः ॥ १६ ॥

---

श्यामैः नवसु वीथीषु विशिष्टगतिभिः, नीलवर्णैर्वा तुरङ्गैः योजितम् मृगेन्द्रः ध्वजे यस्य स तथा तम् । सिंहलाञ्छनध्वजम् । रथाश्च अश्वाश्च द्विपाश्च पत्तयश्च रथाश्वद्विपपत्तयः । युक्तया । पुरात् निर्गतोऽभूदित्यन्वयः ॥ १२ ॥

सः परीक्षित् भद्राश्वादिवर्षाणि उत्तरकुर्वादिजनपदानि च विजित्य बलिं करं जगृहे इत्यन्वयः ॥ १३ ॥

सः महामनाः तत्र तत्र वर्षेषु विषयेषु च स्वपुरतो गायकैः उपगीयमानं कृष्णमाहात्म्यं सूचयतीति कृष्णमाहात्म्यसूचनं[1] महात्मनां स्वपूर्वेषां पाण्डवानां माहात्म्यमुपशृण्वानः शृण्वन् ॥ १४ ॥

कथं माहात्म्यं सूच्यत इति तत्किञ्चिदाह— आत्मानमिति ॥ अश्वत्थाम्नः अल्पतेजसः कृष्णेन परिरक्षितं आत्मानञ्च वृष्णीनां पाण्डवानां मिथः स्नेहञ्च उभयेषां कृष्णे भक्तिञ्च शृण्वन् ॥ १५ ॥

तेभ्यः गायकेभ्यः परमसन्तुष्टः अत एव प्रीत्या उज्जृम्भिते विकसिते लोचने यस्य सः तथोक्तः महाधनानि अनर्घ्याणि वस्त्राणि हारान् मौक्तिकमालाः तेभ्यः ददौ इत्यन्वयः ॥ १६ ॥

---

१ सूचकमिति मूलश्लोके टीकायां च - क ङ ट पाठः । मूलश्लोकमात्रे तु ग घ पाठस्तथा ।

सारथ्यपार्षदसेवनसख्यदौत्य-
वीरासनानुगमनस्तवनप्रणामैः ।
स्निग्धेषु पाण्डुषु जगत्प्रणतस्य विष्णोः
भक्तिं करोति नृपतिश्चरणारविन्दे ॥ १७ ॥

तस्यैवं वर्तमानस्य पूर्वेषां वृत्तमन्वहम् ।
नातिदूरे किलाश्चर्यं यदासीत्तन्निबोध मे ॥ १८ ॥

धर्मः पदैकेन चरन्विच्छायामुपलभ्य गाम् ।
पृच्छति स्माश्रुवदनां विवत्सामिव मातरम् ॥ १९ ॥

---

नृपतिः परीक्षित् कृष्णे स्निग्धेषु पाण्डुषु पाण्डुपुत्रेषु नुक्तामुक्तप्रपञ्चप्रणतस्य विष्णोः सारथ्या-दिना 'अहो हरिः चरणानतजनतालु करुणार्णवो ननु' इति तस्य चरणारविन्दे विशेषतो भक्तिं करोतीत्येकान्वयः । सारथेः कर्म सारथ्यम् । पार्षदं सभापतिकर्म द्वाःस्थत्वं वा परिषदां कर्मेति वा । सेवनं उक्तकर्मकरणम् । सख्युः कर्म सख्यम् । दूतस्य कर्म सन्देशहरत्वं दौत्यम् । वीरासनं रात्रौ खड्गपाणिः स्थित्वा स्वामिरक्षार्थं जागरणं वीरोचितासनम् । गच्छतः पृष्ठतो गमनमनुगमनम् । स्तवनं स्तुतिः । प्रणामो नमस्कारः प्रह्वत्वं वा । वीरासनानुगमनं सिंहासनोपसर्जनतया उपवेशनं वा ॥१७॥

पूर्वेषां पित्रादीनां वृत्तं आचरितं अनुदिनं एवं वर्तमानस्य तस्य[2] नातिदूरे अस्मद्दृष्टिगोचरे यदाश्चर्यं आसीत् तन्निबोधेत्येकान्वयः ॥ १८ ॥

किन्तदिति तत्राह— धर्म इति । सत्याख्येनैकेन पदेन चरन् धर्मः वृषभो भूत्वा वत्सरहितां मातरमिव अश्रुवदनां अत एव विच्छायां विगतकान्तिं गोरूपिणीं गां भूमिं उपलभ्यापृच्छदित्येका-न्वयः ॥ १९ ॥

---

१ पर्षदामिति वक्तव्ये तदर्थानुवादोऽयम् । २ अयं ङ पाठः । अन्यत्र नास्ति ।
३ अप्राक्षीदित्येकान्वयः - ङ ।

धर्म उवाच—

कच्चिद्भद्रेऽनामयमात्मनस्ते विच्छायाऽसि म्लायता यन्मुखेन ।
आलक्षये भवतीमन्तराधिं दूरे बन्धुं शोचसि कञ्चनेव ॥ २० ॥

पादैर्न्यूनं शोचसि मैकपादमृतात्मानं वृषलैर्भोक्ष्यमाणम् ।
अथो सुरादीन्हृतयज्ञभागान्प्रजा उतस्विन्मघवत्यवर्षति ॥ २१ ॥

अरक्ष्यमाणा स्त्रिय उर्वि बालाञ्छोचस्यथो पुरुषादैरिवार्तान् ।
वाचं देवीं ब्रह्मकुले कुकर्मण्यब्रह्मण्ये राजकुले कुलाग्र्याम् ॥२२॥

---

'भद्रा गौर्गोमतल्लिके'त्यभिधानम् । हे भद्रे ते तव आत्मनः देहस्य अनामयं आरोग्यं कच्चित् किम् ; म्लायता म्लानिं गच्छता मुखेन विच्छाया विगतकान्तिः असीति यत् यस्मात् तस्मात् भवतीं अन्तराधिं मनःपीडावतीं आलक्षये पश्यामि । किञ्च कञ्चन दूरं बन्धुं परोक्षप्रदेशे स्थितं बन्धुं प्रति शोचसीव ॥ २० ॥

अपि च त्रिभिः पादैः न्यूनं हीनं एकपादं मा मां प्रति शोचसि । उत पक्षान्तरे आहोस्वित् वृषं धर्मं लीनं नष्टं कुर्वन्तीति वृषलाः राजाभासाः शूद्रप्रायाः तैः भोक्ष्यमाणं आत्मानं शोचसि । अथो अथवा हृतो यज्ञभागः येषां ते तथा तान् सुरादीन् शोचसि किम् । मघवति इन्द्रे अवर्षति यज्ञाभावात् वर्षं अकुर्वति सति सस्यादिसमृद्ध्यभावेन दरिद्राः प्रजाः उद्दिश्य शोचसि उतस्वित् अपिस्वित् ॥ २१ ॥

अथवा हे उर्वि नूनं अरक्ष्यमाणाः स्त्रिय उद्दिश्य शोचसि । अथवा पुरुषादैः मनुष्यभक्षकैरिव स्थितैः उपद्रवकरैः आर्तान् दुःखितान् बालांश्च शोचसि । किञ्च ब्रह्मकुले ब्राह्मणकुले कुत्सितकर्मणि दुष्प्रतिग्रहोल्लेखनादिकर्म कुर्वति सति राजकुले अब्रह्मण्ये ब्राह्मणबहुमानमकृत्वा तस्मात् करादीनाददाने सति च कुलाग्र्यां मता कुलेन अग्र्यां श्रेष्ठां कुलीने वर्तमानामिति वा । देवीं द्योतमानां वाचं वेदवाणीं आचारकुलहीनाः अभ्येष्यन्तीति शोचसि स्वित् । 'बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यती'ति वचनात् ॥ २२ ॥

---

१ उर्वि भू. राजकुले अब्रह्मण्ये - कोशान्तरेषु सर्वत्र ।   २ कुलाग्र्यां श्रेष्ठां - कोशान्तरेषु सर्वत्र ।

किं क्षत्रबन्धून्कलिनोपसृष्टान्राष्ट्राणि वा तैरवरोपितानि ।
इतस्ततो वाऽशनपानवासस्नानव्यवायोत्सुकजीवलोकम् ॥ २३ ॥
यद्वाऽथ ते भूरिभारावतारकृतावतारस्य हरेर्धरित्रि ।
अन्तर्हितस्य स्मरती विसृष्टा कर्माणि निर्वाणविलम्बितानि ॥२४॥
इदं ममाचक्ष्व तवाधिमूलं वसुन्धरे येन विकर्शिताऽसि ।
कालेन वा ते बलिनाऽवलीढं सुरार्चितं किं प्रभुणाऽद्य सौभगम् ॥

---

कलिना उपसृष्टान्[1] उपद्रुतान् क्षत्रबन्धून् उत शोचसि । तैः क्षत्रबन्धुभिः अवरोपितानि उद्वासितानि विनाशितानि राष्ट्राणि वा शोचसि । यद्वा एवं वा इतस्ततः अनियमेन अशनञ्च पानञ्च वासश्च स्नानञ्च व्यवायो ग्राम्यधर्मश्च ते तथोक्ताः तेषु उत्सुकं उत्कण्ठावन्तं जीवलोकं प्राणिसमूहं किं शोचसि ॥ २३ ॥

अथेति पक्षान्तरारम्भः । ते तव भूमेः भूरेः महतः भारस्य अवतारः अवरोपणं तस्मै भूरिभारावताराय कृतः अवतारः स्वरूपप्रकाशः येन सः तथोक्तः तस्य अद्य अन्तर्हितस्य तिरोहितस्य निर्वाणं स्वस्वयोग्यं मोक्षं विशेषेण लम्बयन्ति पुरतः स्थितं कारयन्तीति निर्वाणविलम्बितानि[2] । निर्वाणं विडम्बयन्ति अपहसन्तीति[3] वा । तानि हरेः कर्माणि चरितानि स्मरन्ती तेन हरिणा अहमद्य विसृष्टा नन्विति शोचसि अथ = किं वा? ॥ २४ ॥

येन मनोदुःखेन विकर्शिता कृशतरा असि । हे वसुन्धरे तदिदं आधेः मनःपीडायाः मूलं ममाख्याहीत्यन्वयः । अथवा सम्प्रति प्रभुणा समर्थेन बलिना सर्वाङ्गपुष्टेन कालेन ते तव सुरार्चितं सौभाग्यं अवलीढं ग्रस्तं वेत्यन्वयः[4] ॥ २५ ॥

---

१ उपहतान् - क ।
२ अयं ख ड पाठः । लडयोरभेदमाश्रित्येदं व्याख्यानम् । मोक्षसुखायिकत्वेन हरिलीलानां तदपहासित्वमभिप्रेतम् । कोशान्तरेषु विलम्बयन्तीत्येव पाठः । ३ अपहरन्ति - क ।
४ अयं ग घ ङ ज पाठः । अन्यत्र - चेत्यन्वयः ।

धरोवाच—

भवान्हि वेद तत्सर्वं यन्मां धर्मानुपृच्छसि ।
चतुर्भिः वर्तसे येन पादैर्लोकसुखावहैः ॥ २६ ॥
सत्यं शौचं दया दानं त्यागः सन्तोष आर्जवम् ।
शमो दमः तपः साम्यं तितिक्षोपरतिः श्रुतम् ॥ २७ ॥
ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो धृतिः स्मृतिः ।
स्वातन्त्र्यं कौशलं कान्तिः सौभगं मार्दवं क्षमा ॥ २८ ॥
प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः ।
गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहंकृतिः ॥ २९ ॥
इमे चान्ये च भगवन्नित्या यत्र महागुणाः ।
प्रार्थ्या महत्त्वमिच्छद्भिः न च यान्ति स्म कर्हिचित् ॥३०॥
तेनाहं गुणपात्रेण श्रीनिवासेन साम्प्रतम् ।
शोचामि रहितं लोकं पाप्मना कलिनेक्षितम् ॥ ३१ ॥
आत्मानश्चानुशोचामि भवन्तश्चामरोत्तम ।
देवान्नृपीन् पितॄन्साधून्सर्वान्वर्णांस्तथाश्रमान् ॥ ३२ ॥

---

धर्मेण पृष्टा भूमिः तं प्रति ब्रूत इत्याह- भवानिति । हे धर्म यत् आधिमूलं त्वं मां अनुपृच्छसि तत्सर्वं भवान् वेद हि । तथापि वक्ष्ये इति शेषः । येन श्रीकृष्णेन त्वं लोकसुखावहैः तपःशौचदयासत्याख्यैः चतुर्भिः पादैः कलावपि वर्तसे अवर्तथाः[1] ॥ २६ ॥

यत्र यस्मिन् श्रीकृष्णे इमे उक्ताः सत्यादयः अनुक्ताः अन्ये च महागुणाः प्रत्येकमनन्ताः सन्ति । कीदृशाः ? महत्त्वमिच्छद्भिः पुरुषैः प्रतिबिम्बे तादृशगुणलाभाय प्रार्थ्याः उपास्याः । ते कर्हिचित् यतो न यान्ति नाप्यान्ति[2] च अभिन्नत्वादित्येतमर्थं स्मेत्यनेन श्रुतिसिद्धं दर्शयति । हे देवोत्तम तेन गुणपात्रेण श्रीनिवासेन साम्प्रतं रहितं पाप्मना पापात्मना कलिना ईक्षितं दृष्टं आत्मानं मां च भवन्तञ्च शोचामीत्यन्वयः । सत्यं निर्दुःखानन्दानुभवः । भूतहितयथार्थभाषणं वा । शौचं

---

१ अवर्तत - क । अवर्तयः - ग घ ङ ज ट ठ ।
२ नापयान्ति इति ख ङ ट पाठः । अन्यत्र नास्ति ।

नित्यशुद्धिः। प्रकृतिसम्बन्धाभावात् नित्यं बाह्याभ्यन्तरशुद्धिता हरेरेव। अन्यत्र मृज्जलाभ्यां रागराहित्येन। दया सज्जनेषु आर्तप्राणिषु चित्तद्रवत्वम्[1]। उभयत्र समम्। दानं भक्ताभक्तमध्यमेषु सुखदुःखमिश्रफलवितरणम्। अन्यत्र धर्मार्थं पात्रे वित्तविश्राणनम्। त्यागोऽस्वकीये स्वकीयताबुद्ध्यपरपर्यायमिथ्याभिमानोज्झिता[2]। अन्यत्र सन्यासः। सन्तोषः स्वरूपानन्दपानेन अन्यत्रालम्बुद्धिः। अन्यत्र यदृच्छया प्राप्तभोगेष्वलंप्रत्ययः। आर्जवं व्यवहारेषु अवक्रता। मनसि वचसि चैकविधता। उभयत्र समानम्। शमः स्वतः प्रियरूपत्वात् इदं प्रियमिदमप्रियमिति बुद्धिविधुरता। शंरूपतया मीयत इति वा। अन्यत्र बुद्धेः भगवन्निष्ठता। दमः इन्द्रियाणां स्ववशत्वम्। उभयत्र समानम्। स्वतः परत इति विशेषः। शत्रुनिग्रहो वा। तपः आलोचनं युक्तिज्ञानम्। अन्यत्र कृच्छ्रचान्द्रायणाद्युपवासनियमः। साम्यं सर्वावतारान्तर्यामिरूपेषु निर्दोषगुणपूर्णत्वेन समता। यथावस्थितवस्तुदर्शनं वा। उभयत्र समानम्। न तु सर्वत्र शत्रुमित्रभावराहित्यम्। तितिक्षा महापराधसहनम्। यथा भृगोः पादादत्यपराधः। अन्यत्र द्वन्द्वसहिष्णुता। उपरतिः स्वरूपरतिः। ओः पतिः उपः मुख्यप्राणः तस्मिन् रतिर्वा। उः रुद्रः। अन्यत्र काम्यकर्मनिवृत्तिः। कृतकृत्यतया व्यर्थसर्वव्यवहारोपरमो वा। श्रुतं सर्वत्र श्रवणशक्तिः। 'श्रोते'त्यादेः। श्रुतिप्रसिद्धता वा। अन्यत्र शास्त्रार्थतात्पर्यावधारणम्। श्रुत्यर्थविचारो वा। ज्ञानं सर्वज्ञता। अन्यत्र परोक्षापरोक्षभेदेन परमार्थविषयम्। विरक्तिः स्वेतरविषये असारताबुद्धिः। अन्यत्र शब्दादिविषयरागराहित्यम्। ऐश्वर्यं समस्तजगदीशितृत्वसामर्थ्यम्। अन्यत्र अणिमादिकम्। शौर्यं संग्रामेष्वपलायित्वम्। उभयत्र समानम्। तेजः परैरप्रधृष्यत्वम्। अन्यत्र ब्रह्मवर्चसम्। धृतिः सर्वधारणम्। 'एष सेतुर्विधृति'रिति श्रुतेः। विकारहेतावविकारित्वं वा। अन्यत्र जिह्वोपस्थजयः। स्मृतिः अतीतानागतानन्तब्रह्माण्डादिस्मरणम्। अन्यत्र अवगतपदार्थानुसन्धानम्। स्वातन्त्र्यं अपराधीनत्वम्। अन्यत्र स्वः स्वतन्त्रो विष्णुः तदधीनत्वम्। कुमारीकङ्कणवत् एकाकित्वं वा। कौशलं सर्वकर्मणि वैचित्र्यकरणबुद्धिः। अन्यत्र शिल्पविद्यावैशारद्यम्। कान्तिः देहगता दीप्तिः। अन्यत्र भगवद्भक्तिकामनम्। सौभगं शुभैकभागित्वम्। अन्यत्र लोकमनोहरत्वम्। मार्दवं भक्तेषु मृदुत्वम्। उभयत्र समानम्। क्षमा क्रोधासमुत्थितिः। उभयत्र समानम्। प्रागल्भ्यं धाष्ट्र्यम्। उभयत्र समानम्। प्रश्रयो विनयः। उभयत्र समम्। शीलं लोकमनोहरस्वभावत्वम्। समम्। सहः सहनशक्तिः। प्राणस्य स्वाभाविकसामर्थ्यं वा। समम्। ओजः पराभिभवशक्तिः। अन्यत्र मानस-

---

१ अयं क ग घ ङ ज ट ठ पाठः। अन्यत्र - चित्तद्रवता। २ अयं ङ पाठः। अन्यत्र - मिथ्याभिमानोत्सृज्ता।

ब्रह्मादयो बहुतिथं यदपाङ्गमोक्ष-
कामा यथोक्तविधिना भगवत्प्रपन्नाः ।
सा श्रीः स्ववासमरविन्दवनं विहाय
यत्पादसौभगमलं भजतेऽनुरक्ता ॥ ३३ ॥

तस्याहमब्जकुलिशाङ्कुशकेतुकेतैः
श्रीमत्पदैर्भगवतः समलङ्कृताङ्गी ।
त्रीनत्यरोचमुपलब्धतपोविभूति
र्लोकान्समा व्यसृजदुत्स्मयतीं तदन्ते ॥ ३४ ॥

---

बलम् । बलं स्वेच्छाकरणशक्तिः । अन्यत्र शरीरादिधारणं, सामर्थ्यं वा । भगः षड्गुणवत्त्वं, भाग्यं वा । अन्यत्र उत्पत्त्यादिज्ञानम् । गाम्भीर्यं परैः अनवगाह्यत्वम् । अन्यत्र स्तिमितत्वम् । स्थैर्यं नित्याकम्पनम् । अन्यत्र धर्मादचलनम् । आस्तिक्यं वेदाद्युक्तमस्तीति बुद्धिः । अन्यत्र गुरुवाक्येषु श्रद्धानता । कीर्तिः दिक्षु ख्यातिः । अन्यत्र हरिनामसंकीर्तनम् । मानः परेषां माननम् । अन्यत्र अभिमानः । अनहङ्कृतिः अस्वरूपदेहादौ अहमिति बुद्धिराहित्यम् । अन्यत्र नाहङ्कर्ता हरिरेव मयि स्थित्वा सर्वं करोतीति[1] बुद्धिः । न केवलं भवन्तं शोचामि किन्तु देवादीनपि ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ॥ ३१ ॥ ३२ ॥

श्रीकृष्णविरह एव ममाऽप्यनुकूलमित्याख्याति– ब्रह्मादय इति । यस्याः श्रियः अपाङ्गः कटाक्षः । तस्य मोक्षः उन्मीलनविशेषः तं कामयन्त इति यदपाङ्गमोक्षकामाः । स्वेषु श्रियः कटाक्षनिपातमाकाङ्क्षमाणा इत्यर्थः । शास्त्रोक्तप्रकारेण भगवत्प्रपन्नाः ब्रह्मादयः बहुतिथं बहुकालं, भगवतीं भजन्तीति शेषेणान्वयः । सा श्रीः अनुरक्ता सद्भक्तिमती स्वनिवासं अरविन्दवनं पद्मवनं विहाय यस्य श्रीकृष्णस्य पादयोः सौभगं सौभाग्यं अलं भजत इत्यन्वयः ॥ ३३ ॥

उपलब्धा तपोविभूतिः यया सा तथा । तपसा विविधफलं प्राप्ता सती तस्य भगवतः अब्जश्च कुलिशश्च अङ्कुशश्च केतुः ध्वजश्च अब्जकुलिशाङ्कुशकेतवः । रेखारूपाः एते केताः चिह्नानि

---

१ सर्वमिति ङ पाठः । अन्यत्र नास्ति । करोतीति कोशान्तरपाठः । मूलकोशे - कारयतीति ।

योवै ममातिभरमासुरवंशराज्ञा-
मक्षौहिणीशतमपानुददात्मतन्त्रः ।
त्वां दुस्थमूनपदमात्मनि पौरुषेण
सम्पादयन्यदुषु रम्यमबिभ्रदङ्गम् ॥ ३५ ॥

का वा सहेत विरहं पुरुषोत्तमस्य
प्रेमावलोकरुचिरस्मितवल्गुजल्पैः ।
स्थैर्यं समानमहरन्मधुमानिनीनां
रोमोत्सवो मम यदङ्घ्रिविटङ्किताया: ॥ ३६ ॥

---

येषां तानि तथोक्तानि तैः श्रीमद्भिः पदैः सम्यगलङ्कृतसर्वाङ्गाऽहं त्रीन् लोकानतिक्रम्य अरोचं शोभितवती । सः श्रीकान्तः तदन्ते तपोविभूतेरवसाने उत्स्मयन्तीं 'का नु मत्सदृशी स्त्री' इत्यहंकुर्वाणां मां व्यसृजत् इत्येकान्वयः । तदन्त इति स्वितरापेक्षया उक्तम् । न तु भूमेः पुण्यावसानमस्ति । भगवत्पत्नीत्वात् ॥ ॥ ३४ ॥

यो वै असुराणां सम्बन्धी वंशः आसुरवंशः । तस्मिन् जातानां राज्ञां अक्षौहिणीशतं मम अतिभरं अपानुदन् अपाहरत् । शतमिति शब्दः सहस्रादिवाची । त्वयि चतुष्पदत्वेन पूर्णपदं सम्पादयन् आत्मतन्त्रः यदुषु रम्यं रमणीयं अङ्गं अबिभ्रत् ॥ ३५ ॥

यश्च प्रेम्णा अवलोकश्च रुचिरं स्मितञ्च वल्गुः मधुरो जल्पश्च ते तथोक्ताः तैः मधुमानिनीनां समानं अभिमानेन सह वर्तमानं स्थैर्यं अहरत् । यस्याङ्घ्रिभ्यां विटङ्किताया: चिह्नितायाः अलंकृताया: वा मम रोमोत्सवः रोमाञ्चः, अभूदिति शेषः । तस्य पुरुषोत्तमस्य विरहं वियोगं[2] का वा स्त्री सहेत न कापीत्यन्वयः ॥ ३६ ॥

---

१ सर्वावयवाऽहं - ड । २ एतदनन्तरं 'पुरा' इत्यधिकपाठः - ग ।
३ वियोगमिति ड पाठः । अन्यत्र नास्ति ।

सूत उवाच—

तयोरेवं कथयतोः पृथिवीधर्मयोस्तदा ।
परीक्षिन्नाम राजर्षिः प्राप्तः प्राचीं सरस्वतीम् ॥ ३७ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे षोडशोऽध्यायः ॥

## अथ सप्तदशोऽध्यायः

सूत उवाच—

तत्र गोमिथुनं राजा हन्यमानमनाथवत् ।
दण्डहस्तञ्च वृषलं ददृशे नृपलाञ्छनम् ॥ १ ॥
वृषं मृणालधवलं मेहन्तमिव बिभ्यतम् ।
वेपमानं पदैकेन सीदन्तं शूद्रपीडितम् ॥ २ ॥

---

तदवसरे तत्र परीक्षिदागमनमाह[1]– तयोरिति । परीक्षिन्नाम राजश्रेष्ठः । कुरुक्षेत्रे प्राचीं दिशं उद्दिश्य स्यन्दमानां नाम्ना सरस्वतीं नदीं प्राप्तः इत्यन्वयः ॥ ३७ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
प्रथमस्कन्धे षोडशोऽध्यायः ॥

* * *

## ॥ अथ सप्तदशोऽध्यायः ॥

अत्रापि भगवद्भक्तप्रधानस्य परीक्षितः कलिबन्धनादिमाहात्म्यवर्णनेन हरेर्महिमैव वर्ण्यते इति तन्महिमैवोच्यते । तत्र 'नातिदूर' इति कथितमाश्चर्यमाह– तत्रेति । तत्र कुरुक्षेत्रे प्राच्याः सरस्वत्याः तीरे अनाथवत् नाथः स्वामी तेन रहितो यथा हन्यते तथा ताड्यमानं गोमिथुनम् ॥ १ ॥

मिथुनं विविच्याह– वृषमिति । मृणालधवलं कमलनालसूत्रवद्धवलं शुक्लवर्णम् । बिभ्यतं भीतमिव मेहन्तं शकृन्मुञ्चन्तम् । वेपमानं कम्पमानम् । एकेन पदा स्थितत्वात् सीदन्तं भग्नाङ्गवत्तिष्ठन्तं शूद्रेण कलिना पीडितं वृषमद्राक्षीत् ॥ २ ॥

---

1 डकोशेऽप्ययं पाठः । परीक्षित आगमनमाह - ङ ट । परीक्षितो गमनमाह - क. ...रेषु सर्वत्र ।

गाश्च धर्मदुघां दीनां भृशं शूद्रपदाहताम् ।
विवत्सामश्रुवदनां कृशां यवसमिच्छतीम् ॥ ३ ॥

पप्रच्छ रथमारूढः कार्तस्वरपरिच्छदम् ।
मेघगम्भीरया वाचा समारोपितकार्मुकः ॥ ४ ॥

कस्त्वं मच्छरणे लोके बलाद्धंस्यबलौ बली ।
नरदेवोऽसि वेषेण नटवत्कर्मणाऽद्विजः ॥ ५ ॥

स त्वं कृष्णे गते दूरं सह गाण्डीवधन्वना ।
शोच्योऽस्यशोच्यान्रहसि प्रहरन्वधमर्हसि ॥ ६ ॥

त्वं वा मृणालधवलः पादैर्न्यूनः पदा चरन् ।
वृषरूपेण किं कश्चिद्देवो नः परिखेदयन् ॥ ७ ॥

---

यवसं तृणं आकाङ्क्षमाणाम् । अत एव कृशाम् । अश्रुवदनां[1] अश्रुमुखीम् । विवत्सां वत्सरहितामिव स्थिताम् । शूद्रस्य पदा ताडितान् । भृशं अत्यर्थं दीनां कृपणाम् । धर्मदुघां यज्ञार्थमपयोदोग्ध्रीं गाश्चैवंविधां अपश्यदित्यन्वयः ॥ ३ ॥

दृष्ट्वा च तां राजा पप्रच्छेत्यन्वयः । कथंभूतः ? कार्तस्वरपरिच्छदं सुवर्णपरिकरपरिष्कृतं रथं आरूढः समारोपितकार्मुकः सज्जीकृतधन्वा ॥ ४ ॥

तत्र प्रथमं शूद्रं प्रति प्रश्नप्रकारमाह- कस्त्वमिति यस्त्वं नटवद्वेषेण नरदेवोऽसि । नतु राजा । कर्मणा अद्विजः शूद्रोऽसि । अद्विज इत्युक्त्या शूद्रत्वं कथं ज्ञातमिति चेत् कर्मणेत्यनेन क्षत्रियवैश्ययोः परिहृतत्वात् । मच्छरणे अहमेव रक्षको यस्य सः तथोक्तः तस्मिन् । 'शरणं गृहरक्षित्रोः' रित्यभिधानम् । बली त्वं अबलौ दुर्बलौ गोवृषौ बलात् प्रसह्य हंसि पीडयसि । त्वं कः ? ॥ ५ ॥

गाण्डीवधन्वना सह कृष्णे दूरं गते सति यः शोच्यः रहसि अशोच्यान् प्रहरन्नसि स त्वं वधमर्हसीत्यन्वयः ॥ ६ ॥

इदानीं वृषभं पृच्छति— त्वं वेति । हे वृषभ पादैर्न्यूनः यथा चरति तथा त्रिभिः पादैः न्यूनः एकेन चरन् मृणालवद् धवलः त्वं को वा ? वृषभरूपेणास्मान् परिखेदयन् अस्मद्बुद्धेः परिघातं[2] कुर्वन् आगतः कश्चिद्देवः किम् ? ॥ ७ ॥

---

१ अस्रवदनां - ड । २ नेति ड पाठः । अन्यत्र नास्ति ।

न जातु कौरवेन्द्राणां दोर्दण्डपरिरम्भिते ।
भूतले निपतन्त्यस्मिन्विना त्वां प्राणिनां शुचः ॥ ८ ॥

मा सौरभेयानुशुचो व्येतु ते वृषलाद्भयम् ।
मा रोदीरम्ब भद्रं ते खलानां मयि शास्तरि ॥ ९ ॥

यस्य राष्ट्रे प्रजा मानर्हिंस्यन्ते माव्यसाधुभिः ।
तस्य मत्तस्य नश्यन्ति कीर्तिरायुर्भगो गतिः ॥ १० ॥

एष राज्ञः परो धर्मो ह्यार्तानामार्तिनिग्रहः ।
अत एनं वधिष्यामि भूतद्रुहमसत्तमम् ॥ ११ ॥

कोऽवृश्चत्तव पादांस्त्रीन्सौरभेय चतुष्पदः ।
मा भूवंस्त्वादृशा राष्ट्रे राज्ञां कृष्णानुवर्तिनाम् ॥ १२ ॥

---

कुतः परिखिन्नत्वमिति तत्राह— न जात्विति । कौरवेन्द्राणां दोर्दण्डैः परिरम्भिते रक्षिते अस्मिन् भूतले प्राणिनां शुचः शोकनिमित्ताश्रुबिन्दवः जातु क्वचिदपि न निपतन्ति त्वां विना । त्वन्तु वाष्पकलाक्षः[1] शोचसि यस्मात् तस्मात् परिखिद्यसीति भावः ॥ ८ ॥

हे सौरभेय सुरभिवंशोद्भव, मा शुचः शोकं मा कार्षीः । ते तव वृषलात् भयं व्येतु नश्यतु इत्यन्वयः । इदानीं सौरभेयीं पृच्छति— मा रोदीरिति । हे सौरभेयि, त्वमपि काऽसि इत्यध्याहारः कर्तव्यः । कस्त्वमित्युक्तत्वात् । हे अम्ब, मा रोदीः अश्रुविमोक्षणं मा कार्षीः । ते तुभ्यं भद्रं अस्तु । कुतः ? मयि दुष्टानां शास्तरि सति ॥ ९ ॥

यस्य राज्ञः राष्ट्रे असाधुभिः दुष्टैः प्रजाः साधु हिंस्यन्ते पीड्यन्ते मत्तस्य तस्य कीर्त्यादयो नश्यन्तीत्यन्वयः । गतिः परलोकः ॥ १० ॥

यः आर्तानां आर्तिनिग्रहः एषः राज्ञः परो धर्मो हि यस्मात् तस्मात् आर्तिनिग्रहस्य स्वधर्मत्वात् असत्तमं भूतद्रुहं एनं वृषलं वधिष्यामीत्यन्वयः । अनेन कस्य हेतोः निजग्राहेति चोद्यं परिहृतम् ॥ ११ ॥

हे सौरभेय, चतुष्पदः तव त्रीन् पादान् कः अवृश्चत् छेदितवान् ? स कः ? ज्ञातश्चेत्परिहरिष्यामीति शेषः । कुत इति तत्राह— मा भूवन्निति । त्वादृशाः त्वद्विधाः ॥ १२ ॥

---

[1] वाष्पाकुलाक्षः - च ठ द ।

आख्याहि वृष भद्रं वः साधूनामकृतागसाम् ।
आत्मवैरूप्यकर्तारं पार्थानां कीर्तिदूषणम् ।
गलेऽनागस्यघं युञ्जन्सर्वतोऽस्य च तद्भयम् ॥ १३ ॥

अनागस्स्विह भूतेषु य आगस्कृन्निरंकुशः ।
आहर्ताऽस्मि भुजं साक्षादमर्त्यस्यापि साङ्गदम् ॥ १४ ॥

राज्ञो हि परमो धर्मः स्वधर्मस्थानुपालनम् ।
शासतोऽन्यान्यथाशास्त्रं अनापद्युत्पथानिह ॥ १५ ॥

धर्म उवाच—

एतद्वः पाण्डवेयानां युक्तमार्ताभयं वचः ।
येषां गुणगणैः कृष्णो दौत्यादौ भगवान्वृतः ॥ १६ ॥

---

अकृतागसां अकृतापराधानां साधूनां निर्दोषाणां वः युष्माकं भद्रं अस्तु । पार्थानां कीर्तिदूषणं यशोदूषकं[1] आत्मवैरूप्यकर्तारं भवत्यां विरोधकर्तारं[2] पुरुषं आख्याहीत्यन्वयः । हे गले सौरभेयि यः आनागसि अघं अपराधं युञ्जन् प्रयुञ्जानो वर्तते अस्य तत् तस्मात् अपराधात् सर्वतः इह परलोके च भयं, भवत्येवेति शेषः । 'सौरभेयी गला धेनुर्भद्रानन्दामृतकवे'त्यभिधानात्[3] ॥ १३ ॥

निरंकुशः अनिवारितः । अङ्गदेन बाहुभूषणेन सह वर्तमानम् । अमर्त्यस्य देवस्यापि आहर्ताऽस्मि छेत्ताऽस्मि ॥ १४ ॥

कुत इति तत्राह- राज्ञ इति । स्वविहितधर्मम् अनुतिष्ठतां अनुपालनं तत्तद्योग्यतया रक्षणं राज्ञः परमो धर्मो हि । किंविशिष्टस्य ? इह अनापदि आपदभावेऽपि उत्पथान् मार्गमुत्सृज्य वर्तमानान् अन्यान् दुष्टान् यथाशास्त्रं शासतः ॥ १५ ॥

श्रीकृष्णो भगवान् येषां पाण्डवानां ज्ञानभक्तिविरक्त्यादिगुणगणैः दौत्यादौ वृतः पाण्डवेयानां तेषां पाण्डववंशोद्भवानां वः एतत् आर्तानां अभयङ्करं वचः युक्तं उचितमित्यन्वयः हे गले सौरभेयि यः परलोके च ।। १६ ।।

१ यशोदूषणं - क ज ।

२ भवत्यां विरोधकर्तारमिति ख ड पाठः । अन्यत्र नास्ति । ३ अभिधानम् - ड ।

न वयं क्लेशबीजानि यतः स्युः पुरुषर्षभ ।
पुरुषं तं विजानीमः वाक्यभेदविमोहिताः ॥ १७ ॥

केचिद्विकल्पवचस आहुरात्मानमात्मनः ।
दैवमन्ये परे कर्म स्वभावमपरे प्रभुम् ॥ १८ ॥

अप्रतर्क्यादनिर्देश्यादिति केष्वपि निश्चयः ।
अत्रानुरूपं राजर्षे विमृश स्वमनीषया ॥ १९ ॥

एवं धर्मे प्रवदति स सम्राड् द्विजसत्तम ।
समाहितेन मनसा विदित्वा प्रत्यचष्ट तम् ॥ २० ॥

---

हे पुरुषर्षभ, यतो जीवानां क्लेशबीजानि स्युः वयं तं पुरुषं अयमेवेति न जानीमः । अनेकक्लेशबीजप्रतिपादकवेदवाक्यविमोहिताः ॥ १७ ॥

वाक्यभेदमेवाह केचिदित्यादिना । केचिद्विकल्पं विकल्पसन्देहोपेतं वचः येषां ते तथोक्ताः । सन्दिग्धवचस इत्यर्थः । आत्मनः स्वस्य क्लेशबीजं आत्मानं स्वमेवाहुः । केचित् साङ्ख्याः आत्मानं अन्तःकरणं तत्कारणमाहुः । वैकल्पवचसः प्रकृतिपुरुषयोः विवेकाग्रहवचनाः । एके सम्यक् ज्ञानिनः दैवं सर्वदेवप्रधानं हरिं क्लेशबीजं आहुः । अपरे प्रभुं स्वभावं कालं क्लेशबीजमाहुः । 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधी'ति श्रुतेः । स्वशब्दवाच्याद्विष्णोः भावः उत्पत्तिः यस्य सः स्वभावः ॥ १८ ॥

अनन्तत्वात् सर्वात्मना अप्रतर्क्यात् तर्काविषयात् अनिर्देश्यात् प्रधानात् क्लेशपरम्परा, सर्वेषां जीवानां प्रकृत्या पिहितत्वादिति केष्वपि निश्चयः । अथवा अप्रतर्क्यात् प्रकर्षेण तर्कायोग्यात् सत्त्वेनासत्त्वेन सदसत्त्वेन वा निर्वक्तुमशक्यात् भावरूपाज्ञानादिति केषु मायावादिषु निश्चयः । राजश्रेष्ठ, एषु पक्षेषु अनुरूपं श्रुतिस्मृत्यनुकूलं विमृश स्वबुद्ध्या आलोच्य निश्चिनु इति ॥ १९ ॥

धर्मे एवं प्रवदति सति सः सम्राट् समाहितेन एकाग्रेण मनसा आलोच्य स्वाधीनैः कर्मकालप्रधानैः दैवमेव अस्वतन्त्राणां जीवानां दुःखादिबीजम् । अधर्मादीनां दुःखबीजत्वञ्चावान्तरम् । स्वतन्त्रकर्मादीनां दुःखबीजत्वपक्षो हेय एव । एते च अधर्मभुवः इति विदित्वा[2] तं प्रत्याचष्टेत्यन्वयः[3] ।

---

१ स्वातन्त्र्येण - क । २ स्वकोशेऽप्ययं पाठः । एते चाधर्मादिवेति विदित्वा - ङ । इत्येवं धर्मान् विदित्वा - घ छ ज । ३ अयं ग घ ज पाठः । अन्यत्र - प्रत्यचष्ट ।

राजोवाच-

धर्मं ब्रवीषि धर्मज्ञ धर्मोऽसि वृषरूपधृक् ।
यदधर्मकृतः स्थानं सूचकस्यापि तद्भवेत् ॥ २१ ॥
अथवा देवमायाया नूनं गतिरगोचरा ।
चेतसो वचसश्चापि भूतानामिति निश्चयः ॥ २२ ॥

---

आत्मादिशब्दवाच्यं परमात्मानं क्लेशबीजं विदित्वेति वा । आदानादिकर्तृत्वादात्मा । देवोऽमत्वा-दैवम् । क्रियाविषयत्वात् सकलकरणशक्तिमत्वाद्वा कर्म । स्वस्मात् भावः प्रकाशो यस्य सः स्वभावः । स्वां स्वरूपभूतां भां प्रकाशं वाति गच्छति न परप्रकाशमिति स्वभावः । स्वयंप्रकाश इत्यर्थः । अप्रतर्क्यात् दुस्तर्काविषयत्वात् अप्रसिद्धत्वात् अनिर्वाच्यात् 'अप्रसिद्धेरवाच्यं तदि'ति स्मृतेः । इति सर्वेषु पक्षेषु हरिरेवोच्यते क्लेशबीजत्वेन । 'अहं सर्वस्य प्रभवः मत्तः सर्वं प्रवर्तते । इति मत्वा भजन्ते मां बुधा भावसमन्विताः' । 'बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः । सुखं दुःखं भावो भावो भयञ्चाभयमेव च । अहिंसा समता तुष्टिः तपो दानं यशोऽयशः । भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' इत्यादेश्च । 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । न तु मामभिजानन्ति तत्वेनातश्च्यवन्ति ते' इति स्मृतेः । पृथक्कल्पनायाः अज्ञानिविषयत्वादित्यादिकं 'समाहितेन' 'सम्राडि'ति पदद्वयेनोक्तमिति ज्ञातव्यम् । सम्यक् राजते प्रकाशते सर्वमस्येति सम्राट् । अत आत्मवैरूप्यकर्तारं न विजानीम इति वदन्तं धर्ममब्रवीदित्यन्वयः । समाहितेन चेतसा ज्ञानेन तं धर्मं भगवन्तं प्रत्यचष्ट दृष्टवान् । अपरोक्षदर्शनेन तस्य निजरूपमद्राक्षीदित्यर्थः । दृष्ट्वा चाब्रवीदिति शेषः ॥ २० ॥

किमब्रवीदिति तत्राह धर्ममिति । हे धर्मज्ञ, धर्मं ब्रवीषि यतः तस्मात् त्वं धर्मोऽसि । न वृषः । अपि तु अज्ञजनमोहनाय वृषरूपं असे । यदुक्तं 'आत्मवैरूप्यकर्तारं न विजानीम इति' तत्राह– यदिति । 'असत्कृतमधर्मं तु वदन् धर्ममवाप्नुयात्' इति वचनात् अस्य वृषलस्य आत्मवै-रूप्यकर्तृत्वसूचने दोषाभावेऽपि 'यद्यधर्मः कृतः सद्भिः न स वाच्यः कथञ्चनेति' वाक्यात् सज्जनैरु-धर्मकृतः यत् स्थानं नरकादिलक्षणं तत्सूचकस्यापि तत्स्थानं भवेदिति ज्ञापनाय त्वया आत्मवैरूप्यकर्ता न ज्ञापितः इत्यतो धर्मं ब्रवीषीत्यर्थः ॥ २१ ॥

'यतः क्लेशबीजानि, तं न विजानीम' इति वदतः तवाभिसन्धिरयं वेति वक्तीत्याह– अथ-वेति । मादृशानां गोचराऽपि नूनं प्रायेण भूतानां चेतसो वचसश्च देवमायायाः सर्वजीवानां

तपः शौचं दया सत्यं इति पादाः कृते कृताः ।
अधर्मांशैस्त्रयो भग्नाः स्मयसङ्गमदैस्तव ॥ २३ ॥

इदानीं धर्मपादस्ते सत्यं निर्वर्तसे यतः ।
तं जिघृक्षत्यधर्मोऽयमनृतेनैधितः कलिः ॥ २४ ॥

इयञ्च भूर्भगवता न्यासितोरुभरा सती ।
श्रीमद्भिस्तत्पदन्यासैः सर्वतः कृतकौतुका ॥ २५ ॥

शोचन्त्यश्रुकला साध्वी दुर्भगेवोज्झिताऽधुना ।
अब्रह्मण्याः नृपव्याजाः शूद्रा भोक्ष्यन्ति मामिति ॥२६॥

---

मुख्यैश्वर्ये क्लेशवर्जितस्य देवस्य हरेः इच्छायाः गतिः स्थितिः अधर्मेण धर्मं शोचयामीत्यादिका अगोचरेति ज्ञापयितुं सर्वज्ञेन भवता 'न जानीम' इत्युक्तमिति भवदभिप्रायनिश्चयः इति ॥ २२ ॥

तत्र तपआदिचत्वारः ये पादाः कृतयुगे कृताः पूर्णाः अवर्तन्त तेषां मध्ये त्रयः पादाः तपःशौचदयाख्याः अधर्मांशैः अधर्मपादैः स्मयसङ्गमदैः भग्नाः । स्मयेन तपोभङ्गः स्त्रीसङ्गेन शौचभङ्गः मदेन दयाभङ्गः ॥ २३ ॥

इदानीं अस्मिन्युगे यतः येन पादेन निर्वर्तसे हे धर्म, ते तव पादः सत्यं सत्यात्मकत्वविशिष्टः अनृतेन अधर्मपादेन एधितः वर्धितः अधर्मात्मकः कलिः तं सत्याख्यं पादं जिघृक्षति तं ग्रहीतुमिच्छति । ग्रसितुमाकाङ्क्षते इत्यन्वयः ॥ २४ ॥

येयं[3] भूश्च भगवता न्यासितः अवरोपितः उरुः महान् भरः भारः यस्याः सा तथोक्ता श्रीमद्भिः तस्य हरेः पदन्यासैः पदपरिक्रमणैः सर्वतः कृतकौतुका रचितालङ्कारा रचितरोमाञ्चेति वा सती निर्मलाऽभूत् ॥ २५ ॥

सेयं साध्वी अधुना तत्पदन्यासैः उज्झिता रहिता दुर्भगेव भाग्यहीना स्त्रीव शोचन्ती अश्रुकला सन्ततस्रुतनेत्रजलधारा आस्ते इत्यन्वयः । किं कृत्वा ? अब्रह्मण्याः ब्राह्मणभक्तिरहिताः नृपव्याजाः शूद्राः मां भोक्ष्यन्ति पालकव्याजेन भुञ्जते[4] इति ॥ २६ ॥

---

१ अयं क ग ङ छ पाठः । अन्यत्र - मुख्यानुख्यक्लेशवर्जितस्य । २ अयं ङ पाठः । अन्यत्र-रोचयामि ।
३ अयं ङ पाठः । अन्यत्र - इयं । ४ अयं क ख छ ङ पाठः । अन्यत्र - भोक्ष्यन्ते ।

सूत उवाच–

इति धर्मं महीञ्चैव सान्त्वयित्वा महारथः ।
निशातमाददे खड्गं कलयेऽधर्महेतवे ॥ २७ ॥

तज्जिघांसुमभिप्रेक्ष्य विहाय नृपलाञ्छनम् ।
तत्पादमूलं शिरसा समगाद्भयविह्वलः ॥ २८ ॥

पतितं पादयोर्वीरः कृपया दीनवत्सलः ।
शरण्यो नावधीच्छ्लोक्य आह चेदं हसन्निव ॥ २९ ॥

राजोवाच–

न ते गुडाकेशयशोधराणां बद्धाञ्जलेर्वै भयमस्ति किञ्चित् ।
न वर्तितव्यं भवता कथञ्चित् क्षेत्रे मदीये त्वमधर्मबन्धुः ॥ ३० ॥

त्वां वर्तमानं नरदेवदेहेष्वनुप्रवृत्तोऽयमधर्मपूगः ।
लोभोऽनृतं चौर्यमनार्यमंहो[1] ज्येष्ठा च माया कलहश्च दम्भः ॥३१॥

न वर्तितव्यं तदधर्मबन्धो धर्मेण सत्येन च वर्तितव्ये ।
ब्रह्मावर्ते यत्र यजन्ति यज्ञैः यज्ञेश्वरं यज्ञवितानविज्ञाः ॥ ३२ ॥

---

अधर्महेतवे अधर्मकारणाय । निशातं तेजितम् हन्तुमिति शेषः ॥ २७ ॥

जिघांसु हन्तुकामम् । पादमूलं समगात् । अष्टाङ्गविशिष्टतया अनंसीदित्यन्वयः ॥ २८ ॥

श्लोक्यः कीर्तिकामः ॥ २९ ॥

गुडाकेशयशोधराणां अर्जुनकीर्तिं बिभ्रतां कौरवाणां अस्माकमर्थे बद्धोऽञ्जलिः येन सः तथोक्तः तस्य । गुडाकेशयशोधराणां सकाशात् भयं नास्तीति वा । किन्तु हे कले त्वया मदीये क्षेत्रे कथञ्चिदपि न वर्तितव्यमित्यन्वयः । देहमारभ्य राष्ट्रपर्यन्तस्थानविवक्षया क्षेत्र इत्युक्तम् । कुत इति तत्राह– **त्वमिति** । अधर्म एव बन्धुर्यस्य स तथोक्तः । अधर्मबन्धुत्वादिति भावः ॥ ३० ॥

ततश्च किमिति तत्राह– **त्वामिति** । नरदेवानां धर्मपालकानां राज्ञां देहेषु वर्तमानं सन्निदधानं त्वां अनु अनन्तरं अयं लोभाद्यधर्मयूथः प्रवृत्तो भवतीति यस्मात् तस्मात् अधर्मबन्धो हे कले सत्येन

---

1 क कोशेऽप्ययं पाठः । याठुपलानुसारी च । अनार्यमंहो - ग घ ङ छ ज ट ठ ।

यस्मिन्हरिर्भगवानिज्यमान इष्टात्ममूर्तिर्यजतां शं तनोति ।
कामानमोघान्स्थिरजङ्गमानामन्तर्बहिर्वायुरिवेश आत्मा ॥ ३३ ॥

परीक्षितैवमादिष्टः स कलिर्जातवेपथुः ।
तमुद्यतासिमाहेदं दण्डपाणिमिवोद्यतम् ॥ ३४ ॥

यत्र क वाऽथ वत्स्यामि सार्वभौम तवाज्ञया ।
लक्षये तत्र तत्रापि त्वामात्तेषुशरासनम् ॥ ३५ ॥

तन्मे धर्मभृतां श्रेष्ठ स्थानं निर्देष्टुमर्हसि ।
यत्रैव नियतो वत्स्य आतिष्ठंस्तेऽनुशासनम् ॥ ३६ ॥

सूत उवाच—

अभ्यर्थितस्तदा तस्मै स्थानानि कलये ददौ ।
द्यूतं पानं स्त्रियः सूना यत्राधर्मश्चतुर्विधः ॥ ३७ ॥

---

धर्मेण च वर्तितव्ये ब्रह्मावर्ते विन्ध्यहिमवत्पर्वतयोर्मध्ये पुण्यदेशे न वर्तितव्यमित्यन्वयः । 'लुभ गार्द्ध्ये' इति धातोः लोभः परवित्ताभिलाषः । सद्व्यये प्राप्ते स्ववित्तापरित्यागो वा । ज्येष्ठा अलक्ष्मीः । माया निकृतिः । यत्र यस्मिन् ब्रह्मावर्ते स्वाध्यायादिब्रह्मयज्ञः चरुपुरोडाशादिद्रव्यलक्षणवितानयज्ञश्च येषां ते ब्रह्मवितानयज्ञाः मुनयः यज्ञैः यज्ञेश्वरं यजन्ति ॥ ३१ ॥ ३२ ॥

यस्मिन् इष्टात्ममूर्तिः इच्छातनुः इज्यमानो[1] हरिः भगवान् यजतां पुंसां शं सुखं तनोति प्रपञ्चयति अमोघान् कामानपि तनोतीति । किंविशिष्टो हरिः? स्थिरजङ्गमानां अन्तर्बहिः वर्तमानः । क इव ? वायुरिव । आत्मा व्याप्तः । ईशः प्रवर्तकः ॥ ३३ ॥

उद्यतं सन्नद्धं दण्डपाणिं यमनिव स्थितं उद्यतासिं उद्धृतखड्गम् ॥ ३४ ॥

यत्र क वा त्वदुक्तस्थले वत्स्यामीति अन्वयः । लक्षये पश्यामि ॥ ३५ ॥

हे धर्मभृतां श्रेष्ठ तत्स्थानं निर्देष्टुमर्हसीत्यन्वयः । आतिष्ठन् अनुतिष्ठन् वत्स्ये वसानि ॥ ३६ ॥

कानि तानि स्थानानि इति तत्राह– द्यूतमिति । द्यूतं देवनम् । पीयत इति पानं मद्यम् । सूना प्राणिहिंसनम् । यत्र येषु स्थानेषु चतुर्विधः अधर्मः पापं, स्यादिति शेषः ॥ ३७ ॥

---

१ इज्यमानो - क ग घ छ ट ; इज्यमान - ज ।

पुनश्च याचमानाय जातरूपमदात्प्रभुः ।
ततोऽनृतं मदः कामो रजो वैरश्च पञ्चमम् ॥ ३८ ॥

अमूनि पञ्चस्थानानि ह्यधर्मप्रभवः कलिः ।
औत्तरेयेण दत्तानि न्यवसत्तन्निदेशकृत् ॥ ३९ ॥

अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित् ।
विशेषतो धर्मशीलो राजा लोकपतिर्गुरुः ॥ ४० ॥

वृषस्य नष्टांस्त्रीन्पादांस्तपः शौचं दयामिति ।
प्रतिसन्दध आश्वास्य महीश्च समवर्धयत् ॥ ४१ ॥

स एष एतर्ह्यध्यास्त आसनं पार्थिवोचितम् ।
पितामहेनोपन्यस्तं राज्ञाऽरण्यं विविक्षता ॥ ४२ ॥

आस्तेऽधुना स राजर्षिः कौरवेन्द्रैः[2] श्रियोल्लसन् ।
गजाह्वये महाभागश्चक्रवर्ती बृहच्छ्रवाः ॥ ४३ ॥

---

जातरूपं सुवर्णम् । तत्फलमाह– तत इति । ततः द्यूतादिभ्यः अनृतादीनि पापसाधनानि, भवन्तीति शेषः ॥ ३८ ॥

तस्य राज्ञः निदेशकृत् आज्ञाकृत् अधर्मप्रभवः अधर्मोत्पादकः । अमूनि द्यूतादीनि पञ्चस्थानानि ॥ ३९ ॥

बुभूषुः पुरुषार्थकामः । लोकपतिः लोकपालः गुरुः उपदेष्टा । धर्मस्येति शेषः ॥ ४० ॥

वृषस्य धर्मस्य ॥ ४१ ॥

एतर्हि तदानीम् । पार्थिवानां राज्ञां उचितं आसनं सिंहासनं अध्यास्त इति लट् लुङर्थः । अरणं शरणं प्राप्तं[1] रक्षतीति अरण्यं वनं विविक्षता प्रवेष्टुकामेन पितामहेन पितुः पित्रा युधिष्ठिरेण उपन्यस्तं दत्तम् । आसनं अध्यास्ते इति । 'अधिशीङ्स्थासां कर्मे'ति सप्तम्यर्थे द्वितीया ॥ ४२ ॥

बृहच्छ्रवाः महाकीर्तिः ॥ ४३ ॥

---

१ अरं प्राप्तं - क ग घ छ ज ठ । २ कौरवेन्द्र - ककोशादन्यत्र पाठः ।

इत्थं भूतानुभावोऽयमभिमन्युसुतो नृपः ।
यस्य पालयतः क्षोणीं यूयं सत्राय दीक्षिताः ॥ ४४ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे सप्तदशोऽध्यायः ॥

* * *

## अथ अष्टादशोऽध्यायः ॥

सूत उवाच--

यो वै द्रौण्यस्त्रविप्लुष्टो न मातुरुदरे मृतः ।
अनुग्रहाद्भगवतः कृष्णस्याद्भुतकर्मणः ॥ १ ॥
ब्रह्मशापोत्थितायस्तु तक्षकात्प्राणविप्लवे ।
न सम्मुमोहोरुभयाद्भगवत्यर्पिताशयः ॥ २ ॥

---

यस्य क्षोणीं पालयतः सतः यूयं सत्राय यज्ञविशेषाय दीक्षिताः, सोऽयमभिमन्युसुतो नृपः इत्थंभूतानुभावः कल्यादिबन्धनलक्षणसामर्थ्योपेत इत्यन्वयः ॥ ४४ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
प्रथमस्कन्धे सप्तदशोऽध्यायः ॥

* * *

## ॥ अथ अष्टादशोऽध्यायः ॥

पुनरपि भगवति भक्तिविधानार्थं तन्माहात्म्यमनुच्यतेऽस्मिन्नध्याये । तदर्थं पारीक्षितं[1] स्वर्गणमुपक्रमते– य इति । यः अद्भुतकर्मणः श्रीकृष्णस्य अनुग्रहात् द्रौण्यस्त्रतप्तोऽपि मातुः उत्तरायाः उदरे न मृतः ॥ १ ॥

यश्च ब्रह्मशापोत्थितात्[2] ब्राह्मणशापप्रेरितात् तक्षकनागात् प्राणविप्लवे जीवनाशे प्राप्ते सति भगवत्यर्पितचित्तत्वात् मरणाख्योरुभयात न सम्मुमोह । २ ॥

---

१ परीक्षितः - ग ङ ट । २ ब्रह्मकोपो - ख ।

उत्सृज्य सर्वतः सङ्गं विज्ञानार्जितसंस्थितिः ।
वैयासकेर्जहौ शिष्यः गङ्गायां स्वकलेवरम् ॥ ३ ॥

नोत्तमश्लोकवार्तानां जुषतां तत्कथामृतम् ।
स्यात्सम्भ्रमोऽन्तकालेऽपि स्मरतां तत्पदाम्बुजम् ॥ ४ ॥

तावत्कलिर्न प्रभवेत्प्रविष्टोऽपीह सर्वतः ।
यावदीशो महानुर्व्यामाभिमन्यव एकराट् ॥ ५ ॥

---

सः परीक्षित् सर्वतः सर्वेषु राज्यादिषु स्नेहलक्षणं सङ्गं उत्सृज्य वैयासकेः श्रीशुकस्य शिष्यो भूत्वा तदुपदेशेनात्मयोग्यविज्ञानं स्वदिव्यरूपपरतत्वापरोक्षज्ञानम् । तेन आर्जिता सम्पादिता संस्थितिः मुक्तिः येन सः तथोक्तः । गङ्गायां प्रासादे स्वकलेवरं जहावित्यन्वयः ॥ ३ ॥

नैतदाश्चर्यमित्याह– नेति । उत्तमश्लोकस्य वार्ता प्रसङ्गो येषां ते तथा । उत्तमश्लोके एव वार्ता जीविका येषां ते तथेति वा । तेषां श्रवणपुटेन तस्य हरेः कथामृतं जुषतां श्रवणव्याजेन सेवमानानां तस्य पादपद्मञ्च स्मरतां अन्तकाले मरणकाले सम्भ्रमो न स्यादित्यन्वयः । निरन्तरं हरिचरणनिषेवणेन आत्यन्तिकप्रकृतसम्बन्धसर्वदेहविरहमिच्छतां दैनंदिनमरणभयं नास्तीति किमु वर्णनीयमित्यपिशब्दार्थः । उत्तमश्लोकवार्तादिष्वेकमेवालम् । मिलितं किं वर्णनीयमिति वा ॥ ४ ॥

मदीये राष्ट्रे न वर्तितव्यमित्यस्याभिप्रायः कलेः सामर्थ्यप्रकटनाभाव एव । न तु प्रवेशाभाव इत्यभिप्रेत्याह– तावदिति । आभिमन्यवः अभिमन्योः पुत्रः परीक्षित् एकराट् चक्रवर्ती यावत् यावन्तं कालं उर्व्यां आस्ते इत्यन्वयः । कीदृशः ? महानीशः सप्तद्वीपवत्याः भुवः अधिपतिः न मण्डलेश इत्यर्थः । तावत् तावन्तं कालं इह सर्वत्र प्रविष्टोऽपि कलिः न प्रभवेत् स्वशक्तिप्रकटनसमर्थो नाभूदित्यन्वयः ॥ ५ ॥

---

१ आत्मयोग्यविज्ञानार्जितस्वदिव्यरूपपरतत्वसंस्थितिः गङ्गायां - ख ग ङ ट ड ।

२ उत्तमश्लोकस्य - क ग घ छ ज ठ ।

यस्मिन्नहनि यर्ह्येव भगवानुत्ससर्ज गाम् ।
तदैवेहानुवृत्तोसावधर्मप्रभवः कलिः ॥ ६ ॥
नानुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक् ॥
कुशलान्याशु सिद्ध्यन्ति नेतराणि कृतानि यत् ॥ ७ ॥
किन्तु बालेषु शूरेण कलिना शूरभीरुणा ।
अप्रमत्तः प्रमत्तेषु यो वृको नृषु वर्तते ॥ ८ ॥
उपवर्णितमेतद्वः पुण्यं पारीक्षितं मया ।
वासुदेवकथोपेतमाख्यानं यदपृच्छथ ॥ ९ ॥
या याः कथाः भगवतः कथनीयोरुकर्मणः ।
गुणकर्माश्रया पुम्भिः सेव्यास्ताः बुभूषुभिः ॥ १० ॥

ऋषय ऊचुः—

सूत जीव समाः सौम्य शाश्वतीर्विशदं यशः ।
यस्त्वं शंससि कृष्णस्य मर्त्यानाममृतं हि नः ॥ ११ ॥

---

कदानु उर्व्यां कलिः प्रविष्ट इति तत्राह— यस्मिन्निति । सारङ्गो मधुकर इव सारभुक् सारग्राही सम्राट् कलिं नानुद्वेष्टीत्यन्वयः । कुत इति तत्राह— कुशलानीति । कुशलानि सुकृतानि । इतराणि पापानि । यत् यस्मात् ॥ ७ ॥

इतोप्युदास्ते इत्याह— किन्त्विति । धर्मज्ञानादिकं वृणोति आवृणोति नाशयतीति वृकः । शूरेषु भीरुणा बालेषु शूरेण कलिना किंतु किम्प्रयोजनम् ॥ ८ ॥

उपसंहरति— उपवर्णितमिति ॥ ९ ॥

यथेयं पारीक्षिती कथा भगवतो गुणकर्माश्रयत्वात् सेव्याऽऽसीत् तथा अन्या अपि तादृश्यः कथाः मुमुक्षुभिः सेव्या इत्याह— या या इति । कथनीयानि उरूणि कर्माणि यस्य सः तथोक्तः । तस्य । बुभूषुभिः मोक्षकामैः ॥ १० ॥

सूत यस्त्वं श्रीकृष्णस्य विशदं यशोऽमृतं नरणधर्मिणां अस्माकं शंससि हि यस्मात् तस्मात् । आशीर्लक्षणसोमार्हं, भद्रेति वा । सुनायाः अपत्येति वा । सुना रोमहर्षणभार्या । शाश्वतीः समाः बहुवर्षान् जीव । शतवर्षादुपर्यपि प्राणान् धारयेत्येकान्वयः ॥ ११ ॥

---

१ मूलश्लोके टीकायां च अयं पाठः ब छ ट कोशगतः स्वीकृतः । अन्यत्र - किंतु ।

कर्मण्यस्मिन्ननाश्वास्ये धूमधूम्रात्मनां भवान् ।
आपाययति गोविन्दपादपद्मासवं मधु ॥ १२ ॥

तुलयाम लवेनाऽपि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ १३ ॥

---

'कर्मणा ज्ञानमातनोती'त्यादिश्रुतिप्रत्ययात् अन्तःकरणशुद्धिद्वारा हरिज्ञानलब्धये यागपरम्पराभिः अनाश्वास्ये[1] श्वसनोक्षानवसरे अन्यप्रसङ्गावसरविधुरे वा अतएव हरिकथावर्णने[2] सावसरे अस्मिन्नुपक्रान्ते सत्राख्ये कर्मणि हर्युद्देशेन सुहुतहविराज्याद्युद्भूतधूमेन धूम्रः आत्मा मनआदीन्द्रियजातं येषां ते तथोक्ताः । 'कर्मणि षष्ठी' दर्शनात् । तेन धूमेन धूम्रतया पवित्रीकृतशरीरानस्मान् मधु मधुरं गोविन्द-पादपद्मासवं आपाययतीत्यन्वयः । पादपद्मात् आसूयत इत्यासवं मधु वा । अनेन सत्रयागः सफलो जात इत्युक्तं भवति ॥ १२ ॥

दीर्घकालीनसत्रकरणमन्तरेणाल्पकालीनयज्ञकरणेन शुद्धान्तःकरणजन्यज्ञानान्मोक्षः सुकर इत्याशङ्क्याह– तुलयामेति । भगवत्सङ्गिनां वैष्णवानां सङ्गस्य सेवालक्षणस्य सकाशात् यत् सुखं तस्य लवेनापि तल्लक्षणकालावच्छिन्नभागेनापि सह स्वर्गं दुःखासम्भिन्नप्रदेशं नाकलक्षणं अपुनर्भवं कैवल्यं सम्यक्स्वरूपा[3]भिव्यक्ति[4]जननाभावलक्षणं न तुलयाम तुलयितुं न प्रभवामः । लडर्थे लोट् । प्रार्थनायां वा । मर्त्यानां मर्त्यशरीरभोग्यराज्यादिसम्पदः किमुत । न तुलयामेति किमु वक्तव्यम् । सायुज्यादिविशिष्टफलहेतुत्वेनान्तरङ्गत्वात् न सम इत्यर्थः । क्षिप्रमुक्तौ तदनन्तरं पूर्वलाभादतिरिक्तफल-विशेषाभावात् चिरसमयसङ्कीर्णमहत्सेवादिलक्षणसङ्गस्य अतिसुखहेतुत्वेन तस्य चेह दीर्घसत्रकरणव्याजेन सम्भवादिदमेव सर्वैः अनुष्ठातव्यमित्युक्तमनेनेति भावः ॥ १३ ॥

---

१ अयं घजपाठः । अन्यत्र - अनाश्वासे ।

२ अन्यत्र नंगा - कोशान्तरेषु सर्वत्र पाठः ।

३ अयं ग घ ङ ट ठ पाठः । अन्यत्र - कर्णनि ।

४ स्वरूपानन्दव्यक्ति - ख च छ ।

को नाम तृप्येद्रसवित्कथायां महत्तमैकान्तपरायणस्य ।
नान्तं गुणानामगुणस्य जग्मुर्योगेश्वरा ये भवपाद्ममुख्याः ॥ १४ ॥
ततो भवान्वै भगवत्प्रधानो महत्तमैकान्तपरायणस्य ।
हरेरुदारं चरितं विशुद्धं शुश्रूषतां नो वितनोतु विद्वन् ॥ १५ ॥
तन्नः परं पुण्यमसंवृतार्थमाख्यानमत्यद्भुतयोगनिष्ठम् ।
आख्याह्यनन्ताचरितोपपन्नं पारीक्षितं भागवताभिरामम् ॥१६॥

---

श्रुतभगवत्कथानामप्यस्माकं न तत्कथायां अलम्बुद्धिरित्याशयवन्तः आहुरित्याह- **को नामेति** । ये भवपाद्ममुख्याः भवः शिवः, पाद्मः ब्रह्मा, तौ मुख्यौ येषां ते तथोक्ताः । योगेश्वराः तत्तदधिकारियोग्यमोक्षोपायोपदेष्टृप्रधानाः ते अगुणस्य सत्वादिगुणरहितस्य सर्वकार्येषु प्रधानस्य वा यस्य ज्ञानादिगुणानां अन्तं अवसानं न जग्मुः । को नाम पुमान् तस्य मुक्तामुक्तब्रह्मादीनां महत्तमानां एकान्ततो नियमेन परायणस्य उत्तमाश्रयस्य, महत्तमेभ्यः एकान्ततः परायाः उत्कृष्टायाः श्रियोऽपि अयनस्य वा हरेः कथायां तृप्येत् अलंबुद्धिं प्राप्नुयादित्यन्वयः । कीदृशः ? रसवित् सारज्ञानी स्वादुविद्वान् ॥ १४ ॥

ततः किमिति तत्राह- तत इति । अलम्बुद्धिर्नास्तीति यतः ततः हे विद्वन् ! भगवतां सौभाग्यवतां पुंसां प्रधानो भवान् हरेः उदारं चरितं अस्माकं वितनोतु विस्तारयत्वित्यन्वयः । भगवानेव प्रधानो यस्य मते स तथेति वा । महत्तमश्च एकान्तश्च परायणश्चेति महत्तमैकान्तपरायणः । महतां ब्रह्मादीनां अतिशयेन श्रेष्ठः अन्ते प्रलये एक एव न द्वितीयोऽस्ति । पराः मुक्ताः तेषां आश्रयः । शुश्रूषतामित्यनेन श्रवणशीलेन[1] स्वाभाविकमिति दर्शयति ॥ १५ ॥

हरेरुदाराचरितानां अनन्तत्वात् तेषां मध्ये किं वक्ष्यामि इति प्रश्नो मा भूदित्यभिलषितचरितमिदमित्याहुरित्याह- **तन्न इति** । तत् आख्यानं अस्माकं आख्याहीत्यन्वयः । परं उत्कृष्टं पुण्यं पुनानम् । असंवृतः स्पष्टः अर्थः पुरुषार्थः यस्मात् भवति तत्तथोक्तं तत् । अत्यद्भुतानां योगानां भक्तिज्ञानादिलक्षणानां निष्ठा प्रतिपाद्यतया नितरां स्थितिः यस्मिन् तत्तथोक्तं तत् । कालतो देशतश्चानन्तस्यापरिच्छिन्नस्य हरेः चरितेनोपपन्नं सहितम् । तथा पारीक्षितं परीक्षित्सम्बन्धि । भागवतानां अभिरामं मनोहरम् । भागवताः अभिरमन्ते अस्मिन्निति वा । भगवत्सम्बन्धित्वाद्वा अभिरामं तदिति[2] ॥ १६ ॥

---

१ श्रवणशीलवतां - ख ङ ।   २ तदितीति ग पाठः । अन्यत्र नास्ति ।

स वै महाभागवतः परीक्षिद्येनापवर्गाख्यमदभ्रबुद्धिः।
ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलम् ॥ १७ ॥

सूत उवाच—
अहो वयं जन्मभृतो महात्मन्वृद्धानुवृत्त्यापि विलोमजाताः।
दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोगः ॥१८॥

कुतः पुनर्गृणतो नाम तस्य महत्तमैकान्तपरायणस्य।
योऽनन्तशक्तिर्भगवाननन्तो महद्गुणत्वाद्यमनन्तमाहुः ॥ १९ ॥

---

किं तदिति[1] तत्राह— स वा इति। अदभ्रबुद्धिः पूर्णज्ञानः महाभागवतः सः परीक्षित् वैयासकिना श्रीशुकेन शब्दितेन उपदिष्टेन श्रुतेन ज्ञानेन येन अपवर्गाख्यं खगेन्द्रध्वजस्य गरुडध्वजस्य पादमूलं भेजे इत्यन्वयः। वा इत्यनेन आख्यानस्य ऽपृष्टसाधनावबोधकत्वेनोपादेयत्वं दर्शयतीति ॥१७॥

हे महात्मन् शौनक विलोमजाताः हीनजन्मानोऽपि वयं ज्ञानवृद्धानां अनुवृत्त्या सेवया जन्मभृतः सफलजन्मानोऽभूमेत्यन्वयः। अहो आश्चर्यं अत्नाद्भाग्यम्[2]। कुतः? महत्तमानां अभिधानं गोष्ठी तस्य योगः सम्बन्धः। अभिधानेन नाम्ना योग इति वा। दुष्कुलोत्पत्तिनिमित्तं दौष्कुल्यं आधिं मनोदुःखं शीघ्रं विधुनोतीत्येकान्वयः॥ १८ ॥

कैमुत्यमाह— कुत इति। महत्तमैकान्तपरायणस्य तस्य हरेः नाम गृणतः पुंसः आधिं विधुनोतीति कुतः पुनः किं वक्तव्यमित्यन्वयः। अनन्ताः अपरिमिताः शक्त्यो यस्य स तथा। देशादितः परिच्छेदो न विद्यते यस्य सोऽनन्तः सः भगवान् अनन्तशक्तिः अनन्तश्च। न केवलं ताभ्यामानन्त्यं किन्तु गुणानन्त्यमप्यस्तीत्याह— महदिति। महान्तो गुणाः महद्गुणाः तेषां भावः महद्गुणत्वं तस्मात्। छान्दसत्वात् महच्छब्दस्य महादेशाभावः। यं भगवन्तं अनन्तगुणतः परिच्छेदरहितं 'सत्यं ज्ञानमनन्तमित्या'दिवेदान्ताः आहुरित्यन्वयः॥ १९ ॥

---

१ तदिति ग पाठः। अन्यत्र नास्ति।    २ अयं क पाठः। अन्यत्र तावद्भाग्यम्।

एतावताऽलं ननु सूचितेन गुणैरसाम्येऽनतिशायनेऽस्य ।
हित्वेतरान्प्रार्थयतो विभूतिर्यस्याङ्घ्रिरेणुं जुषतेऽनभीप्सोः ॥२०॥

अथापि यत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भः ।
सेशं पुनात्यन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थः ॥

यत्रानुरक्ताः सहसैव धीराः व्यपोह्य देहादिषु सङ्गमूढम् ।
व्रजन्ति तत्पारमहंस्यसत्यं यस्मिन्नहिंसोपरमश्च धर्मः ॥ २२ ॥

---

प्रार्थयतः, कटाक्षमोक्षमिति शेषः । इतरान् ब्रह्मादीन् हित्वा कटाक्षवीक्षामकृत्वा विभूतिः महालक्ष्मीः स्वरतत्वात् अनभीप्सोः अनिच्छोः यस्य हरेः अङ्घ्रिरेणुं अनवरतं जुषते सेवते तस्यास्य हरेः असाम्ये अद्वितीयत्वे तथा गुणैः अनतिशायने[1] आधिक्यराहित्ये सर्वोत्तमत्वे च सूचितेन लक्ष्मीपतित्वेनैतावता अलं ननु इत्येकान्वयः । 'अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः' 'श्रीमन्नन्दकटाक्षलब्धविभवब्रह्मेन्द्रगङ्गाधराः' इत्यादिश्रुतिस्मृतिशतैरितरेषां अशेषाणां लक्ष्म्याः अवरत्वात् लक्ष्मीपतित्वं विष्णोः सर्वोत्तमत्वे युक्तिरिति भावः ॥ २० ॥

अथ हरिसर्वोत्तमत्वाद्वितीयत्वसमर्थनस्य बहुयुक्तिसन्दृब्धत्वप्रकटनायेदमपि[2] भवतीत्याह– अथापीति । यस्य पादनखात् अवसृष्टं विगलितं विरिञ्चेन ब्रह्मणा उपहृतं समर्पितं अर्हणाम्भः अर्घ्यजलं, श्रीपादावनेजनोदकमिति यावत् । ईशेन सह वर्तमानं जगत् चतुर्दशभुवनं पुनाति यस्मात् अथ[3] तस्मात् लोके भुवने मुकुन्दात् मोक्षप्रदात् नारायणात् अन्यतमः अन्यः । स्वार्थे तमप् प्रत्ययः[4] । को नाम भगवत्पदार्थः । निरतिशयज्ञानादिगुणवत्तया भगवानिति नामवाच्योऽस्ति । सर्वेषां तदर्वाक्तनत्वात् न कोऽप्यस्तीत्यर्थः । अनेन विरिञ्चपूज्यत्वशिवशुद्धिकरतीर्थपदत्वभगवन्नामवाच्यत्वानि च अद्वितीयत्वसर्वोत्तमत्वसूचकानीति ज्ञातव्यम् ॥ २१ ॥

मुकुन्दत्वं विवृणोति– यत्रेति । यत्र मुकुन्दे अनुरक्ताः स्निग्धाः धीराः विषयवार्तानिवृत्तायां बुद्धौ रताः सन्तः देहादिषु रूढं प्ररूढं सङ्गं स्नेहलक्षणं सहसा विमर्शज्ञानेन व्यपोह्य निरस्य तत् परमहंसाश्रमप्राप्यं सत्यं तादृग्गुणयुक्तं ब्रह्म मुकुन्दाख्यं व्रजन्ति । यस्मिन् परमहंसाश्रमे अहिंसा

---

१ अनतिशायिते - क ।

२ संदृब्धत्व - क ग घ च छ ञ ठ     ३ अथेति क छ ज ठ पाठः । अन्यत्र नास्ति ।

४ 'अन्यः । स्वार्थे तमप् प्रत्ययः' - अयमंशो नास्ति ग छ च ट कोशेषु ।

अहं हि पृष्टोऽस्य गुणान्भवद्भिराचक्ष आत्मावगमोऽत्र यावान् ।
नभः पतन्त्यात्मसमं पतत्रिणस्तथा समं विष्णुगतिं विपश्चितः ॥

एकदा धनुरुद्यम्य विचरन्मृगयां वने ।
मृगाननुगतः श्रान्तः क्षुधितस्तृषितो भृशम् ॥ २४ ॥

जलाशयमचक्षाणः प्रविवेश स आश्रमम् ।
ददर्श मुनिमासीनं शान्तं मीलितलोचनम् ॥ २५ ॥

---

विहितातिरिक्तहिंसावर्जनं, उपरमः उं रुद्रं पाति पिबति संहरतीति वा उपो विष्णुः सर्वाधिकः तस्मिन् हरौ रमः रमणं रतिः विषयनिवृत्तिर्वा धर्मो, विहित इति शेषः । अनेन मुक्तिदानमपि सर्वोत्तमत्व-द्योतकमिति सूचितं भवति ॥ २२ ॥

'आख्याहीं'ति शौनकप्रश्नोत्तरं वक्ति – अहं हीति । अस्य हरेः गुणान् वक्तुं भवद्भिः पृष्टः अहं अत्र हरिगुणेषु यावान् आत्मावगमः आत्मनो मम अवगमः ज्ञानं तावत् आचक्षे व्याकरिष्ये । गुणानामनन्तत्वात् कस्यापि सर्वात्मना ज्ञातुं शक्तिर्नास्तीत्येतमर्थं हिशब्देनाह । न केवलमहमेवाशक्तः किन्तु अतीतानागतवर्तमाना ब्रह्मादयः सर्वेऽप्येवमेव हरिगुणविषय इति सोदाहरणमाह– नभ इति । यथा पतत्रिणः पक्षिण नभः आत्मसमं स्वशक्त्यनुसारेण पतन्ति । शक्त्यभावादेवोपरमन्ति न नभोव-सानात् अनन्तत्वादस्य । तथा ब्रह्मादयो विपश्चितः ज्ञानिनः विष्णुगतिं विष्णुज्ञानं प्रति समं आत्मशक्त्यनुसारेण यतन्ते । शक्त्यभावात् उपरमन्ति । न गोविन्दगुणानां मितत्वादिति भावः ॥२३॥

पारीक्षितमाख्यानं वक्ष्यन् तस्य निर्वेदनिमित्तब्रह्मशापं वक्तुमुपक्रमते– एकदेति । धनुरुद्यम्य सज्जं कृत्वा प्रगृह्य मृगयामुद्दिश्य वने विचरन् ॥ २४ ॥

जलाशयं जलाधारं तटाकविशेषं अचक्षाणः अपश्यन् सः परीक्षित् आश्रमं आलस्यपरिहारकारणं स्थानविशेषं प्रविवेशेत्यन्वयः । शान्तं असम्प्रज्ञातसमाधिस्थं किञ्चिन्मीलितनेत्रम् ॥ २५ ॥

प्रतिरुद्धेन्द्रियप्राणमनोबुद्धिमुपारतम् ।
स्थानत्रयात्परं प्राप्तं ब्रह्मभूतमविक्रियम् ॥ २६ ॥

विप्रकीर्णजटाच्छन्नं रौरवेणाजिनेन च ।
विशुष्यत्तालुरुदकं तथाभूतमयाचत ॥ २७ ॥

अलब्धतृणभूम्यादिरसंप्राप्तार्घ्यसूनृतः ।
अवज्ञातमिवात्मानं मन्यमानश्चुकोप ह ॥ २८ ॥

अभूतपूर्वः सहसा क्षुत्तृड्भ्यामर्दितात्मनः ।
ब्राह्मणं प्रत्यभूद्ब्रह्मन्मत्सरो मन्युरेव च ॥ २९ ॥

---

प्रतिरुद्धाः परमात्मन्येव सन्निवापिताः श्रोत्रादीनीन्द्रियाणि च प्राणश्च मनश्च बुद्धिश्च येन स तथोक्तः तम् । प्राणरोधः कुम्भके श्वासरोधः । चेष्टानिवृत्तिर्वा । अत एव शब्दादिज्ञानेभ्यः उपारतम् । तदेव स्पष्टयति– स्थानेति । जाग्रदादिस्थानत्रयात् परं अतीतं तुरीयं हरिं प्राप्तं अत एव ब्रह्मणि भूतं ब्रह्मभूतम् । प्रयत्नानन्तरेण स्वत एव मनसा स्वचिन्त्यरूपं परमात्मानं अनुभवन्तं अत एवाविक्रियं निश्चेष्टं निवातस्थदीपोपमम् । विरुद्धक्रियारहितं वा ॥ २६ ॥

विप्रकीर्णाभिः जटाभिः छन्नं संवृतम् । रुरोः कृष्णमृगस्य विद्यमानेन अजिनेन च संवृतं आसीनं वा । विशुष्यत् नीरसं तालु जिह्वामूलरूढा अनुजिह्वा[1] यस्य सः तथा सः परीक्षित् तथाभूतं एवंविशिष्टं मुनिं उदकमयाचत प्रार्थितवानित्यन्वयः ॥ २७ ॥

सः राजा चुकोपेत्यन्वयः । तस्मा इति शेषः । अलब्धं तृणभूम्यादि येन सः तथोक्तः । आदिशब्देन मधुपर्कादि गृह्यते । स्वागतमित्यादिप्रियवचनं सूनृतम् । 'तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृते'ति स्मृतेः । आत्मानं मुनिना अवज्ञातमिव मन्यमानः । क्षुधादिनिमित्तोऽयं कोप इत्यस्मिन्नर्थे ह शब्दः । इतिहासद्योतको वा ॥ २८ ॥

तस्य परीक्षितः ब्राह्मणं प्रति मन्युरभूत् । न केवलं मन्युः । किन्तु मत्सरश्चाभूदित्यन्वयः । मन्युरेव न प्रसादः इति एवशब्दार्थः । मत्सरः नायं मद्वश इति अप्रीतिश्च । कीदृशः ? अभूतपूर्वः इतः पूर्वमनुत्पन्नः । कीदृशस्य ? क्षुत्तृड्भ्यां अर्दितात्मनः पीडितमानसस्य ॥ २९ ॥

---

[1] जिह्वामूलं गूढजिह्वा - क । जिह्वामूलरूढा मृदुजिह्वा - ख । जिह्वामूलगूढाजिह्वा - घ । जिह्वामूलं गूढा जिह्वा - अन्यत्र ।

स तु ब्रह्मऋषेरंसे गतासुमुरगं रुषा ।
विनिर्गच्छन्धनुष्कोट्या निधाय पुरमागमत् ॥ ३० ॥

एष किं निभृताशेषकरणो मीलितेक्षणः ।
मृषासमाधिराहोस्वित् किन्नः स्यात्क्षत्रबन्धुभिः ॥ ३१ ॥

तस्य पुत्रोऽतितेजस्वी विहरन्बालकोऽर्भकैः ।
राज्ञाऽघं प्रापितं तातं श्रुत्वा तत्रेदमब्रवीत् ॥ ३२ ॥

अहो अधर्मः पालानां पृथ्व्याः बलिभुजामिव ।
स्वामिन्यघं यद्दासानां द्वारपानां शुनामिव ॥ ३३ ॥

---

शापनिमित्तमाह– स इति । सः राजा तस्य ब्रह्मर्षेः स्कन्धे गतासुं मृतं सर्पं धनुष्कोट्या निधाय पुरमायादित्यन्वयः ॥ ३० ॥

पुरमागच्छतस्तस्यालोचनप्रकारमाह– एष इति । एष मुनिः विषयेभ्यः प्रत्यङ्मुखतया निभृताशेषकरणः परतत्त्वविमर्शीकृतसकलेन्द्रियः मीलितेक्षणः किं नः अस्माकं क्षत्रबन्धुभिः किं स्यात् इति मृषासमाधिः मीलितेक्षणः आहोस्विदिति मनसा वितर्कयन् पुरमागमदिति पूर्वेणान्वयः ॥ ३१ ॥

तस्य ब्रह्मर्षेः पुत्रः शृङ्गीतिनामकः । तत्रेदमब्रवीदित्यन्वयः । इदमिति वक्ष्यमाणम् । किं कृत्वा ? राज्ञा परीक्षिता अघं अपराधं प्रापितं तातं पितरं श्रुत्वा । अनुचितां प्रापितमिति वा । अतितेजस्वीत्यनेन शापदानसामर्थ्यमस्यास्तीति दर्शितम् । अर्भकैः बालैः सह विहरन् । वयसा बालः न तु सामर्थ्येनेत्येतद्दर्शितं कप्रत्ययेन ॥ ३२ ॥

किमाहेति तत्राह– अहो इति । बलिभुजां काकानामिव पृथ्व्याः पालानां राज्ञां अधर्मः अन्यायः अद्य अस्माभिः दृष्टः । अहो कष्टम् । तत्कुत इति तत्राह– स्वामिनीति । शुनां स्वामिनि अघमिव ब्राह्मणदासानां तद्गृहद्वारपानां राज्ञां संप्रति स्वामिनि ब्राह्मणे अघं दृष्टमिति यत्[2] तस्मादिति ॥ ३३ ॥

---

१ अयं ङ ट पाठः । अन्यत्र - स तस्य ब्रह्मर्षेरंसे ।     २ यदिति ङ छ ट ठ पाठः । अन्यत्र - यस्मात् ।

ब्राह्मणैः क्षत्रबन्धुर्हि द्वारपालो निरूपितः ।
स कथं तद्गृहे[2] द्वाःस्थः सभाण्डं भोक्तुमर्हति ॥ ३४ ॥

कृष्णे गते भगवति शास्तर्युत्पथगामिनाम् ।
तान्भिन्नसेतूनद्याहं शास्मि पश्यत मे बलम् ॥ ३५ ॥

इत्युक्त्वा रोषताम्राक्षः वयस्यानृषिबालकान् ।
कौशिक्यप उपस्पृश्य वाग्वज्रं विससर्ज ह ॥ ३६ ॥

इतो लङ्घितमर्यादं तक्षकः सप्तमेऽहनि ।
धक्ष्यति स्म कुलाङ्गारं चोदितो मे पितृद्रुहम् ॥ ३७ ॥

---

राज्ञां विप्रदासत्वं कथमिति तत्राह– ब्राह्मणैरिति । ब्राह्मणैः दासतया द्वारपालो निरूपितः सः राजा, तस्य विप्रस्य गृहे द्वाःस्थः द्वारपालः, कथं सभाण्डं भाण्डेन सह वर्तमानं गृहं भोक्तुं नाशयितुं अर्हति ? नार्हत्येव । हि यस्मात् तस्मात् असौ स्वामिना दण्ड्य इत्यर्थः ॥ ३४ ॥

तर्हि संप्रति को दण्डकस्तेषां इति तत्राह– कृष्ण इति ॥ उत्पथगामिनां विहितमार्गं परित्यज्य गच्छतां शास्तरि कृष्णे भगवति गते भिन्नसेतून् लङ्घितमर्यादान् तानद्याहं शास्मि दण्डयामीत्यन्वयः । मे बलं सामर्थ्यं पश्यत, हे बालाः इति शेषः ॥ ३५ ॥

स च दण्ड ईदृश इति तत्राह– इतीति । रोषताम्राक्षः रोषेण रक्तनेत्रः । कौशिकी कुशपाणिः अप उपस्पृश्य आचम्य वाग्वज्रं शापलक्षणं विससर्ज दत्तवान् । राज्ञ इति शेषः । इति हारलौकिकेन हशब्देन कौशिकी नदी तस्या अपः उपस्पृश्येत्यन्यव्याख्यानं अपहस्तितमिति ज्ञातव्यम् ॥ ३६ ॥

इतोऽद्यतनादह्नः सप्तमेऽहनि मे मया चोदितः प्रेरितः तक्षकः सर्पविशेषः लङ्घितमर्यादं कुलाङ्गारं कुलनाशकं मम पितृद्रुहं परीक्षितं नाम राजानं धक्ष्यति स्म दग्धं कुर्यादित्येकान्वयः । धक्ष्यतीति लट् स्मशब्दसामर्थ्यात् लोडर्थो बोद्धव्यः । भागवतप्रधानराजदहनेऽपि सामर्थ्यद्योतनाय वाऽयं व्यत्ययः ॥ ॥ ३७ ॥

---

२ क कोशेऽप्ययं पाठः । अन्यत्र - तद्गृहं ।

ततोऽभ्येत्याश्रमं बालो गले सर्पकलेवरम् ।
पितरं वीक्ष्य दुःखार्तो मुक्तकण्ठो रुरोद ह ॥ ३८ ॥
स वा आङ्गिरसो ब्रह्मन्श्रुत्वा सुतविलापितम् ।
उन्मील्य शनकैर्नेत्रे दृष्ट्वा चांसे मृतोरगम् ॥ ३९ ॥
विसृज्य पुत्रं पप्रच्छ वत्स कस्माद्धिरोदिषि ।
केन वा ते विप्रकृतमित्युक्तः स न्यवेदयत् ॥ ४० ॥
निशम्य शप्तमतदर्हं नरेन्द्रं स ब्राह्मणो नात्मजमभ्यनन्दत् ।
अहो बतांहो महदद्य ते कृतमल्पीयसि द्रोह उरुर्दमो धृतः ॥४१॥
न वै नृभिर्नरदेवोऽपराध्यः तं शप्तुमर्हस्यविपक्वबुद्धे ।
यत्तेजसा दुर्विषहेण गुप्ता विन्दन्ति भद्राण्यकुतोभयाः प्रजाः ॥४२॥
अरक्ष्यमाणे नरदेवनाम्नि रथाङ्गपाणावयमङ्ग लोकः ।
तदा हि चोरप्रचुरो विनङ्क्ष्यत्यरक्ष्यमाणोऽविवरूथवत्क्षणात् ॥४३॥

---

आश्रमं गतः ततः गले सर्पकलेवरं कण्ठस्थितसर्पशरीरं पितरं दृष्ट्वा मुक्तकण्ठः उच्चैः रुरोदेत्यन्वयः । समाधिस्थो वाचा नोद्बोधनीय इत्यतो रोदनमुच्चैः कृतमिति अर्थद्योतको हशब्दः ॥ ३८ ॥

वै अपि । आङ्गिरसकुलोत्पन्नः सः शमीकोऽपि सुतस्य विलापितं रोदनम् । उरगं विसृज्य परिहृत्य । कस्माद्धेतोः विरोदिषीति पुत्रं पप्रच्छेत्यन्वयः । विप्रकृतं विपरीतं कृतम् ॥ ३९ ॥ ४० ॥

अतदर्हं तस्य शापस्य अर्हः योग्यो न भवतीति अतदर्हः तम् । न केवलं नाभ्यनन्दत् अनिन्दच्चेत्याह– अहो इति । अंहः पापम् । बत खेदे । अल्पीयसि अणुतरे द्रोहे अपराधलक्षणे । उरुर्दमो महादण्डः ॥ ४१ ॥

कुतोऽनिन्ददिति तत्राह– न वा इति । नराणां देवो राजा तदधीनैर्नृभिः नापराध्य इति । दुर्विषहेण यस्य राज्ञः तेजसा गुप्ताः रक्षिताः न कुतोऽपि भयं यासां ताः अकुतोभयाः प्रजाः भद्राणि विन्दन्ति लभन्ते वै यतः । बहुश्रेयोविवक्षया भद्राणीति बहुवचनम् ॥ ४२ ॥

बाधकञ्चाह– अरक्ष्यमाण इति । नरदेवान्तर्यामित्वान्नरदेवनाम्नि रथाङ्गपाणौ विष्णौ अरक्ष्यमाणे पालनमकुर्वाणे सति तदा तदानीमेवायं अरक्ष्यमाणः अपाल्यमानः चोरप्रचुरः लोकः जनः अविवरूथवत्

---

[1] तदेवि ङ पाठः अन्यत्र नास्ति ।

तदद्य नः पापमुपैत्यनन्वयं यन्नष्टनाथस्य वसोर्विलुम्पकाः ।
परस्परं घ्नन्ति शपन्ति वृञ्जते पशून् स्त्रियोऽर्थान्पुरुदस्यवो जनाः ॥
तदार्यधर्मश्च विलीयते नृणां वर्णाश्रमाचारयुतस्त्रयीमयः ।
ततोऽर्थकामाभिनिवेशितात्मनां शुनां कपीनामिव वर्णसङ्करः ॥
धर्मपालो नरपतिः स तु सम्राड् बृहच्छ्रवाः ।
साक्षान्महाभागवतो राजर्षिर्हयमेधयाट् ।
क्षुत्तृट्छ्रमान्वितो दीनो नैवास्मच्छापमर्हति ॥ ४६ ॥

---

रक्षारहितत्वेनावत् क्षणात् विनङ्क्ष्यति हि इत्येकान्वयः । 'तेना रक्षा वरूथः स्यादवरोधो निवेशनमित्य-भिधानम् ॥ ४३ ॥

नष्टनाथस्य पालकरहितस्य पशोः राष्ट्रस्य चोरादयो विलुम्पकाः नाशकाः इति यत् यस्मात् तत् तस्मात् अद्य नोऽस्माकं अनन्वयं अनुपमं अन्वयविरोधि सन्ततिनाशकरं वा पापं उपैतीत्यन्वयः । उक्तमेव विवृणोति – परस्परमिति । वृञ्जते अपहरन्ति छिन्दन्तीति वा । 'दमु हिंसायां' इति धातोः नगरनाशकाः । 'पुर गतावि'ति धातोः इतस्ततो यात्राविघ्नकरा वा । पशून् घ्नन्ति, स्त्रियः शपन्ति उपालभन्ते धर्षयन्ति, अर्थान् वृञ्जत इति विवेकः ॥ ४४ ॥

तत्परिणाकमाह– तदेति । यदा पश्चादिहन्तृशिक्षा न क्रियते तदा आर्याणां शिष्टानां सम्मतो धर्मः धर्मे अभिरुक्तानां अनुष्ठातृणां नृणां[1] विलीयते क्रमेण ह्रसितस्तिरोभवति च । कीदृशः ? त्रय्या त्रिभिर्वेदैः मीयते ज्ञायते प्रतिपाद्यत इति त्रयीमयः । अत एव वर्णाचारैराश्रमाचारैश्च युतः । धर्मलय-परिपाकमाह– तत इति । ततः वर्णाश्रमाचारयुतवैदिकार्यधर्मनाशानन्तरं कनकार्थेषु स्रक्चन्दनवनि-तादिभोगलक्षणकामेषु अभिनिवेशितः आत्मा मनः येषां ते तथोक्ताः तेषां पुंसां यथा शुनां कपीनाञ्च भक्षणभोगादावव्यवस्था तथा हीनजातीनां उत्तमजातिभिः उत्तमजातीनां हीनजातिभिः भोगसंभोगादिना वर्णानां सङ्करः कलुषीभावो भविष्यतीत्येकान्वयः ॥ ४५ ॥

परीक्षितः अदुष्टत्वे नन्विदम् । तदेव कथमिति तत्राह– धर्मपाल इति । अत्र धर्मपालादि-विशेषणानि हेतुगर्भाणि । धर्मपालत्वात् महाभागवतत्वात् राजर्षित्वात् हयमेधयाजित्वाच्च स सम्राट् न दुष्टः । अतः क्षुत्तृट्छ्रमान्वितत्वेन बुभुक्षापिपासया दीनोऽस्मदाश्रममागतः अर्घ्यादिपूजायोग्य नैव

---

१ नृणामिति ङ पाठः अन्यत्र नास्ति । २ क्षुत्तृट्श्रमान्वितो - ङ ट । क्षुत्तृट्श्रमचितो - ज ।

अपापेषु स्वभृत्येषु बालेनापक्वबुद्धिना ।
पापं कृतं तद्भगवान्सर्वात्मा क्षन्तुमर्हति ॥ ४७ ॥
तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ताः हता अपि ।
नास्य तत्प्रतिकुर्वन्ति तद्भक्ताः प्रभवोऽपि हि ॥ ४८ ॥
इति पुत्रकृताघेन सोऽनुतप्तो महामुनिः ।
स्वयं विप्रकृतो राज्ञा नैवाघं तदचिन्तयत् ॥ ४९ ॥
साधवः प्रायशो लोके परैर्द्वन्द्वेषु योजिताः ।
न व्यथन्ति न हृष्यन्ति यत आत्माऽगुणाश्रयः ॥ ५० ॥

इति श्रीमद्भागवते प्रथमस्कन्धे अष्टादशोऽध्यायः ॥

---

अलम् अलवः शापं अर्हति । तस्मात् अनिवार्यमवमापन्नमिति भावः । हयमेधैः अश्वमेधैः इष्टवानिति हयमेधयाट् ॥ ४६ ॥

इत्यमघस्य सिद्धत्वमापाद्य अनुतापपूर्वकं तदघनिष्कृतिं करोति– अपापेष्विति । सर्वात्मा सर्वान्तर्यामी श्रीनारायणः बालेन स्वभृत्येषु कृतं तत्पापं क्षन्तुमर्हतीत्यन्वयः ॥ ४७ ॥

अलदाश्रममागतोऽवज्ञातः परीक्षित् प्रभुरपि न तत्प्रतिचक्रे इत्याशयवानाह– तिरस्कृता इति । तिरस्कृताः निन्दिताः । विप्रलब्धाः वञ्चिताः । शप्ताः उपालब्धाः । क्षिप्ताः अधिक्षिप्ताः । हताः ताडिताः । अपिशब्दः प्रत्येकमभिसम्बध्यते । प्रभवोऽपि प्रतिकर्तुं समर्था अपि, प्रतिशापं कर्तुं वा । तद्भक्ताः तस्य हरेः भक्ताः अस्य तिरस्कारादिकर्तुः सम्बन्धि तत्तिरस्काराद्युद्दिश्य न प्रतिकुर्वन्ति प्रतिक्रियां नैव कुर्वन्तीत्यर्थः । हिशब्देन 'क्षमा बलमशक्तानां शक्तानां भूषणं क्षमे'ति प्रसिद्धिं दर्शयति ॥

तदघं तेन राज्ञा कृतमपराधम् । महामुनिरिति हेतुगर्भं विशेषणम् । सर्वज्ञतमत्वात् 'शरीराभिमानिन एव दुःखादिप्राप्त्या कोपोत्पत्तिः । नत्वसम्प्रज्ञातसमाधिस्थस्य । पद्मपत्रपानीयवत् अश्लिष्टदुरितत्वादित्यादिविशेषज्ञत्वादि'त्यर्थः ॥ ४९ ॥

साधूनां अयं स्वभाव इत्याह– साधव इति । द्वन्द्वेषु सुखदुःखादिषु योजिताः सङ्गमिताः साधवः यथास्थितवस्तुदर्शिनः । कुतो व्यथाद्यभाव इति तत्राह– यत इति । आत्मा गुणाश्रय इत्यस्य नकारप्रश्लेषाप्रश्लेषाभ्यां पदच्छेदः कर्तव्यः । गुणस्य अगुणस्य दोषस्य च आत्मा कर्ता जीवः स्वयमेवाश्रयः यतः तस्मादिति ॥ ५० ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां प्रथमस्कन्धे अष्टादशोऽध्यायः ॥

## अथ एकोनविंशोऽध्यायः

सूत उवाच—

महीपतिस्त्वथ तत्कर्म गर्ह्यं विचिन्तयन्नात्मकृतं सुदुर्मनाः ।
अहो मया नीचमनार्यवत्कृतं निरागसि ब्रह्मणि गूढतेजसि ॥ १ ॥

ध्रुवं ततो मे कृतदेवहेलनाद् दुरत्ययं व्यसनं नातिदीर्घात् ।
तदस्तु काममघनिष्कृताय मे यथा न कुर्यां पुनरेवमद्धा ॥ २ ॥

---

विमुक्तिसाधनेषु प्रथमापायसाधनत्वेन वैराग्यमवश्यमापाद्यं मुमुक्षुणेति परीक्षिच्चिन्ताकथनापदेशेन तत्प्रतिपाद्यते अस्मिन्नध्याये । ननु परीक्षितो धर्मपालत्वादिकं न युज्यते । नृशंसवन्नीचकर्मकरणात् । पश्चात्तापानुदयाच्चेति आशङ्कापरिहारत्वेनाह– महीपतिरिति । मुनेः स्कन्धे मृतसर्पशरीरार्पणलक्षणं आत्मना अनुष्ठितं यत्कर्म तच्चिन्तयन् सुदुर्मनाः सुष्ठु दुःखितमनाः, अभूदिति शेषः । तुशब्द ईश्वरेच्छाधीनत्वं द्योतयति । 'श्वपचादपि कष्टत्वं ब्रह्मशानादयः सुराः' इति स्मृतेः । कस्मिन् विषये अनुष्ठितं । येन महती चिन्ता सम्भाव्यते इति तत्राह– अहो इति । मया निरागसि निरपराधे गूढतेजसि अप्रकाशिततेजोलक्षणमहिम्नि ब्रह्मणि ब्राह्मणे अनार्यवत् मूर्खवत् नीचं कर्म कृतं अहो कष्टमिति । महीपतेः कर्मणो गर्ह्यत्वद्योतनाय ब्रह्मणीति[1] । सोऽप्यपराधी चेत् कथञ्चित् घटते इत्यतो निरागसीति । प्रतिक्रियासामर्थ्यप्रकटनाय गूढतेजसीति । 'ब्रह्म वेदस्तपस्तत्त्वं ब्रह्मा विप्रः प्रजापतिः' इत्यभिधानात् । 'ब्राह्मणो नावमन्तव्यो निरागास्तु विशेषतः' इति वचनात् ॥ १ ॥

तच्च दुष्कृतमपरिहार्यविपत्तिकरमिति चिन्तयतीत्याह– ध्रुवमिति । ब्राह्मणस्य[2] अवज्ञा विष्णोः अवज्ञैव[3] यतः ततः तस्माद्देवस्य हरेः हेलनात् अवज्ञानात् ध्रुवं अवश्यं दुरत्ययं अत्येतुमशक्यं व्यसनं दुःखं नातिदीर्घात् अचिरात् मे मम भविष्यतीत्यन्वयः । तद्व्यसनं मनसाऽभ्युपगच्छतीत्याह– तदिति । मे[4] अघनिष्कृताय पापप्रायश्चित्ताय तद्व्यसनं काममस्तु । कुतः ? अद्धा निरङ्कुशतया अहं पुनरेवंविधमघं यथा न कुर्यां, तथास्त्विति शेषः ॥ २ ॥

---

१ अनुगर्ह्यत्वद्योतनाय - ङ
२ एतदनन्तरं अत्येतदधिकः पाठः खङकोशाभ्यामन्यत्र ।
३ अवज्ञैवेति - ङ
४ मे इति ङ पाठः । अन्यत्र नास्ति ।

अद्यैव राज्यं बलमृद्धकोशं प्रकोपितब्रह्मकुलानलो मे ।
दहत्वभद्रस्य पुनर्न मेऽभूत्पापीयसी धीर्द्विजदेवतासु ॥ ३ ॥
स चिन्तयन्नित्थमथाशृणोद्यथा मुनेः सुतोक्तान्निर्ऋतिं तक्षकाख्यात् ।
स साधु मेने न चिरेण तक्षकादलंप्रसक्तस्य विरक्तिकारणम् ॥४॥
अथो विहायेमममुञ्च लोकं विमृश्य तौ हेयतया पुरस्तात् ।
कृष्णाङ्घ्रिसेवामभिमन्यमान उपाविशत्प्रायममर्त्यनद्याम् ॥ ५ ॥

---

नौपचारिकमिदं, आन्तरमेवेत्यभिप्रेत्य तदेवाह- **अद्यैवेति** । प्रकोपितब्रह्मकुलमेवानलः । वस्तुदाहेऽप्यलंबुद्धिर्नास्तीत्यनलः । मे मदीयत्वेनाभिमतं राज्यादिकं अद्यैव कालक्षेपमन्तरेण दहतु । भूयः अभद्रस्य मे द्विजदेवतासु पापीयसी बुद्धिः नाभूत् न भूयादित्यन्वयः । अभूदिति व्यत्ययो गाढो महानुतापसूचनायेति ज्ञातव्यम् । द्विजाश्च देवताश्च द्विजदेवताः । द्विजेषु सन्निहिताः देवता वा । द्विजरूपदेवता वा । तासु । अभद्रस्य अमङ्गलस्य । न विद्यते भाः दीप्तिः येषां ते अभाः तान् द्राति कुत्सयतीति अभद्रः । 'द्रा कुत्सायामि'ति धातुः । तद्वत् द्राणं अज्ञानं यस्य स तथेति वा । 'द्रा निद्रायामि'ति धातुः । तस्य ॥ ३ ॥

अथ इत्थं चिन्तयन् सः परीक्षित् तक्षकाख्यात् मुनेः सुतोक्तात् श्रुतेन प्रेरितात् निर्ऋतिं कृतापराधपरिहारं देहवियोगलक्षणं यथावदशृणोदित्यन्वयः । आकर्ण्य किमकार्षीदिति तत्राह- **स इति** । स चाकर्ण्य तक्षकादचिरेण भवं राज्यादिषु अलंप्रसक्तस्य मम विरक्तिकारणमभूदिति साधु मेने इत्यन्वयः ॥ ४ ॥

'स सम्राट् कस्य वा हेतोः?' इति शौनकप्रश्नं परिहरति- **अथो इति** । अथो ब्रह्मशापाकर्णनसमनन्तरमेव 'ममायं शापोऽपि विरक्तिहेतुत्वात् साधुरि'ति मन्वानः पुरस्तात् प्रथमं तौ इहलोकपरलोकौ अनित्यत्वदुःखमिश्रत्वादिना हेयतया विमृश्य अधिराट्श्रीयुतं इमं भूर्लोकं तथा अमुं स्वर्गलोकञ्च निर्विद्य विहाय अस्मिन् संसारे कृष्णाङ्घ्रिसेवैवात्यन्तिकदुःखनिवृत्तिसुखसाधनत्वात् कर्तव्येति च विमृश्य तामेव म्रियमाणस्य आत्मनः कर्तव्यामभिमन्यमानः परीक्षित् अमर्त्यनद्यां गङ्गायां प्रायमुपाविशत् यावज्जीवं अनशनव्रतं चकारेत्यन्वयः ॥ ५ ॥

---

१ महद्वाई - कोशान्तरेषु सर्वत्र ।

या वै लसच्छ्रीतुलसीविमिश्रकृष्णाङ्घ्रिरेण्वभ्यधिकाम्बुनेत्री ।
पुनात्यशेषानुभयत्र लोकान्कस्तां न सेवेत मरिष्यमाणः ॥ ६ ॥

इति व्यवसाय च पाण्डवेयः प्रायोपवेशं प्रति विष्णुपद्याम् ।
दध्यौ मुकुन्दाङ्घ्रिमनन्यभावो मुनिव्रतो मुक्तसमस्तसङ्गः ॥ ७ ॥

तत्रोपजग्मुर्भुवनं पुनाना महानुभावा मुनयः सशिष्याः ।
प्रायेण तीर्थाधिगमापदेशैः स्वयं हि तीर्थानि पुनन्ति सन्तः ॥८॥

---

किमिति गङ्गायामेव प्रायोपवेशोऽन्यत्रापि किन्न स्यादिति तत्राह– या वा इति । लसन्ती श्रीमती तुलसी लसच्छ्रीतुलसी । ब्रह्मज्ञानेन तुलां सिनोतीति तुलसी । ब्रह्मज्ञानसदृशी । ब्रह्मज्ञानस्य संसारनिवर्तकत्वं यन्माहात्म्यं तदस्या अपि अस्तीति तत्सदृशी । तनोति करोति मोक्षादिपुरुषार्थमिति तुः विष्णुः तत्र लसतीति वा तुलसी । तस्याः मञ्जरीरजोभिः विमिश्राः कृष्णस्य अङ्घ्रिरेणवः तैः महाविमलानि[1] यान्यम्बूनि जलानि तेषां नेत्री । लसच्छ्रीतुलसीमञ्जरीरजोविमिश्रश्रीकृष्णचरणरेणुममधिगतमाहात्म्याभ्यधिकसलिलप्रवाहाकुलेत्यर्थः । या च अत एवाशेषान् लोकान् उभयत्र अन्तर्बहिश्च पुनाति उभयत्र इहलोके शिष्टसंव्यवहारयोग्यतालक्षणां शुद्धिं परलोके नरकपातादिनिवर्तनलक्षणां करोतीति वा । अतो मरिष्यमाणः पुमान् कस्तां गङ्गां न सेवेत ॥ ६ ॥

अतो मरिष्यमाणोऽहं तीर्थोत्तमत्वात् विष्णुपद्यां गङ्गायां अनशनव्रतं करिष्ये इति प्रायोपवेशं प्रति व्यवसाय निश्चित्य अनन्यभावः अनन्यभावाः राज्यभारादिचिन्तारहितान्तःकरणः विष्ण्वेकचेताः मुनीनां निवृत्तानां ज्ञानिनां व्रतमिव व्रतं यस्य सः मुनिव्रतः । वाचालत्वरहितो वा । अत एव मुक्ताः समस्ताः सङ्गाः पुत्रादिविषयस्नेहाः यस्य सः मुक्तसमस्तसङ्गः । मुक्ते हरौ समस्तसङ्गः श्रोत्रादीन्द्रियैरन्यप्रसङ्गमन्तरेण तत्कथाश्रवणादिप्रसङ्गो यस्य सः तथेति वा । सः पाण्डवेयः परीक्षित् विष्णुपद्यां प्रायोपवेशं प्रति स्थितः मुकुन्दाङ्घ्रिमेव दध्यावित्येकान्वयः । चः समुच्चयेऽवधारणे वा[2] ॥७॥

यत्र परीक्षित्तिष्ठति तत्रोपजग्मुः ॥ ८ ॥

---

१ महाविमलानि - क ग ठ । माहात्म्येनाभ्यधिकानि - ख ङ । २ वाकारो नास्ति - घ ङ छ ।

अत्रिर्वसिष्ठश्च्यवनः शरद्वानरिष्टनेमिर्भृगुरङ्गिराश्च ।
पराशरो गाधिसुतोऽथ राम उचथ्य इन्द्रप्रमतीध्मवाहौ ॥ ९ ॥

मेधातिथिर्देवल आर्ष्टिषेणो भरद्वाजो गौतमः पिप्पलादः ।
मैत्रेय और्वः कवषः कुम्भयोनिर्द्वैपायनो भगवान्नारदश्च ॥ १० ॥

अन्ये च देवर्षिब्रह्मर्षिवर्याः राजर्षिवर्या अरुणादयश्च ।
नानार्षेयप्रवरान्समेतानभ्यर्च्य राजा शिरसा ववन्दे ॥ ११ ॥

सुखोपविष्टेष्वथ तेषु भूयः कृतप्रणामः स्वचिकीर्षितं यत् ।
विज्ञापयामास विविक्तचेता उपस्थितोऽग्रेऽर्घ्यगृहीतपाणिः ॥१२॥

राजोवाच—

अहो वयं धन्यतमा नृपाणां महत्तमानुग्रहणीयशीलाः ।
राज्ञां कुलं ब्राह्मणपादशौचमाराद्विसृष्टं बत गर्ह्यकर्म ॥ १३ ॥

---

मुनीन् नाम्ना[1] निर्दिशतीत्याह– अत्रिरिति । गाधिसुतः विश्वामित्रः । रामः परशुरामः । इन्द्रप्रमितिश्च इध्मवाहश्च इन्द्रप्रमतीध्मवाहौ[2] ॥ ९ ॥

कुम्भयोनिरगस्त्यः ॥ १० ॥

अन्ये च प्रसिद्धाः प्रसिद्धनामानः । नारदादयो देवर्षयः । रामादयो ब्रह्मर्षयः । विश्वामित्रादयो राजर्षयः । जातिभेदकथनार्थं पुनर्वचनम् । अरुण आदिर्येषां ते तथोक्ताः । ऋषीणां समूहः आर्षेयं तस्मिन् प्रवराः नानार्षेयप्रवराः तान् अभ्यर्च्य, अर्घ्यपाद्यादिभिरिति शेषः । शिरसा वन्दनं नाम नमस्कार एवात्राभिप्रेतः । कृतप्रणाम इत्युत्तरवचनात् ॥ ११ ॥

ऋषीणां अग्रे उपस्थितः अर्घ्यं गृहीतं पाणौ येन सः तथा । यत् स्वेन कर्तुं इष्टं तत् एभ्यो विज्ञापयामासेत्यन्वयः ॥ १२ ॥

महत्तमैः महापुरुषैः अनुग्रहणीयं शीलं येषां ते तथोक्ताः । वयं नृपाणां मध्ये धन्यतमाः । अहो अस्मद्भागधेयम् । कुतः । राज्ञां कुलं गर्ह्यकर्म निन्द्यकर्म । बत कष्टम्[2] । केन राजकुलेन ब्राह्मणपादशौचं आरात् दूरात् विसृष्टं विरहितं, तदिति शेषः ॥ १३ ॥

---

१ मुनीना नामानि - क ग घ ङ छ ज      २ वाहू - ग ङ छ. श्लोके टीकायां च ।

२ बत तत्कष्टम् - ग छ

तस्यैव मेऽस्त्वद्य परावरेशो व्यासक्तचित्तस्य गृहेष्वभीक्ष्णम् ।
निर्वेदमूलो द्विजशापरूपो यत्र प्रसक्तो (ऽ)भयमेव[1] धत्ते ॥ १४ ॥

तं मोपविष्टं प्रतियान्तु विप्रा गङ्गा च देवी धृतचित्तमीशे ।
द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथाः ॥ १५ ॥

पुनश्च भूयाद्भगवत्यनन्ते रतिः प्रसङ्गश्च तदाश्रयेषु ।
महत्सु यां यामुपयामि सृष्टिं मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः ॥

इति स्म राजाध्यवसाययुक्तः प्राचीनकाग्रेषु कुशेषु धीरः ।
उदङ्मुखो दक्षिणकूल आस्ते समुद्रपत्न्यां स्वसुते न्यस्तभारः ॥

---

स्वाभिप्रेतमाह— तस्येति । परावरेशे मुक्तामुक्तप्रपञ्चनाथे हरौ व्यासक्तचित्तस्य अनुरक्तबुद्धेः मे तेषु गृहेषु अयं द्विजशापरूपो दण्डः अभीक्ष्णं अलं निर्वेदमूलो वैराग्यहेतुः अस्तु । यत्र येषु गृहेषु प्रसक्तः संसारभयमेव धत्ते । यत्र यस्मिन् भगवति प्रसक्तः अभयं मोक्षमेव धत्ते प्राप्नोति, तस्मिन् हराविति वा ॥ १४ ॥

योऽहं एवं महत्तमानुग्रहयोग्यशीलः तं मा मां द्विजोपसृष्टः द्विजकुमारेण प्रेरितः कुहकः वेषान्तरधारितया कपटी । कुहकः सर्पजातिविशेषो वा[2] । तक्षकः दशतु भक्षयतु । युष्माभिरेतत्कर्तव्य- मित्याह- अलमिति । यूयं देवकीनन्दनलीलादिकाः विष्णुविषयाः गाथाः चरणत्रयायुक्तलक्षितान् श्लोकान् अलं देहवियोगपर्यन्तं गायत, षड्जादिस्वरैरिति शेष इत्यन्वयः ॥ १५ ॥

न केवलमस्मिन् जन्मन्येव हर्यादौ मनोगतिप्रसङ्गः । अपितु जन्मान्तरेऽपीति प्रार्थयते[3] इत्याह- पुनश्चेति । तदाश्रयेषु भगवद्भक्तेषु युष्मद्विधेषु मम मैत्री त्वदीयोऽहमिति चित्तवृत्तिलक्षणा । सृष्टिः जन्म ॥ १६ ॥

कुत्र गङ्गायां स्थितः इति तत्राह- इति स्मेति । स्वसुते जनमेजये न्यस्तः निहितः राज्यभारः येन सः तथोक्तः । इति उक्तप्रकारेण व्यवसाय निश्चित्य, मनोयोगयुक्तः । निश्चययुक्तो वा । राजा परीक्षित् समुद्रपत्न्याः गङ्गाख्यायाः नद्याः उदक् एव किञ्चिद्दक्षिणकूले दक्षिणतीर- भागे प्रासादे प्राचीनाग्रेषु[4] कुशेषु उदङ्मुख आस्त इत्यन्वयः ।

---

१ भयमाशु - कोशान्तरेषु सर्वत्र पाठः ।

२ पुलस्त्यसर्पजातिविशिष्टो वा - च । कुलकसर्पजातिविशिष्टो वा - ठ । ३ अयं ङ च ट पाठः । अन्यत्र - प्रार्थये ।

४ अयं ठ पाठः । अन्यत्र प्राचीनमूलेषु ।

विहाय सर्वं नरदेवचिह्नं केयूरहाराङ्गदमौलिरत्नान् ।
रत्नांगुलीयान्निमलान्निरस्य पवित्रपाणिर्मुनिवेष आस्ते ॥ १८ ॥

एवं च तस्मिन्नरदेवदेवे प्रायोपविष्टे दिवि देवसङ्घाः ।
प्रशस्य भूमौ व्यकिरन्प्रसूनैर्मुदा मुहुर्दुन्दुभयश्च नेदुः ॥ १९ ॥

महर्षयो वै समुपागता ये प्रशस्य साध्वित्यनुमोदमानाः ।
ऊचुः प्रजानुग्रहशीलसारा यदुत्तमश्लोकगुणानुरूपम् ॥ २० ॥

न वा इदं राजर्षिवर्य चित्रं भवत्सु कृष्णं समनुव्रतेषु ।
येऽध्यासनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामाः ॥ २१ ॥

सर्वे वयं तावदिहास्महेऽथ कलेवरं यावदसौ विहाय ।
अजं परं विरजस्कं विशोकं यास्यत्ययं भागवतप्रधानः ॥ २२ ॥

---

मृत्युचिन्तारहितत्वात् धीर इत्युक्तम् । कूलशब्दस्य लक्षणार्थमनाश्रित्य मुख्यार्थाङ्गीकारे भारतविरोधः स्यात् । यथा गङ्गायां कटकमास्त इति गङ्गापदेन तीरं लक्ष्यते, कूल आस्ते इति कूलपदेनापि जले लक्षणोपपत्तेः । आस्त इति लङप्येवविधविशेषद्योतनार्थः ॥ १७ ॥

श्वेतच्छत्रचामरादिनरदेवचिह्नम् । न केवलं तावदेव किन्तु केयूरादींश्च निरस्य त्यक्त्वा चर्म-कृष्णाजिनादिमुनिवेषः ॥ १८ ॥

व्यकिरन् वर्षितवन्तः ॥ १९ ॥

यत् उत्तमश्लोकस्य हरेः गुणानुरूपं गुणप्रकटनानुकूलं तत् वचः[1] ऊचुरित्यन्वयः । प्रजानुग्रह-मन्तरेण अन्यः स्वभावो नास्ति येषां ते तथोक्ताः ॥ २० ॥

अध्यासनं सिंहासनम् । राज्ञां मण्डलवर्तीनां किरीटैः जुष्टं सेवितम् । कालक्षेपराहित्य-द्योतनार्थः सद्य शब्दः ॥ २१ ॥

असावयम् । विशोकं नित्यनिर्दुःखम् । कुतः ? विरजस्कं अशोभने शोभनाध्यासबुद्धिरहितम्[2] । कुतः ? परं त्रिगुणातीतं, पूर्णं वा । कुतः ? अजं जन्मजरामरणादिरहितं हरिं यास्यतीत्यन्वयः ॥ २२ ॥

---

१ वचः इति ङ पाठः । अन्यत्र - ऋषयः । २ नित्यशोभनाध्यास - ब ढ ।

आश्रुत्य तदृषिगणवचः परीक्षित्समं मधुश्चुत् गुरुशापव्यलीकम् ।
आभाषतैनानभिनन्द्य युक्तः शुश्रूषमाणश्चरितानि विष्णोः ॥२३॥

राजोवाच—

समागताः सर्वत एव सर्वे वेदा यथा मूर्तिधरास्त्रिपृष्ठे ।
नेहाथवाऽमुत्र च कश्चनार्थ ऋते परानुग्रहमात्मशीलाः ॥ २४ ॥

ततश्च वः प्रश्नमिमं विपृच्छे विश्रभ्य विप्रा इतिकृत्यतायाम् ।
सर्वात्मना म्रियमाणैस्तु कृत्यं शुद्धश्च तत्रामृशताभियुक्ताः ॥२५॥

इति श्रीमद्भागवते प्रथमस्कन्धे एकोनविंशोऽध्यायः ॥

---

मधु अमृतं श्चोततीति मधुश्चुत् श्रवणसुखं अत एव गुरोः ब्राह्मणकुमारस्य शापं व्यलीकयति अनृतं करोति फलत इति गुरुशापव्यलीकम् । अनेन दुर्मरणदोषपरिहारो लक्ष्यते । न तु तक्षकदंशनाभावः । तत्कृतिदर्शनात्[1] । ऋषिगणवचः आश्रुत्य एनान् ऋषीन् आभाषतेत्यन्वयः ॥ २३ ॥

त्रिपृष्ठे सत्यलोके । 'शील समाधावि'तिधातोः परमात्मसमाधिमन्तः । वः युष्माकं इहलोके अथवा अमुत्र च परलोके कश्चनार्थः साध्यं प्रयोजनं नास्तीति यतः ततः परानुग्रहकरणस्वभावान् वः युष्मान् इमं प्रश्नं विपृच्छे पृच्छामीत्यन्वयः[2] । किं कृत्वा ? इतिकृत्यतायां इत्थंकर्तव्यतायां विप्राः विशिष्टज्ञानिनः अकुटिलबुद्धयः सात्त्विकप्रकृतयः इति विश्रभ्य विश्वस्य । कोऽसाविति तत्राह— सर्वात्मनेति । अत्र कृत्यमतेषु म्रियमाणैः पुरुषैः सर्वप्रकारेण शुद्धं निर्दोषं पुरुषार्थपर्यवसायि कृत्यं कर्तव्यं च समियुक्ताः आग्रहयुक्ताः तात्पर्योपेताः आमृशत आलोचयत । आलोच्य चास्माकं ब्रूतेति तुशब्दार्थः[3] ॥ २४ ॥ २५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
प्रथमस्कन्धे एकोनविंशोऽध्यायः ॥

* * *

---

१ तत्कृतदंशनदर्शनात् - क ज । तत्कृतदर्शनात् - ग घ ङ च ट ठ ।
२ प्रक्ष्यामि - ङ ३ अयं खडपाठः । अन्यत्र - तुशब्दः ।

## अथ विंशोऽध्यायः

सूत उवाच—

तत्राभवद्भगवान्व्यासपुत्रो यदृच्छया गामटमानोऽनपेक्षः ।
अलक्ष्यलिङ्गो निजलाभतुष्टो वृतश्च बालैरवधूतवेषः ॥ १ ॥

---

॥ अथ विंशोऽध्यायः ॥

ज्ञानादिनैव सत्सङ्गत्या सकलपापक्षयो भवतीति प्रतिपाद्यतेऽस्मिन्नध्याये । तत्रादौ शुकागमनं वक्ति तत्रेति । यत्र परीक्षिता मुनिभिश्च स्थितं तत्र । तस्यां अवस्थायां वा । व्यासपुत्रः शुको भगवान् यदृच्छया दैवेच्छया अभवदित्यन्वयः । पूर्वस्मात्कान्तिविशेषद्योतनाय अभवदित्युक्तं । आगमनस्य तावता चरितार्थत्वात् । अटनस्य स्वाधीनत्वप्रकाशनाय अटमान इति शानच् प्रत्ययः । तर्ह्यर्थाभिलाषी किमटतीति इत्यत उक्तं- अनपेक्ष इति । बाह्यविषयापेक्षारहितः । तत्कुत इत्यस्यापि तदेवोत्तरम् । अनपः प्राणनाथः श्रीविष्णुः तद्विषया ईक्षा ईक्षणं दर्शनं यस्य सः तथोक्तः । न हि करतलामलकवत् सन्ततमपरोक्षीकुर्वाणस्य तस्य बाह्यपदार्थापेक्षा भवतीति वा । बाह्यपदार्थापेक्षाभावे शरीरयात्रा कथं इत्यस्याप्येतदेवोत्तरम् । अनं प्राणं पिबतीत्यनपा ईक्षा दर्शनम् । काकोदरवत् चञ्चुपुटेन[1] वायुपानं ज्ञानं यस्यास्ति स तथा कथित इति वा । श्रीप्रसादाभावादशनदारिद्र्यं किमित्यस्येदमेवोत्तरम् । स्वस्मा[2]दपगता न भवतीत्यनपा लक्ष्मीः । तस्याः ईक्षणं यस्यास्ति स तथेति वा । तत्कटाक्षपात्रीभूत इत्यर्थः । सन्ततगमनस्वभावेन वायुना तृप्तिः कथं स्यादिति तत्राह- निजेति । स्वरूपानन्देनालम्बुद्धिमान् यदृच्छालाभेन तृप्तः । किमाश्रम इति तत्राह- अलक्ष्येति । न लक्ष्याण्याश्रमादिलिङ्गानि यस्य सः तथोक्तः । तत्कुतः इति तत्राह- अवधूतेति । अवधूतानां दिगम्बराणां वेषो यस्य सः तथोक्तः । अवधूतः परित्यक्तः वेषः अलङ्कारो येन स तथेति वा । अत एव बालैश्च वृतः ॥ १ ॥

---

१ अयं ख ह पाठः । अन्यत्र . काकचञ्चुपुटेन । २ अयं ख ह पाठः । अन्यत्र स्वस्मद् ।

तं त्र्यष्टवर्षं सुकुमारपादकरोरुबाहंसकपोलगात्रम् ।
चार्वायताक्षोन्नसतुल्यकर्ण सुभ्र्वाननं कंबुसुजातकण्ठम् ॥ २ ॥

निगूढजत्रुं पृथुतुङ्गवक्षसमावर्तनाभिं वलिवल्गूदरञ्च ।
दिगम्बरं वक्त्रविकीर्णकेशं प्रलम्बबाहुं स्वमरोत्तमाभम् ॥ ३ ॥

श्यामं सदाऽऽपीच्यवयोङ्गलक्ष्म्या स्त्रीणां मनोज्ञं रुचिरस्मितेन ।
प्रत्युत्थिता मुनयश्चासनेभ्यः तल्लक्षणज्ञा अपि गूढवर्चसम् ॥ ४ ॥

---

मुनयः तं दृष्ट्वा आसनेभ्यः प्रत्युत्थिता इत्यन्वयः । चशब्दात् अन्ये च तत्र स्थिताः उदतस्थु-रिति ग्राह्यम् । गूढवर्चसं आच्छादितनिजतेजोलक्षणमहिमानमपि तल्लक्षणज्ञाः । किंविशिष्टं ? त्र्यष्टवर्षं त्रिः कृत्वा अष्टवर्षाणि यस्य सः तथोक्तः तं षोडशवर्षम् । सुकुमाराणि कोमलानि पादादीनि यस्य स तथोक्तः तं । पादौ च करौ च ऊरू च बाहू च अंसौ च कपोलौ च गात्रञ्च तानि तथोक्तानि । चारुणी च ईषद् अरुणे रक्ते च अक्षिणी यस्य स तथा । उन्नता नासिका यस्य स तथा । तुल्यौ परस्परसमौ कर्णौ यस्य स तथा तम् । सुभ्रु शोभनभ्रु आननं यस्य स तथा तम् । कम्बुवत् त्रिरेखाङ्कितशङ्खवत् सुजातः लक्षणवत्तमः कण्ठो यस्य स तथा तम् ॥ २ ॥

अंसवक्षःस्थलयोर्मध्यं जत्रु । निगूढं पूरितविवरं पीवरं जत्रु यस्य स तथा तम् । पृथु विस्तीर्णं तुङ्गं उन्नतं वक्षो यस्य स तथा तम् । आवर्तः पयसां भ्रमः । तद्वन्निम्ना वृत्ता नाभिः यस्य स तथा तम् । वलिभिः रेखाभि वल्गु सुन्दरं उदरं यस्य स तथा तम् । दिगेव अम्बरं यस्य स तथा तम ॥ ३ ॥

आपीच्यं षोडशवर्षीयं वयो यस्य तदापीच्यवयः । तच्चाङ्गं । तस्य लक्ष्म्या स्त्रीणां मनोज्ञं मनोहरम् । रुचिरस्मितेन च, मनोहरमिति शेषः ॥ ४ ॥

---

१ शुभ्रानन - कोशान्तरेषु सर्वत्र । २ शुभ्र शोभनं - कोशान्तरेषु सर्वत्र । ३ वक्र - क ज ।

स विष्णुरातोऽतिथय आगताय तस्मै सपर्यां शिरसाऽऽजहार ।
ततो निवृत्ता ह्यबुधाः स्त्रियोऽर्भका महासने सोपविवेश[1] पूजितः ॥

स संवृतस्तत्र महान्महीयसां ब्रह्मर्षिराजर्षिदेवर्षिसङ्घैः ।
व्यरोचतालं भगवान्यथेन्दुर्ग्रहर्क्षतारानिकरैः परीतः ॥ ६ ॥

प्रशान्तमासीनमकुण्ठमेधसं मुनिं नृपो भागवतोऽभ्युपेत्य ।
प्रणम्य मूर्ध्नाऽवहितः कृताञ्जलिर्नत्वा गिरा सूनृतयाऽन्वपृच्छत् ॥७॥

राजोवाच —

अहो अद्य वयं ब्रह्मन्सत्सेव्याः क्षत्रबन्धवः ।
कृपयाऽतिथिरूपेण भवद्भिस्तीर्थकाः कृताः ॥ ८ ॥
येषां संस्मरणात्पुंसः सद्यः शुद्धयन्ति वै गृहाः ।
किम्पुनर्दर्शनस्पर्शपादशौचासनादिभिः ॥ ९ ॥

---

विष्णुरातः विष्णुना दत्तः परीक्षित् । न तिथिः दिनविशेषो यस्य स तस्मै । आजहार चकार । हि शब्दोऽबुधत्वे हेतुः । अनेन 'कथमालक्षितः पौरैः' 'कथं वा पाण्डवेयस्य' इति प्रश्नः परिहृतः इति ज्ञातव्यम् ॥ ५ ॥

सः परीक्षित्[2] महीयसां महत्तराणां मध्ये महान् । संवृतः गूढः । महत्वप्रकाशनाय राजा ब्रह्मर्प्यादिभिः परीतो व्यरोचतेत्युक्तम् । तक्षकान्मरिष्य इति मरणभिया[3] मुखाद्यङ्गकान्तिम्लानिर्नास्तीति यस्मात्तस्मादित्यर्थः ॥ ६ ॥

सूनृतया गिरा प्रियवचनेन ॥ ७ ॥

हे ब्रह्मन् ब्रह्मज्ञानिन् क्षत्रबन्धवः वयं अद्य सद्भिः सेव्याः अभूम । अहो भाग्यम् । कुतः ? अतिथिरूपेणागतैः भवद्भिः तीर्थकाः तीर्थेषु प्रशस्ततीर्थाः कृताः । यथा भवन्तो निष्कलुषत्वात्तीर्थानि भवन्ति तथा वयमपि युष्मत्सङ्गत्येत्यर्थः । अत्र कृपैव कारणं इत्यतः कृपयेत्युक्तम् ॥ ८ ॥

तीर्थीकरणमेव विशिनष्टि- येषामिति । येषां भवतां संस्मरणात् पुंसः गृहाः सद्यः शुध्यन्ति वै यतः अतो दर्शनादिना शुध्यन्तीति किम्पुनर्वक्तव्यमित्यन्वयः ॥ ९ ॥

---

१ अयं क ग ड च छ झ ट पाठः । 'सोऽचिलोपे चेत्पादपूरण'मि'ति सन्धिः । कोशान्तरेषु - महासने चोपविवेश ।

२ सः परीक्षिदिति क घ ज ठ कोशान् विहायान्यत्र नास्ति

३ अयं घ ड छ ज ट पाठः । मरणचिन्तया - ख । मरणचिन्ताभिया - मूलकोशपाठः ।

सान्निध्यात्ते महायोगिन्पातकानि महान्त्यपि ।
सद्यो नश्यन्ति वै पुंसां विष्णोरिव सुरेतराः ॥ १० ॥
अपि मे भगवान्प्रीतः कृष्णः पाण्डुसुतप्रियः ।
पैतृष्वसेयप्रीत्यर्थं तद्गोत्रस्यात्तबान्धवः ॥ ११ ॥
अन्यथा तेऽव्यक्तगतेर्दर्शनं नः कथं नृणाम् ।
नितरां म्रियमाणानां संसिद्धस्य वरीयसः ॥ १२ ॥
अतः पृच्छामि संसिद्धं योगिनां परमं गुरुम् ।
पुरुषस्येह यत्कार्यं म्रियमाणस्य सर्वदा ॥ १३ ॥
यच्छ्रोतव्यमथो जाप्यं यत्कर्तव्यं नृभिः सदा ।
स्मर्तव्यं भजनीयं वा ब्रूहि यद्वा विपर्ययम् ॥ १४ ॥

---

भवत्सङ्गत्या विशेषोऽप्यस्तीत्याह- सान्निध्यादिति । अनेन ब्रह्महत्यादिपापपरिहारोऽपि भवतीत्युक्तं भवति । ज्ञानात् पूर्वतनानि भस्मीभवन्ति पश्चात्तनानि न श्लिष्यन्त इति शास्त्रनिश्चितं वैशब्देनाह । न केवलं अस्मत्पापहानिरेव किन्तु अस्मत्सङ्गतानामपीति वा[1] ॥ १० ॥

पाण्डुसुतानां प्रियः । पाण्डुसुताः प्रियाः यस्येति वा । कृष्णो भगवान् मे मह्यं प्रीतोऽपि प्रीत एव । कुतः ? पिता वसुदेवः तस्य स्वसा कुन्ती तस्याः पुत्राः पैतृष्वसेयाः युधिष्ठिरादयः तेषां प्रीत्यै । तेषां गोत्रं यस्य सोऽहं तद्गोत्रः तस्य मे आत्तबान्धवो जात इति यस्मादत इति ॥ ११ ॥

अन्यथा तत्प्रीत्यभावे अव्यक्तगतेः अज्ञातगमनस्य संसिद्धस्य ब्रह्मज्ञानितया कृतकृत्यस्य वरीयसः वर्णीयेषु पूज्यस्य ते तव दर्शनं नृणां नः कथं घटते ? म्रियमाणानां नितरां न घटत इति शेषः ॥ १२ ॥
भवद्दर्शनं दुर्लभमिति यतोऽतः दैवात्प्राप्तं योगिनां परमं गुरुं संसिद्धं कैवल्यभूतं भवन्तम् । इह म्रियमाणस्य पुंसः सदा यत्कार्यं यच्च श्रोतव्यं अथो यच्च जाप्यं[2] अथवा अन्यैः नृभिः यत्कर्तव्यं भजनीयं वा यद्वा विपर्ययः अकर्तव्यास्मर्तव्यादि । तच्च पृच्छामि । तदस्माकं ब्रूहीत्येकान्वयः ॥ १३ ॥ १४ ॥

---

१ वाकरः ख ट ड पाठः । अन्यत्र नास्ति । २ जप्यं - ख

नूनं भगवतो ब्रह्मन् गृहेषु गृहमेधिनाम् ।
न लक्ष्यते ह्यवस्थानमपि गोदोहनं क्वचित् ॥ १५ ॥

सूत उवाच —

एवमाभाषितः पृष्टः स राज्ञा श्लक्ष्णया गिरा ।
प्रत्यभाषत धर्मज्ञो भगवान् बादरायणिः ॥ १६ ॥

॥ इति श्रीमद्भागवते प्रथमस्कन्धे विंशोऽध्यायः ॥

इति प्रथमस्कन्धः ॥

---

गृहमेधिनां गृहस्थानां गृहेषु क्वचित् एकत्रापि गोदोहनक्षणमपि भवतोऽवस्थानं न लक्ष्यते । नूनं निश्चयः । हि यस्मात् तस्मात् ज्ञानिनि स्वतः प्राप्ते सति कर्तव्याद्यज्ञाने अस्माकं महाऽसुरत्वं[1] स्यादिति भवन्तं पृच्छामीति भावः ॥ १५ ॥

एवं आभाषितः पृष्टः सम्बोध्य कृतप्रष्टव्यः । गुरुशिष्यसंवादलक्षणधर्मज्ञः बादरायणिः शुकः श्लक्ष्णया मधुरया गिरा राजानं प्रत्यभाषतेत्यन्वयः ॥ १६ ॥

भागवतविवरणमिदं तुलसीदलमिव समर्पयामि हरेः ।
चरणनलिनयुगलेऽहं प्रथमस्कन्धोपगं[2] सतां प्रीत्यै ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां[3]
प्रथमस्कन्धे विंशोऽध्यायः ॥

इति प्रथमस्कन्धटीका ॥

---

१ महासुरत्वं - ग घ ज ।

२ प्रथमस्कन्धीयं - छ ।

३ इति श्रीमन्महेन्द्रतीर्थपूज्यपादशिष्यविजयध्वजतीर्थभट्टारकरचितायां श्रीभागवतटीकायां पदरत्नावल्यां - ङ ।

# श्रीमद्भागवत-विषयानुक्रमः

## प्रथमस्कन्धे

अध्यायः विषयाः

॥ श्रीः ॥

# श्रीमद्भागवतम्

## (श्री विजयध्वजीयटीकासहितम्)

## द्वितीयस्कन्धः

परमपूज्यश्रीपेजावरमठाधीशश्रीविश्वेशतीर्थश्रीपादानां
मार्गदर्शने संशोध्य संपादितम्

सम्पुटः – २

प्रकाशनम्
श्री राघवेन्द्रस्वामि बृन्दावन समितिः
नागलिङ्गपल्ली
हैदराबाद–२७

SRIMAD BHAGAVATAM
with the Commentary of Sri Vijayadhwaja Teertharu,
Vol. II ( 2nd skandha)

Edited by :
H. H. Sri Vishwesha Tirtha Swamiji of
Sri Pejawar Math, Udupi

Published by :
Sri Raghavendra Swami Brindavan Samiti,
Bagh lingampally Hyderabad-27.

Price Rs. 700/- ( Complete set )
Rs. 600/- ( Complete set without binding )

Printed by :
Dhananjay Balacharya Warkhedkar.
Sudha Mudrana Mandiram, Uttaradi muth compound,
Basavanagudi, Bangalore - 560004

# श्रीमद्भागवत-विषयानुक्रमः

## द्वितीयस्कन्धे

# अथ द्वितीयस्कन्धः

## ॥ अथ प्रथमोऽध्यायः ॥

शुक उवाच—

वरीयानेष ते प्रश्नः कृतो लोकहितं नृप ।
आत्मवित्सम्मतः पुंसां श्रोतव्यादिषु यः परः ॥ १ ॥

श्रोतव्यानीह राजेन्द्र नृणां सन्ति सहस्रशः
अपश्यतामात्मतत्त्वं गृहेषु गृहमेधिनाम् ॥ २ ॥

---

## ॥ अथ प्रथमोऽध्यायः ॥

वरीयान्प्रष्टव्यो निगमविषयो योऽस्य जनको वराहाद्यात्मा योऽवतरति सुरारातिहृतये[1] ।
अदाद्धात्रे ज्ञानं सकलविषयं यश्च विनुतस्तमङ्घ्रोपास्त्व त्वं हृदय सततं स्वेष्टकृतये ॥

सम्प्रति परीक्षित्प्रश्नं परिहरिष्यन् तं स्तौति— **वरीयानिति** । श्रीभागवतसंहिताप्रारम्भकारणं सविस्तरमभिधास्यन्नीं श्रीभागवतसंहितां प्रारभत इत्यतो वाह[2]— **वरीयानिति** । यच्छ्रोतव्यमथो जाप्यमित्यादिना यस्त्वया कृतः स एष प्रश्नः वरीयान् अङ्गीकार्यतमः । सर्वोत्कृष्टत्वात् । लोकहितमिति क्रियाविशेषणम् । यथा लोकस्य हितं भवति तथा कृत इत्यनेन न केवलं तवैव हितकरोऽयं, किन्तु सर्वस्येत्युक्तं भवति । उत्कृष्टत्वे हेतुगर्भविशेषणमाह— **आत्मविदिति** । मुख्यतः आत्मविदो ब्रह्मादयः । तेषामपि सम्मतत्वात् । तत्कथमत्राह— **पुंसामिति** । आत्मविदित्यनुवर्तते । इह जगति नृणां सहस्रशः श्रोतव्यानि सन्ति । म्रियमाणानां अम्रियमाणानाञ्च पुंसां श्रोतव्यादिषु यः परः परमात्मा स एवात्मवित्सम्मत इति यस्मात् तस्मादित्यर्थः । 'आत्मा वा अरे द्रष्टव्य'इत्यादिश्रुतेः[3] । अनेन परमात्मविषयत्वेनास्य वरीयस्त्वमित्युक्तं भवति ॥ १ ॥

इतोऽपि परमात्मश्रवणादिकमन्तरेण संसारस्य तदज्ञाननिबन्धनस्य दुरुच्छेदत्वात् स एव[4] तेषु मुख्यत्वेन सम्मत इत्युपसंहरन्नज्ञानिलोकप्रवृत्तिप्रकारमाह— **अपश्यतामित्यादिना** । दृशिरत्र ज्ञानार्थः । आत्मनः परमात्मनः तत्त्वं अनारोपितं रूपं ज्ञानादिलक्षणं आत्मनां लक्ष्मीब्रह्मादिचेतनानां कदाप्यनभि-

---

१ हृतये - ट । २ संहिता प्रारभ्यत इत्याह - ट । ३ श्रुतिः - ड ।
४ एवेति ड पाठः । अन्यत्र नास्ति ।

निद्रया ह्रियते नक्तं व्यवायेन नवं वयः ।
दिवा चार्थेहया राजन्कुटुम्बभरणेन वा ॥ ३ ॥

देहापत्यकलत्रादिष्वात्मदैन्येष्वसत्स्वपि ।
तेषु प्रसक्तो निधनं पश्यन्नपि न पश्यति ॥ ४ ॥

तस्माद्भारत सर्वात्मा भगवान् हरिरीश्वरः ।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम् ॥ ५ ॥

---

भूततरतमभावेनावस्थितिश्च अपश्यतां अजानताम् । निद्रयेत्यत्रापि अनुसन्धेयम् । गृहमेधिनाम् । गृहे मेधाः गृहस्थाश्रमे[1] एव कर्तुं योग्याः पञ्चमहायज्ञाः स्मृतिविहिताः, प्रत्यवायपरिजिहीर्षया तान् कर्तुं शीलमेषामस्तीति गृहमेधिनः तेषां[2] । गृहेषु गृहाश्रमेष्वेव वर्तमानानां बहिर्मुखानाञ्च पुंसाम् ॥ २ ॥

निद्रया व्यवायेन च स्त्रीसम्भोगेन च नक्तं रात्रिः नवं वयः ह्रियते । दिवा च अहश्च अर्थेहया श्रीनारायणाराधनानुपयोगिहिरण्याद्यापादनायासेन । 'अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्' इति वचनात् कुटुम्बभरणेन वा ह्रियत इत्यन्वयः ॥ ३ ॥

आत्मतत्वाज्ञाने कारणमाह– देहेत्यादिना । अपरिग्रहार्थैः । आत्मनः स्वस्य दीनत्वं क्षीणत्वं आपादयन्तीत्यात्मदैन्यानि तेषु । दीङ् क्षय इति धातोः । यद्वा स्वत एव दीनभावो येषां ते तथा तेषु । अत एव असत्सु अभद्रेषु । तदुक्तं सद्भावे साधुभावे चेति । निधनं नाशम् । प्रकर्षेण सक्तः प्रसक्तः । न पश्यति स्वस्येति शेषः । अपिना असच्छब्दस्य मिथ्यार्थाभिधायित्वं गर्हितमिति दर्शयति । तेषु[2] प्रमत्तो निधनमिति पाठोऽनन्वितः ॥ ४ ॥

यतः श्रीनारायणश्रवणादिना विना न संसारनिवृत्तिः तस्मात् सर्वात्मा सर्वव्यापी सर्वमभीष्टमाददानो वा भगवान्निरतिशयैश्वर्यादिगुणवान् ब्रह्मादिचेतनराशिपूज्यो वा हरिः स्मरणमात्रेणाशेषसंसारक्लेशसंहर्ता सर्वजगदीश्वरः नित्यभयरूपात् अस्मात् संसारात् अभयं मोक्षं इच्छता पुरुषेण श्रवणादिविषयः कर्तव्यः इत्यन्वयः[3] । श्रवणादित्रयेण[4]ाज्ञानसंशयादिनिरासादि करोति । 'श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयञ्च पराणुद्य लभते ब्रह्मदर्शनमि'ति वचनात् श्रवणेनाज्ञानं कीर्तनापरपर्याय-

---

१ गृहाश्रम - ङ । २ तेषां - ङ ।
३ इत्यन्वय इति ङ पाठः । अन्यत्र नास्ति । ४ क्रमेण - ङ ।

एतावान्सांख्ययोगाभ्यां स्वधर्मपरिनिष्ठया ।
जन्मलाभः परः पुंसामन्ते नारायणस्मृतिः ॥ ६ ॥

प्रायेण मुनयो राजन्निवृत्ता विधिनिषेधतः ।
नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः ॥ ७ ॥

इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् ।
अधीतवान्द्वापरादौ पितुर्द्वैपायनादहम् ॥ ८ ॥

---

मननेन संशयविपर्ययौ निरस्य स्मरणलक्षणध्यानेन ब्रह्मापरोक्षज्ञानं लभत इति । श्रोतव्योऽन्यो जप्तव्योऽन्य इत्या[1]दिशङ्कानिरासार्थं श्रवणादीनां चतुर्णामेकविषयत्वं द्योतयितुं सर्वात्मेत्यादिविशेषणचतुष्टयं उपात्तम् । अहङ्काररूपेण सर्वव्यापित्वेन सर्वात्मा रुद्रः किन्न स्यादित्यत उक्तं- हरिर्भगवानिति । तथापि सूर्याद्यन्यतमः किन्न स्यादित्यत उक्तं- ईश्वर इति । ईशात् रुद्रात् वर इति योगेन तस्य रुद्रप्रसिद्धिरपि निरस्तेति ज्ञातव्यम् ॥ ५ ॥

एतदेव सर्ववेद[2]पुराणेषु तात्पर्येण प्रतिपादितमिति दर्शयति- एतावानिति । अन्ते मरणकाले यथा श्रीनारायणस्मरणं स्यात् तथा बहुशास्त्राभ्यासः कर्तव्य इति भावेन वाह- एतावानिति । सांख्यशास्त्रोक्तसांख्येन तत्त्वज्ञानेन योगशास्त्रोक्तभगवत्पूजादियोगानुष्ठानेन तथा स्वधर्मपरिनिष्ठया स्वस्वविहितवर्णाश्रमोक्त स्वधर्मानुष्ठानेन च अन्ते मरणकाले नारायणस्मृतिरिति यावान् एतावान् इयानेव पुंसां पर उत्कृष्टः जन्मलाभः जन्मनः साफल्यमित्यन्वयः । अतो वेदादिसर्वशास्त्रेषु त्रियमाणेन सर्वथा नारायणस्मरणमेव कर्तव्यं नान्यदिति प्रतिपाद्यत इत्यतः प्रष्टुः परिहारः सुप्रसिद्ध इति सिद्धम् ॥ ६ ॥

सर्वथा नारायणश्रवणादि कार्यमित्यत्र कैमुत्यन्यायमाह- प्रायेणेति । मुनयः स्वस्वयोग्यज्ञानवन्तः विधिनिषेधाभ्यां निवृत्ताः निर्गुणः भगवान् तेन ध्यानानन्दात् तत्सम्बन्धिनिर्वाणं नैर्गुण्यं तत्स्थाः मुक्ताः हरेः गुणानुकथने रमन्ते इत्यन्वयः । गुणान् स्मारं स्मारं कथयन्तः इत्यस्मिन्नर्थे स्मेति पदम् । कदाचिद्दुःखानाभिप्रायेणोक्तं- प्रायेणेति । अतो ज्ञानाधिभिः[3] हरिगुणश्रवणादि कार्यमिति किं वाच्यमित्यर्थः ॥ ७ ॥

इदानीं भागवतप्रतिपाद्यमर्थं 'तस्माद्भारते'त्यादिश्लोकत्रयेणाभिधाय पुनस्तद्विस्तरेण वक्तुमुपक्रमते- इदमिति । बुद्धिसन्निहितत्वादिदमित्युच्यते । ब्रह्मसम्मितं वेदसमम् । तदर्थव्याख्यानरूपत्वात् ।

---

१ इति - ण क ट ।  २ सर्ववेदेतिहासपुराणेषु - ड । वेदेतिहासपुराणेषु-कोशान्तरेषु ।
३ निरन्तरम्-इत्यधिकः पाठः ख ण ट ड ।

परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया ।
गृहीतचेता राजर्ष आख्यानं यदधीतवान् ॥ ९ ॥
तदहं तेऽभिधास्यामि महापूरुषिको[3] भवान् ।
यत्र श्रद्धतामाशु स्यान्मुकुन्दे मतिः सती ॥ १० ॥
एतन्निर्विद्यमानानां इच्छतामकुतोभयम् ।
योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनम् ॥ ११ ॥
किं प्रमत्तस्य बहुभिः परोक्षैर्हायनैरिह ।
वरं[4] मुहूर्तं विदितं घटते श्रेयसे यतः ॥ १२ ॥

---

द्वापरादौ कृष्णावतारापेक्षया द्वापरे आदौ च । न तु द्वापरस्यादावि‍ति । 'व्यासः षट्शतवर्षीयः धृतराष्ट्रमजीजनत्' इति वचनात् द्वापरान्ते भारतकथाप्रवृत्तिकथनाच्च ॥ ८ ॥

नन्वस्तु । स्थितप्रज्ञया कृतकृत्यस्य भवतो भागवताध्ययनं किमर्थमिति तत्राह– परिनिष्ठित इति । नैर्गुण्ये मुक्तौ परिनिष्ठितोपि मुक्तिरस्य भवतीति निश्चयवानपि । 'उदरे[2] संशयः प्रोक्तः परिनिष्ठा विनिश्चय' इत्यभिधानात् । कथमनेनास्य परिहार आयात इति तत्राह– उत्तमश्लोकेति । अनेनैवंविधमाहात्म्यातिशयो भगवानित्युक्तं भवति ॥ ९ ॥

नन्वस्तु भवतो भागवताध्ययनम् । तत्किं ममेति तत्राह तदहं त इति । यत्र यच्छ्रद्दधताम् । यत्र यस्मिन् भागवते प्रतिपादितमर्थं श्रद्धतामिति वा । अहं भागवतं नाम यदाख्यानमधीतवान् तत् ते तुभ्यं अभिधास्यामीत्यन्वयः । अभिधाने निमित्तमाह– महापूरुषिक इति । पूर्णषड्गुणत्वात् पुरुषो भगवान् तद्भक्ताः पूरुषिकाः । तेषां मध्ये महानिति यस्मात्तस्मादित्यर्थः ॥ १० ॥

न केवलं तवैवैतन्निर्णीतम् । अपितु सर्वयोगिनामपीत्याह– एतदिति । निर्विद्यमानानां विरज्यमानानां । क्लेशैरिति शेषः । अकुतोभयं मोक्षम् । एवं वैराग्यादिसाधनसामग्रीमतां योगिनां हरेर्नामानुकीर्तनं यत् एतत् अन्ते हरिस्मरणकारणमित्यर्थः ॥ ११ ॥

अनेन भागवताकर्णनमभिप्रेतम् । तदत्यन्ताल्पायुष्ट्वेन न घटत इति शङ्का मा भूदित्याह– किमिति । हायनैः वत्सरैः । परोक्षैः आगामिभिः । यतो येन मुहूर्तेन हरिस्मरणाख्यश्रेयसे घटते तत् एकं मुहूर्तं घटिकाद्वयमपि वरं उत्तमं विदितं प्रख्यातम् ॥ १२ ॥

---

१ नवमदशमश्लोकयोः पूर्वापरोत्तरेण व्याख्यानं ण ट क छ ड कोशेषु । २ उदरः - ङ ख । ३ महापौरुषिक - घ ट । ४ वरं - ट ।

खट्वाङ्गो नाम राजर्षिः ज्ञात्वेयत्तामिहायुषः ।
मुहूर्तात्सर्वमुत्सृज्य गतवानभयं हरिम् ॥ १३ ॥

तवाप्येतर्हि कौरव्य सप्ताहं जीविताविधिः ।
उपकल्पय तत्सर्वं[१] यत्तावत्साम्परायिकम् ॥ १४ ॥

अन्तकाले तु पुरुष आगते गतसाध्वसः ।
छिन्द्यादसङ्गशस्त्रेण स्पृहां देहेऽनु ये च तम् ॥ १५ ॥

---

एतमर्थमाख्यानेन द्रढयति[१]– खट्वाङ्ग इति । नामशब्दः प्रख्यात्यर्थे । इह मनुष्यलोके मुहूर्तात् पूर्वं आयुषः इयत्तां मर्यादां ज्ञात्वा राज्यादिसङ्गमुत्सृज्य हरिमुद्दिश्य इन्द्रियाणि च दत्वा अभयलक्षणं मोक्षं गतवानित्यन्वयः । 'त्यागो विहापितं दानं उत्सर्जनविसर्जने' इत्यभिधानम् । अभयं पुरुषार्थरूपं हरिं गतवानिति वा ॥ १३ ॥

तव तदपेक्षया अनेकायुष्ट्वान्न हृत्तापः कार्यः इत्यतः तत्सर्वं हरिचरणारविन्दस्मरणविषयकत्वेन कल्पयेत्याह– तवापीति । एतर्हि इदानीम् । सप्तानां अह्नां समाहारः सप्ताहम् । जीविताविधिः आयुषः[२] इयत्ता । यत्तावदायुः तत्सर्वमपि । साम्पराय उत्तरकालः मुक्तिकालः । तत्संबन्धि यथा भवति तथा । तावन्तं कालं[३] हरिचरणस्मरणगोचरमुपकल्पय । भागवताकर्णने तात्पर्यं कुरु इत्यर्थः । 'सांपरायस्तु संग्राने आपदागामिकालयोः' इति यादवः । मरणलक्षणापत्काले हरिचरणस्मरणं यथा भवति तथा तावन्तं कालं भागवताकर्णनं कुर्विति वा ॥ १४ ॥

मरणकालं[४] ज्ञात्वा हरिस्मरणमिच्छतो वैराग्यं प्रथमं साधनमित्याह– अन्तकाल इति । आगते स्वतः परतो वा ज्ञाते सति गतसाध्वसः देहनाशप्रयुक्तभयरहितः । पुत्रादिस्नेहलक्षणः सङ्गः । तद्विरोधिविवेकज्ञानलक्षणोऽसङ्गः । तेन शस्त्रेण तं देहं अनु ये स्त्रीपुत्रादयः तेषु च स्पृहां छिन्द्यादित्यन्वयः ॥ १५ ॥

---

१ द्रढयते - क । २ आयुष इति ङ पाठः । अन्यत्र - आयुष्यत्य ।
३ तावन्तं कालमिति - ख ङ पाठे नास्ति । ४ मरणलक्षणकालं - ट ण ।

गृहात्प्रव्रजितो धीरः पुण्यतीर्थजलाप्लुतः ।
शुचौ विविक्त आसीनो विधिवत्कल्पितासने ॥ १६ ॥

अभ्यसेन्मनसा शुद्धं त्रिवृद्ब्रह्माक्षरं परम् ।
मनो यच्छेज्जितश्वासो ब्रह्मबीजमनुस्मरन् ॥ १७ ॥

नियच्छेद्विषयेभ्योऽक्षान्मनसा बुद्धिसारथिः ।
मनः कर्मभिराक्षिप्तं शुभार्थे धारयेद्धिया ॥ १८ ॥

तत्रैकावयवं ध्यायेदव्युच्छिन्नेन चेतसा ॥
मनो निर्विषयं युक्त्वा ततः किञ्चिन्न संस्मरेत् ।
पदं[6] तत्परमं विष्णोः मनो यत्र प्रसीदति ॥ १९ ॥

---

अथ किङ्करोतु[1] इत्याह- गृहादिति । गृहात् प्रव्रजितः सन्यासलक्षणं वैराग्यं प्राप्तः धीरः प्रतिबन्धकनिवर्तनसमर्थः । पुण्यतीर्थजलाप्लुतः भागवतादिपुण्यशास्त्रजलस्नातः तथा गङ्गादिपुण्यतीर्थजलस्नातः निर्धूतबाह्याभ्यन्तरमलः सन् शुचौ शुद्धे विविक्ते दुर्जनसंसर्गरहिते देशे 'नात्युच्छ्रितं नातिनीचमि'ति विधिवत् कल्पितासने आसीनो भवेदिति शेषः ॥ १६ ॥

स्थिरासनस्य कृत्यमाह– अभ्यसेदिति । रेचकादिक्रमपरम्परया[2] प्राणायामेन जितश्वासः प्राप्तप्राणप्रसादः मनो यच्छेत् स्ववशं कुर्यात् । एवं जितमनस्कः सन् बीजं सर्वजगद्व्यञ्जकं शुद्धं परं ब्रह्म अनुस्मरन् । अकारादीन् त्रीन् वर्णान् वृणोतीति त्रिवृत् । अक्षरं ब्रह्मवाचकत्वात् सर्वगतम् । परं उत्कृष्टं ओङ्कारं मनसा अभ्यसेत् आवर्तयेदित्यन्वयः ॥ १७ ॥

जप्यमनुक्त्वा[3] ध्यानप्रकारमाह– नियच्छेदिति । बुद्धिः सारथिः यस्य स तथा स पुरुषः जितेन मनसा अक्षान् इन्द्रियाणि विषयेभ्यः नियच्छेत् प्रत्याहरेत् । प्रत्याहृत्य च संस्कारवशात् बहिर्मुखतया कर्मभिः आक्षिप्तं मनः स्वधिया सारथिना शुभार्थे परममङ्गलार्थे हरौ धारयेदित्यन्वयः ॥ ॥ १८ ॥

एवं हरौ नियत[4]चेतसो योगिनो ध्यानाभ्यासप्रकारमाह– तत्रेति । तत्र युगपत् सर्वावयवध्यानाशक्तौ विषयैः अव्युच्छिन्नेन अखण्डितेन चेतसा एकावयवं एकैकावयवं श्रीपादादिलक्षणं ध्यायेत् ।

---

१ किं कर्तव्यम् - क, ख, किं करोतीत्यत्र - छ । २ क्रमरूप - ख ड ।
३ जाप्य - क ङ म ट ग । ४ नियुक्त - ख ज ड । ५ युक्त्वा - ख ड ट । मूले टीकायां च ।
६ अयं श्लोकार्धं उत्तरश्लोकावयवत्वेन पठ्यते - ग ङ ण छ प ।

रजस्तमोभ्यामाक्षिप्तं विमूढं मन आत्मनः ।
यच्छेद्धारणया धीरो हन्ति या तत्कृतं मलम् ॥ २० ॥

यस्यां सन्धार्यमाणायां योगिनो भक्तिलक्षणः ।
आशु सम्पद्यते योग आश्रयं भद्रमीक्षतः ॥ २१ ॥

राजोवाच—

यथा सन्धार्यते ब्रह्मन्धारणा यत्र संमता ।
यादृशी वा हरेदाशु पुरुषस्य मनो मलम् ॥ २२ ॥

---

एवं अनायासेन स्मरणविषयं कुर्यात् । तत्परिपाकमाह-मन इति । एवं अभ्यासपाटवेन युगपत्सर्वावयवस्मरणसमर्थः सन् ततः अनन्तरं निर्विषयं विषयेभ्यो निर्गत्य स्थितं मनः तस्मिन् हरौ सर्वावयवव्यापितया युक्त्वा नियुज्य यत्र मनः प्रसीदति निरतिशयं सुखं लभते तद्विष्णोः परमं पदं समग्रं रूपमेव स्मरेत् । ततोऽन्यत्किञ्चिन्न संस्मरेदित्यन्वयः ॥ १९ ॥

अखण्डध्यानोपायमाह—रजस्तमोभ्यामिति । रजसा आक्षिप्तं इतस्ततो विषयैराकृष्टं तमसा विमूढं कृत्याकृत्यज्ञानशून्यं आत्मनः स्वस्य मनः धारणया तैलधारावदव्युच्छिन्नया स्मृत्या यच्छेत् विषयेभ्य आहृत्य ध्येयेनमग्नं कुर्यात् । या धारणा तत्कृतं रजस्तमोभ्यां आप्तं रागाविद्यादिमलं हन्ति तयेत्यन्वयः ॥ २० ॥

न केवलं रागादिमलनाशो धारणायाः फलम् । किन्तु निरन्तरभक्तिलक्षणयोगश्चेत्याह— यस्यामिति । यस्यां धारणायां सर्वजगदेकाश्रयं भद्रं भगवन्तं ईक्षतः चिन्तयतो योगिनो भक्तिलक्षणो योगः आशु सम्पद्यते इत्यन्वयः । 'भदि कल्याण' इति धातोः कल्याणं मङ्गलम् । मङ्गलं भगवान्विष्णुरिति वचनम् ॥ २१ ॥

परीक्षित् विशेषबुभुत्सया शुकं पृच्छति— यथेति । अत्र यथा यत्र यादृशीति यच्छब्दाः प्रश्नार्थाः । 'यतश्चोदेति सूर्यः' 'यच्छब्दस्तु परामर्शे प्रश्नार्थे चापि मण्यते' इति श्रुत्यभिधानाभ्यां

---

१ अयं ख ड पाठस्थः । अन्यत्र - किंचिन्न स्मरेदिति । २ आकृष्य ध्यान - क । आहृत्य ज्ञान - ण छ ढ । आहृत्य ध्येयमग्नं ज्ञान - ट । ३ आक्षिप्तं - ढ ग ज क ण छ । ४ रागादीति नास्ति - छ ण ग क
५ भावनायां - अधिकः पाठः - ज । ६ वादि - ट ख ड ग ।

श्रीशुक उवाच—

जितासनो जितश्वासो जितसङ्गो जितेन्द्रियः ।
स्थूले भगवतो रूपे मनः सन्धारयेद्धिया ॥ २३ ॥

विशेषस्तस्य देहोऽयं स्थविष्ठश्च स्थवीयसाम् ।
यत्रेदं दृश्यते विश्वं भूतं भव्यं भवच्च यत् ॥ २४ ॥

आण्डकोशे[4] शरीरेऽस्मिन्सप्तावरणसंवृते ।
वैराजः पुरुषो योऽसौ भगवान्धारणाश्रयः ॥ २५ ॥

---

निश्चितत्वात् । तथाच यथा कथं, यत्र कुत्र, यादृशी कीदृशी इति सम्पद्यतेऽर्थः[1] ॥ २२ ॥

तत्र प्रथमतो यथेति प्रश्नं परिहरति[2]– जितासन इति । यत्रेत्यनन्तरप्रश्नं प्रत्याह – स्थूल इति ॥ २३ ॥

कनप्राप्तत्वात् यादृशीति प्रश्नं प्रतिवक्ति– विशेष इति । यदिदं भूतं भव्यं भवच्च जडाजडं तद्विश्वं यत्राण्डकोशे दृश्यते, सोऽयं स्थवीयसां स्थूलतराणां सकाशात् स्थविष्ठः स्थूलतमः । विशेषः आण्डकोशः[3], शिलालक्षणप्रतिमावत् तस्य तदन्तस्थस्य हरेः देहः । न तु साक्षाद्देह इत्यर्थः । तदुक्तं "शिलावत्तस्य देहोऽयं आण्डकोशस्तु सावृतिरि'ति ॥ २४ ॥

पृथिव्यादिपञ्चभूताहङ्कारमहत्तत्त्वसञ्ज्ञैः सप्तभिः आवरणैः कवचस्थानीयैः संवृते बहिरावृते शरीरे शीर्यमाणत्वात् तस्मिन्[5] आण्डकोशे योऽसौ विशेषेण प्रकाशनात् विराडास्याण्डान्तर्वर्तित्वात्, सर्वतो वरत्वाद्वा वैराजाख्यः, पुरु बहु कर्मफलं[6] सनोति ददातीति पुरुषः असौ भगवान् धारणाश्रयः । तद्विषयतया कृता धारणा मनोमलं हरतीत्यन्वयः[7] । 'आण्डकोशो[8] विराट् प्रोक्तो विशेषेण प्रकाशनात् । वैराजस्तद्गत' इत्यादेः ॥ २५ ॥

---

१ अयं गकोशस्थः । अन्यत्र - संपद्यते इत्यर्थः । २ यथाप्रश्नं परिहरति - ट ज ग ङ क न । ३ अयं ङ पाठः तात्पर्यानुसारी । सर्वत्र कोशे अण्डकोश इति । ४ अण्डकोशे - ट ग छ ण । ५ तस्मिन् आण्डकोशे - क । तस्मिन् अण्डकोशे - ट ६ कर्मफलमिति ख ङ ट कोशयोः न दृश्यते । ७ हरतीत्यन्वयः - ख क छ ग ङ पाठः । अन्यत्र - हन्तीत्यन्वयः । ८ अण्डकोशः - छ ण ग ङ ज क ट ।

पातालमेतस्य हि पादमूलं पठन्ति पार्ष्णिप्रपदे रसातलम् ।
महातलं विश्वसृजस्सुगुल्फौ तलातलं वै पुरुषस्य जङ्घे ॥ २६ ॥

द्वे जानुनी सुतलं विश्वमूर्तेरूरुद्वयं वितलञ्चातलञ्च ।
महीतलं तज्जघनं महीपते नभस्तलं नाभिसरो गृणन्ति ॥ २७ ॥

उरःस्थलं ज्योतिरनीकमस्य ग्रीवामहर्वदनं वै जनोऽस्य ।
ततो रराटिं विदुरादिपुंसः सत्यन्तु शीर्षाणि सहस्रशीर्ष्णः ॥२८॥

---

उपदिष्टरूपध्यानप्रकारमाह– पातालमित्यादिना । अण्डाख्यप्रतिमायाः पातालादिसत्तलोक[1]-पर्यन्ताः लोकाः पादमूलादिशिरोन्तान्यङ्गानि अण्डस्थितस्य[2] हरेः नाङ्गानि । किन्तर्हि तत्पादमूलाद्यवयवेभ्यो जातानि तदाश्रितानि च । अतो न तेषां केवलचिदानन्दाद्यात्मकभगवदवयवैर्भेदः शङ्कनीयः । 'एतस्य पादमूलमि'त्याद्यभेदोक्तिस्तु 'ब्राह्मणोऽस्य मुखमासीदि'त्यादिवदुच्यते । एवमेव इन्द्रादिदेवादीनां अत्र तदवयवेन्द्रियगोलकाद्यभेदकथनं तत्तदङ्गादिभ्य उत्पन्नत्वात्तदाश्रितत्वात्तदधीनत्वाभिप्रायम् । न तु स्वरूपैक्याभिप्रायम् । तेषां स्वतस्तेभ्यो भिन्नत्वात् । 'प्रतिमापेक्षयाङ्गानि भूरादीनि स्वरूपत' इत्यादेः । तथाचाक्षरयोजना-एतस्य अण्डान्तर्वर्तिनो हरेः पादमूलं पातालं पठन्तीत्याद्यन्वयः । चिदानन्दाद्यात्मकात् पादतलात्[3] जातं तदाश्रितं चेति ज्ञानिनः शिष्येभ्य उपदिशन्ति । उपदिष्टाः तथोपासते च[4] । उत्तरत्राप्येवमेवानुसन्धेयम् । हिशब्दः उक्तार्थे प्रमाणप्रसिद्धिप्रकाशकः । पार्ष्णिश्च प्रपदञ्च पार्ष्णिप्रपदे । पार्ष्णिः पादस्य पृष्ठभागः । प्रपदं पादाग्रम् । विश्वं सृजतीति विश्वसृक् । तस्य सुगुल्फौ प्रशस्तलक्षणपिण्डिकाख्यपर्वणी महातलं पठन्तीति पूर्वेणान्वयः ॥ २६ ॥

विश्वमूर्तेः द्वे जानुनी सुतलं ऊरुद्वयं वितलं अतलञ्च । अधोभागे वितलं उपरिभागे अतलमिति[5] विभागः । जघनं कटितटम् । एतत् स्मरणं विशेषा[6]त्त्वया कार्यमित्यतो महीपत इति सम्बोधितम् । अगाधत्वब्रह्मजनकपद्मनिदानत्वाभिप्रायेण नाभिसर इत्युक्तम् । नभस्तलं भुवर्लोकः ॥ २७ ॥

ज्योतिरनीकं ज्योतिश्चक्रस्थानं स्वर्लोकः । महर्लोकोऽस्य हरेः ग्रीवेति गृणन्ति । जनः जनलोकः । तपो[7] लोकः । रराटिं ललाटम् ॥ २८ ॥

---

१ पातालादि सत्यलोक.... - ख क ण छ ट ड । २ तस्येत्यधिकः पाठः - क ज छ ग ।
३ पादतलात् इति ज ख ट ड पाठः । अन्यत्र - पादमूलात् । ४ चेति - ख ज ड ।
५ त्वतल - ख ज ट छ ग ञ ड । ६ विशेषतस्त्वया - ज ख ड । ७ तपस्तपो - ग क ।

इन्द्रादयो बाहव आहुरस्य कर्णौ दिशः श्रोत्रममुष्य शब्दः ।
नासत्यदस्रौ परमस्य नासे घ्राणश्च गन्धो मुखमग्निरिद्धः ॥२९॥
द्यौरक्षिणी चक्षुरभूत्पतङ्गः पक्ष्माणि विष्णोरहनी उभे च ।
तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यमापोऽस्य तालू रस एव जिह्वा ॥
छन्दांस्यनन्तस्य गिरः गृणन्ति दंष्ट्रार्यमेन्दू उडुगणा द्विजानि ।
हासो जनोन्मादकरी च माया दुरन्तसर्गो यदपाङ्गमोक्षः ॥३१॥
व्रीडोत्तरोष्ठोऽधर एव लोभो धर्मःस्तनोऽधर्मपथश्च पृष्ठः[4] ।
कस्तस्य मेढ्रं वृषणौ च मित्रः कुक्षिः समुद्रा गिरयोऽस्थिसङ्घाः ॥

---

इन्द्रादयो लोकपालाः अस्य बाहव इत्याहुः । दिशः कर्णौ गोलकस्थानीयौ । अमुष्य हरेः श्रोत्रं इन्द्रियं शब्द इति । नासत्यदस्रौ अश्विनौ नासे नासिके । गन्धो भूमेः गुणः घ्राणं गन्धग्राहीन्द्रियं गन्धजनक[1]माहुरित्यर्थः । इद्धः दीप्तः ॥ २९ ॥

द्यौः द्युलोकः । अक्षिणी गोलके । पतङ्गः सूर्यः । मनुष्याणामहनी देवादीनामहनी इत्युभे च विष्णोः पक्ष्माणि ततो जाते तदाश्रिते च । परमेष्ठिधिष्ण्यं ब्रह्मलोकः । मधुरादिरसः ॥ ३० ॥

गायत्र्यादिच्छन्दांसि गिरः वचनानि गृणन्ति । अर्यमेन्दू सूर्यचन्द्रौ[2] दंष्ट्रा दंष्ट्राद्वयाज्जातावित्यर्थः[3] । बहुलत्वात् पुनर्वचनम् । 'बहुलत्वं बहुलवत' इति वचनात् । उडुगणा नक्षत्राणि द्विजानि दन्ताः । अत्र प्रगृह्यसंज्ञाभावो लिङ्गव्यत्ययश्च वैलक्षण्यद्योतनायेति ज्ञातव्यम् । माया मोहनशक्तिः हासो हासादभिव्यक्ता । सतनु प्रथनेति सूत्रात् । दुरन्तसर्गः अनवसानविश्वसृष्टिः ॥ ३१ ॥

व्रीडा लज्जा । अधरः अधरोष्ठः । एवशब्दः अन्ययोगव्यवच्छेदक[5]ः । कः प्रजापतिः । मेढ्रं इन्द्रियम् । वृषणौ बीजद्वयम् । मित्र इत्युपलक्षणं वरुणश्च ॥ ३२ ॥

---

१ गन्धवद्धक - ङ । २ सूर्याचन्द्रौ - ख ङ ।

३ अयं ख पाठस्थः । अन्यत्र - दंष्ट्राद्वयाज्जाताविति शेषः ।

४ पृष्ठम् - क ज ङ ग छ । पृष्ठे - ख । ५ अन्ययोगव्यवच्छेदकः इति सर्वत्र पाठः । मूलपाठस्तु - अन्योन्यव्यवच्छेदकः ।

नद्योऽस्य नाड्योऽथ तनूरुहाणि महीरुहा विश्वतनोर्नृपेन्द्र[1] ।
अनन्तवीर्यः श्वसितं मातरिश्वा गतिर्वयः कर्म गुणप्रवाहः ॥३३॥
ईशस्य केशान्विदुरम्बुवाहान्वासस्तु सन्ध्ये कुरुवर्य भूम्नः ।
अव्यक्तमाहुर्हृदयं मनस्तु स चन्द्रमाः सर्वविकारकोशः ॥ ३४ ॥
विज्ञानशक्तिं महिमामनन्ति सर्वात्मनोऽन्तःकरणं गिरित्रः ।
अश्वाश्वतर्युष्ट्रगजा नखानि सर्वे मृगाः पशवः श्रोणिदेशे ॥ ३५ ॥
वचांसि तद्व्याहरणं विचित्रं मनुर्मनीषा मनुजो निवासः ।
गन्धर्वविद्याधरचारणाप्सरः स्वरस्मृतीरसुरानीकवीर्यः ॥ ३६ ॥

---

विश्वा तत्तत्पदार्थेषु प्रविष्टा तनुः यस्य स तथा तस्य । विश्वं तनुः प्रतिमा यस्य स तथा तस्येति वा । वीर्यं रेतः। अन्नं प्राणिभोग्यम् । गतिः गमनम् । तस्माद्वयः आयुः प्राणिनां जीवनावधिलक्षणं उत्पन्नम् । कर्म व्यापारः । तस्मात् सत्वादिगुणानां प्रवृत्तिक्रमः ॥ ३३ ॥

सन्ध्ये द्वे । अव्यक्तं मूलप्रकृतिम् । मनोऽभिन्नानिस्वाचन्द्रस्य कामादिनानाविकारगृहत्वमुपचारः । मनः मनसो जातः ॥ ३४ ॥

विज्ञानशक्तिं विरिञ्चम् । गिरिं कैलासं त्रायत इति, गिरेः वाचः त्राणं यस्य स तथेति वा गिरित्रो रुद्रः । सर्वात्मनः सर्वस्वामिनः । अन्तःकरणं अहङ्कारः । तस्माज्जातः । नखानि नखेभ्यः । गर्दभाद्वडवायामुत्पन्ना अश्वतरी । श्रोणिदेशे स्थिताः । तस्मात् जाताश्च ॥ ३५ ॥

वचांसि लौकिकवैदिकानि विचित्रं तस्य व्याहरणं शब्दोच्चारणाश्रितानि[2] तज्जातानि च । मनुः वायुः । तस्य मनीषा बुद्धिः 'ते वायवे मनवे बाधितायेति श्रुतिः । मनुः स्वायम्भुवो वा । मनीषा विचारः । भगवद्विचारशक्तिजातत्वात् स्मृतिकर्तृत्वं मनोः । निवासैः[3] निवसनकर्मजनितत्वात्[4] । गन्धर्वादीनामनुत्पादके स्वरस्मृती यस्य स तथा । स्वरः षड्जादिलक्षणः । स्मृतिः अतीतविषया[5] । असुरानीकस्य जनकं वीर्यं यस्य स तथा ॥ ३६ ॥

---

१ विश्वेषु - ज । २ व्याहरणं शब्दः । व्याहरणाश्रितानि - छ न ट क ग ङ ।
३ 'निवासैः कर्म' इति मूलपाठः । ४ जन्यत्वात् - ङ । ५ अतीतादि - क न ट छ ग ङ ।

ब्रह्माननः क्षत्रभुजो महात्मा विडूरुरङ्घ्रिश्रितकृष्णवर्णः ।
स्वाहास्वधावीर्यगुणोपपन्नो हव्यात्मकः कर्मवितानयोगः ॥ ३७ ॥

इयानसावीश्वरविग्रहस्य यः सन्निवेशः कथितो मया ते ।
सन्धार्यतेऽस्मिन् वपुषि स्थविष्ठे मनः स्वबुध्या न यतोऽस्ति किञ्चित्

॥ इति श्रीमद्भागवते द्वितीयस्कन्धे प्रथमोऽध्यायः ॥

---

ब्रह्मणः ब्राह्मणजातेः जनकं आननं यस्य स तथा । क्षत्रजातेरुत्पादकौ भुजौ[1] यस्य स तथा । विशां जनकौ ऊरू यस्य स तथा । अङ्घ्रिश्रितः कृष्णवर्णः शूद्रजातिर्यस्य स तथा । देवपितृभ्यो विनियुज्यमानान्नं स्वाहास्वधा । तयोः उत्पादको वीर्यगुणो रेतोगुणः तेनोपपन्नः । हव्यस्य जनकः आत्मा मध्यदेहो यस्य स तथा । अग्निष्टोमादिकर्मवितानस्योत्पादको योग उपायो यस्य स तथा । वितानं विस्तारः ॥ ३७ ॥

उक्तार्थमुपसंहरति– इयानिति । ईश्वरविग्रहस्य वैराजाख्यहरिदेहस्य यः सन्निवेशः अवस्थिति विशेषः सः इयान् इत्थंभूतः मया ते तव कथितः । यतः यस्मात् ईश्वरविग्रहात् स्थविष्ठं उत्तमञ्च नास्ति । योगिभिः मनः अस्मिन् स्थविष्ठे सर्वोत्तमे वपुषि स्वबुध्या सन्धार्यते । मनोनैर्मल्यायेति शेषः । इत्यन्वयः ॥ ३८ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
द्वितीयस्कन्धे प्रथमोऽध्यायः ॥

* * *

---

१ उत्पादका भुजाः - ख ।

## ॥ अथ द्वितीयोऽध्यायः ॥

शुक उवाच--

एवं पुरा धारणयात्मयोनिर्नष्टां स्मृतिं प्रत्यवरुद्य तुष्यन् ।
तथा ससर्जेदममोघदृष्टिर्यथाप्ययात्प्राग्व्यवसायबुद्धिः ॥ १ ॥

शब्दस्य हि ब्रह्मण एष पन्थाः यन्नामभिर्ध्यायति धीरपार्थैः ।
परिभ्रमंस्तत्र न विन्दतेऽर्थान्मायामये वासनया शयानः ॥ २ ॥

---

## ॥ अथ द्वितीयोऽध्यायः ॥

एवं वैराजाख्यस्थूलरूपस्य धारणाश्रयत्वमुक्त्वा अस्मिन्नध्याये तद्धृदयकमलकर्णिकान्तर्वर्तिनो हरेः आत्माख्यरूपस्य धारणाविषयत्वं तदुपासकानां फलञ्च उपदिशति । तत्र प्रथमतः धारणायां क्षिप्रप्रवृत्तये कुत्र कस्य दृष्टफलेयं धारणेति शङ्काशङ्कुमुन्मूलयन् 'ब्रूहि यद्वा विपर्ययं' इति प्रश्नं परिहरति– **एवमित्यादिना** । आत्मा परमात्मा योनिः कारणं यस्य स तथा स ब्रह्मा पुरा आदिसृष्टौ काले[1] नष्टां तिरोहितां प्राक्कल्पविषयां स्मृतिं एवं उक्त[2]धारणया प्रत्यवरुह्य अङ्कुरीकृत्य प्रतिलभ्य तुष्यन् अलम्बुद्धिं गच्छन् व्यवसाये जगत्[3]सर्जनोद्योगे बुद्धिः यस्य स तथा । तत एव धारणाया एवं[4] अमोघ-दृष्टिः अप्ययात् प्राक् प्रलयात् पूर्वं यथास्थितं तथा इदं जगत्ससर्जेत्यन्वयः । ब्रह्मणा दृष्टफलत्वात् इयं विश्वसनीयेति विज्ञायते ॥ १ ॥

वाङ्मनसागोचरस्य[5] कथं धारणालम्बनत्वमत्राह– **शब्दस्येति** । उक्तप्रकारेण श्रोतव्यादित्वेन विवक्षितां लम्बनत्वात् स्वतन्त्रत्वात् ब्रह्मादिसर्वजगत्स्रष्टृत्वात् सर्वान्तःस्थितत्वात् सर्वस्य तदधीनत्वात् सर्वगुणपूर्णत्वाच्च शब्दस्य ब्रह्मणः वेदादिसर्वशब्दराशेः एष हरिः पन्था विषयः मुख्यवाच्य इत्यन्वयः । इन्द्रादिनाम्नां पुरन्दरादिष्विव रूढत्वात् हरेः तन्नामवाच्यत्वे रूढेः काप्यप्रयोजकत्वमत्राह– **यन्नामभि-रिति** । मायामये ईश्वरेच्छानिर्मितत्वात् तदधीने संसारे शयानैः[6] किमप्यजानन् वर्तमानः अत एव वासनया नानाकर्मवासनया नानायोनिषु परिभ्रमन् यो जीवः तस्य धीः यत्पुरन्दरादिकं इन्द्रादिनामभिः

---

१ पुरा आदिकाले - ख ड पुरा आदिसृष्टौ काले - ग । २ उक्त्वा - ख ग छ ज ट ।
३ जगत्सर्जनलक्षणोद्योगे - ख ग ड छ क ज ट ड । ४ ततो धारणया एव - ट छ । अत एवामोघदृष्टिः - ज ख ड ।
५ अवाङ्मनसगोचरस्य - । ६ शयानः परिभ्रमन् किमप्यजानन् - क ट ।

अतः कविर्नामसु यावदर्थः स्यादप्रमत्तो व्यवसायबुद्धिः ।
सिद्धेऽन्यथार्थे न यतेत तत्तत्परिश्रमं तत्र समीक्षमाणः ॥ ३ ॥

सत्यां क्षितौ किं कशिपोः प्रयासैर्बाहौ स्वसिद्धे ह्युपबर्हणैः किम् ।
सत्यञ्जलौ किं पुरुपर्णपात्रैर्दिग्वल्कलाभे सति किं दुकूलैः ॥ ४ ॥

---

ध्यायति तत्र पुरन्दरादौ सर्थान् इन्द्रादिनाम्नां अनुपहतपरमैश्वर्यादिलक्षणान् न विन्दते लब्धबुद्धिं न प्राप्नोति । किञ्च तदुपास्त्या तेभ्यः पुरुषार्थांश्च न लभते । कुत इत्यत उक्तं– अपार्थैरिति । तत्रैश्वर्याद्यर्थानामसम्भवात् । अतो हरिरेव परनैश्वर्यादिगुणाकरत्वेन मुख्याभिधेय इति स एव स्मर्तव्यः इति अन्यत्सर्वं अस्मर्तव्यं प्राधान्येनेति भावः । अनुपसर्गेपि क्विप्प्रत्ययविधानात् ध्यायतीति धीः ज्ञानाश्रयः पुरुषो वा । यदित्यस्याव्ययत्वेन अपार्थैरित्यनेन संयोज्य यदपार्थैः यस्मिन् पुरन्दरादौ अपार्थैः इन्द्रादिनामभिः पुरन्दरादिकं ध्यायति तत्र पुरन्दरादाविति वा । 'सर्वनामा यतो विष्णुः तदन्यार्थान्न तु स्मरेत्' इति स्मृतिप्रसिद्धिं हिशब्देनाह ॥ २ ॥

सर्वशब्दानां विष्णवेकविषयत्वे विदुषामभिवदन[३]ादिसर्वव्यवहारोच्छेदप्रसङ्गः इति तत्राह– अत इति । एवं सर्वनामार्थतया हरिरेव ध्येयः तद्व्यवहार्यश्च यतोऽतः कविः सर्वज्ञः अप्रमत्तो जागरणशीलः नाम्नां हरिविषयत्वनविस्मरदित्यर्थः । अत एव व्यवसायबुद्धिः निश्चयबुद्धिः नामसु हरीतरविषयेषु घटादिषु अभिवदन[३]ादिना यावदर्थः यावानर्थः स्वप्रयोजनं यस्य सः तथा स्यात् । नातोऽधिकप्रयोजन इत्यर्थः । अन्यथा घटादिविषयलोकव्यवहारमन्तरेण अर्थे स्वप्रयोजने सिद्धे स्वयमेव सम्पन्ने न तत्र यतेतेत्यन्वयः । कुतः? अत्राह– तत्तदिति । तत्तत्[४]पदार्थेषु तत्तत्परिश्रमं अर्थपूर्त्यभावेन ततः क्लेशं समीक्षमाण इत्यन्वयः ॥ ३ ॥

इदानीं स्वतः सिद्धिप्रकारं दर्शयति– सत्यामिति । देवनिर्मितायां क्षितौ सत्यां कशिपोः शय्यायाः सम्पादनप्रयासैः किं? न किमपि प्रयोजनम् । शरीरयात्रानिर्वाहस्य द्रव्यान्तरेण सिद्धत्वादिति भावः । बाहौ स्वसिद्धे स्वतः अनायासेन संपन्ने सति उपबर्हणैः शिरःपीठैः उच्छीर्षकैः किं? कराञ्जलौ सति पुरुभिः विस्तीर्णैः पर्णपात्रैः किं? 'बर्हं पर्णं दलं पत्रमि'त्यभिधानम् । दिशामेव वल्काणां लाभे सति दुकूलैः निष्कापायक्षौमादिवसनैः किम् ॥ ४ ॥

---

१ अयं जकोशस्थः । अन्यत्र अभिधेय इति । २ अभिवादनादि - क ट ख - अभिवदनादि - इति ड ण पाठस्थः । मूले ड म ज छ कोशेषु च - अभिवन्दनादि । ३ अयं ड पाठः । अन्यत्र अभिवन्दनादिनेति । ४ तत्र पदार्थेषु - ख ड ।

चीराणि किं पथि न सन्ति दिशन्ति भिक्षां
नो वाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन् ।
रुद्धा गुहाः किमवधूतसुहृन्न कृष्णः
कस्माद्भजन्ति कवयो धनदुर्मदान्धान् ॥ ५ ॥

एवं स्वचित्ते स्वत एव सिद्ध आत्मा प्रियोऽर्थो भगवाननन्तः ।
तं निर्वृतो नियतार्थो भजेत संसारहेतूपरमश्च यत्र ॥ ६ ॥

---

ननु भवादृशानां योगिनां क्षित्यादिना शरीरयात्रासिद्धावपि अपरिपक्वयोगिनां पुंसां कथमुपभोगः संपत्स्यत इत्यत्राह— **चीराणीति** । 'पटच्चीराणि[1] गृहिभिर्देयानि पथि तोरणे । दरिद्राणाञ्च भिक्षूणां आच्छादनकराणि च' इति स्मृतेः पथि तोरणे गृहस्थैः निहितानि चीराणि जीर्णवस्त्राणि मूषिकादिप्रभिन्नानि वा न सन्ति किं ? भोजनार्थमिति चेत्- परान् फलपुष्पादिना[2] बिभ्रतीति परभृतः अङ्घ्रिपाः वृक्षाः भिक्षां फलादिना नो दिशन्ति वा ? दिशन्त्येव । उदकार्थमिति चेत् - सरितः स्यन्दमानाः नद्यः अशुष्यन्नपि किं ? नाशुष्यन्नित्यर्थः । शयनार्थमिति चेत् - गुहाः रुद्धाः पिहिताः किं ? केनचिदिति शेषः । गुहासु सिंहादिभयेन कथं वासः सम्पत्स्यते[3] इति तत्राह— **किमिति** । कृष्णः अवधूतानां धूलिधूसराङ्गानां योगिनां सुहृन्न किं ? सुहृदेव । अतः वस्त्राद्याशया कवयः धनादिदुर्मदेन अन्धान् विवेकचक्षूरहितान् राजादीन् कस्माद्भजन्ति ? न भजन्त्येव । अतो मुमुक्षुणा यदृच्छया लब्धाशनादिना भाव्यमिति भावः ॥ ५ ॥

इदानीमुक्तानुष्ठानपरिपाकप्रकारमाह— **एवमिति** । एवं उक्तप्रकारेण यदृच्छया लब्धाशनादिना वृत्तिं दृष्ट्वा प्रसन्नस्य स्वतः स्वतन्त्रस्य हरेः प्रसादात् स्वचित्ते स्वाधीनतया वर्तमाने सति भगवान् ऐश्वर्यादिगुणसमुद्रः अनन्तः परिच्छेदशून्यः आत्मा परमात्मा देहपुत्रादिभ्योऽप्यत्यन्तं प्रियोऽर्थः इति कृत्वा निर्वृतः सञ्जातरोमाञ्चः नियतार्थः 'एतमितः प्रेत्याभिसम्भवितास्मी'ति निश्चितार्थः पुरुषः तं भगवन्तं भजेत । कदाचिदपि तद्भजनं न मुञ्चेत् । ततः किं फलं ? अत्राह— **संसारेति** । यत्र यस्मिन् सेव्यमाने सेवकस्य संसारहेतूनां अविद्यादीनामुपरमः । अविद्यादीनां सद्भावे सोऽस्तीति शक्यशङ्कम्[1] । त एव न सन्ति । अतः तथा शङ्कमानोऽसुरप्रकृतिरिति भावः । 'तदेतत्प्रेय' इत्यादिश्रुति-

---

१ पटच्चीराणि - प्रचलित पाठः । २ फलपाकादिना - क ग ङ । ३ संपद्यत - क ग ङ ट ।

१ अयं छ ङ पाठः । अत्र नाऽयं शंका - क । शक्याशंकं - ङ ।

स सर्वविद्धृद्यनुभूश्च सर्व आत्मा यथा सुप्तजनेक्षितैकः ।
तं सत्यमानन्दनिधिं भजेत सर्वात्मनाऽतोऽन्यत आत्मघातः ॥ ७ ॥

कस्तन्त्वनादृत्य परानुचिन्तामृते पशूनसतीं नाम युञ्ज्यात् ।
पश्यञ्जनं पतितं वैतरण्यां स्वकर्मजान्परितापाञ्जुषाणम् ॥ ८ ॥

---

सिद्धं हरेः प्रियार्थत्वञ्च । न केवलं संसारहेतूपरमः फलं, किन्तु निर्दुःखानन्दानुभवलक्षणमोक्षप्राप्तिश्चेति च शब्दः ॥ ६ ॥

भजनापरपर्यायोपासनं गुणोपसंहारेण कार्यमिति वदतः तद्गुणकथनपूर्वकं तदेवोपासनं स्पष्टीकुर्वन् विपक्षे बाधकमाह– स सर्वविदिति । 'प्राणाग्नय एवैतस्मिन् पुरे जाग्रती'ति श्रुतेः पञ्चवृत्तिरेको मुख्यप्राण एव यथा सुप्तजनस्येक्षिता द्रष्टा तथा स हरिः सर्वान् पश्यतीति सर्ववित् । हृदि स्थितानुभूः यथेष्टानन्दानुभववान् । सर्वः गुणपूर्णः आत्मा स्वामी इत्येवं गुणानुपसंहृत्य सत्यं सर्वेषः सारं आनन्दनिधिं तं विष्णुं भजेत उपासीत । आधिव्याध्यादिसम्भवेऽपि उपासनं न हातव्यमित्याशयेनोक्तं सर्वात्मनेति । अतोऽन्यतः परमात्मानुपासने आत्मघातः अहितकरणादिना स्वात्महननाख्यदोषापत्त्या नित्यदुःखतमःप्राप्तिः स्यादित्यन्वयः । चशब्दः तत्प्रसिद्धत्वानुसारेणास्मिन्नर्थे । 'यथैकस्तु बहून्सुप्तानसुप्तः पश्यति प्रभुः' 'यथेष्टभवनाद्विष्णुरनुभूः परिकीर्तित' इत्यादेरुक्त एवार्थ इति । स्वेच्छानुकूलविग्रहग्रहणाद्वाऽनुभूः । अनेन प्राणेन दत्तानि चेष्टालक्षणानि कर्माणि इत्यानन्दशब्देन कर्माण्युच्यन्ते । तेषां फलपर्यन्तं निधापकत्वेन निधिपालवत् स्वामित्वात् आनन्दनिधिः हरिः तं वा ॥ ७ ॥

भगवदुपासनानकुर्वाणस्य पशोरपि वैलक्षण्यं नास्तीत्याह– कस्तमिति । नरके विगततरणत्वाद्वैतरणी नाम नदी या तस्यां हरेः अनुपासनाख्यदोषात्पतितं स्वकर्मजान् स्वकृतकर्मसमुद्भूतान् परितापान् सर्वतोदिशं आयातान् दुःखविशेषान् जुषाणं भुञ्जानं जनं गुरुशास्त्रोपदेशदृष्ट्या पश्यन् तुशब्दसूचितजाड्यदुःखनिवर्तकालस्यबुद्धिगोचरसुखप्रदं हरिञ्च पश्यन् को विवेकी तं भगवन्तं अनादृत्य असतीं अशुभां परानुचिन्तां इतरविषयां उपास्तिलक्षणां स्मृतिं युञ्ज्यात्, पशुत्वं विवेकबुद्धिराहित्यमृते ? यदि युञ्ज्यात् तर्हि स पशुरेव, न विवेकीत्यन्वयः । 'चतुर्वेद्यपि यो विप्रो वासुदेवं न विन्दति । वेदभारभराक्रान्तः स वै ब्राह्मणगर्दभ' इति ॥ ८ ॥

---

१ ट ञ ख पाठस्थः । २ भववान् - ज । ३ सद्भावेपि - ग ख ट ञ ङ न ढ समुद्भावेपि - क ।
४ निधायकत्वेन - ञ न ट ङ ढ क । ५ निधिपालनत्वात् स्वामित्वाद्वा - क ।

केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् ।
चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ति ॥ ९ ॥

प्रसन्नवक्त्रं नलिनायतेक्षणं कदम्बकिञ्जल्कपिशङ्गवाससम् ।
लसन्महाहारहिरण्मयाङ्गदं स्फुरन्महारत्नकिरीटकुण्डलम् ॥ १० ॥

उन्निद्रहृत्पङ्कजकर्णिकालये योगेश्वरास्थापितपादपल्लवम् ।
श्रीलक्षणं कौस्तुभरत्नकन्धरमम्लानलक्ष्म्या वनमालयाञ्चितम् ११

---

योग्यतातारतम्येनाधिकारिणां बहुत्वात् स्थूलरूपोपासनायोग्यानां तदुपास्तिमभिधाय अधुना स्वदेहहृदयकमलकर्णिकानिकेतनात्मोपासनायोग्यानां तदुपासनं विधत्ते— केचिदिति । केचिदात्मोपासनायोग्याः स्वदेहान्तर्हृदयावकाशे वसन्तं प्रादेशमात्रं प्रादेशपरिमाणं कञ्जं पद्मं रथाङ्गं सुदर्शनं शङ्खं पाञ्चजन्यं गदां कौमोदकीं धारयतीति कञ्जरथाङ्गशङ्खगदाधरः तं धारणया तैलधारावत् अखण्डितमनोवृत्त्या स्मरन्तीत्यन्वयः ॥ ९ ॥

श्लोकचतुष्टयेन तमेव विशिनष्टि— प्रसन्नवक्त्रमित्यादिना । प्रपन्नं भक्तानां प्रसादाभिमुखं वक्त्रं यस्य स तथा तम्[1] । नलिनवत् रक्तपद्मदलवत् आयते दीर्घे ईक्षणे यस्य सः तथा तम् । कदम्बः कृष्णप्रियस्तरुः तस्य पुष्पस्य किञ्जल्कः अङ्कुरविशेषः तद्वत् पिशङ्गं पीतं वासो यस्य सः तथा तम् । लसन्महाहारश्च हिरण्मयाङ्गदश्चेति लसन्महाहारहिरण्मयाङ्गदः तम् । स्फुरन्ति शोभनानानि महान्ति च रत्नानि[2] तैः युक्तं किरीटं कुण्डले च यस्य सः तथा तम् ॥ १० ॥

उन्निद्रस्य विकसितस्य हृत्पङ्कजस्य कर्णिकाख्यालये योगेश्वरैः सनकादिभिः आस्थापितौ सन्निधापितौ पादपल्लवौ यस्य स तथा तम् । श्रीरेव लक्षणं चिह्नं यस्य वक्षसि स तथा तम् । कुस्तुभात् समुद्रात् जातं कौस्तुभं तेन रत्नेन युक्ता कन्धरा यस्य सः तथा तम् । अम्लाना अनवलूनवद् अतान्ता[3] लक्ष्मीः यस्याः सा तया ॥ ११ ॥

---

१ एतद्वाक्यं क ज ड पाठेषु नास्ति । २ महान्ति च तानि रत्नानि - ण ङ ।

३ अनवलूनवद् अतान्तोति ख ड पाठः । अम्लानानां नवपल्लवदलानां-ण ङ ट क छ । मूलकोशे-अनवलूननवदला ।

विभूषितं मेखलयाङ्गुलीयकैर्महाधनैर्नूपुरकङ्कणादिभिः ।
स्निग्धामलैः कुञ्चितनीलकुन्तलैर्विरोचमानाननहासपेशलम् ॥१२॥
अदीनलीलाहसितेक्षणोल्लसद्भ्रूभङ्गसंसूचितभूर्यनुग्रहम् ।
ईक्षेत चिन्तामयमेनमीश्वरं यावन्मनो धारणयावतिष्ठते ॥ १३ ॥
एकैकशोऽङ्गानि धियाऽनुभावयेत्पादादि यावद्धसितं गदाभृतः ।
जितं जितं स्थानमपोह्य धारयेत्परं परं शुध्यति धीर्यथा यथा ॥
यावन्न जायेत परावरेऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोगः ।
तावत्स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत ॥ १५ ॥

---

मेखलया काञ्च्या अङ्गुलीयकैः अङ्गुलिभूषणैः महान्ति धनानि गृह्णन्तीति महाधनानि तैः । स्निग्धाश्च अमलाश्च ते तैः । कुञ्चिताः वक्राश्च नीलाश्च ते कुन्तलाः तैः विरोचमाने आनने यः हासः तेन पेशलं सुन्दरम् ॥ १२ ॥

अदीनलीलया उद्भूताभ्यां हसितेक्षणाभ्यां उल्लसन्त्योः भ्रुवोः भङ्गेन स्फुरणविशेषेण संसूचितः भूर्यनुग्रहः यस्य[1] सः तथा तम् । ईक्षेत चिन्तयेत्[2] । चिन्तामयं चिन्ताप्रधानम् । 'यस्मात्स चिन्तितो विष्णुः चिन्तितं प्रददात्यज' इत्यादेः । कियन्तं कालं चिन्तनमत्राह- यावदिति । यावद्धारणया समग्राङ्गे मनः अचलनवतिष्ठते तावदिति शेषः । १३ ॥

सर्वाङ्गस्मरणाशक्तस्य स्मरणप्रकारमाह - एकैकश इति । ध्यानेन जितं जितं अनायासेन ध्यानविषयं स्थानं अवयवं अपोह्य वशीकृत्य परं परं अजितं अजितं अनभ्यस्तं अवयवं पादमारभ्य यावद्धसितम् । पुष्पितं वनमितिवत् हासेन विकसितं मुखं हसितमित्युपलक्ष्यते[3] । मुखपर्यन्तं साङ्गोपाङ्गं[4] प्रति धिया मनो धारयेत् । यथा यथा धीः सिध्यति[5] सर्वाङ्गस्थाने क्षमा भवति तथा तथा अभ्यस्तं कुर्यात् अतः सर्वाङ्गध्यानज्ञानध्योदयपर्यन्तं एकैकावयवमनुभावयेदित्यर्थः ॥ १४ ॥

इममर्थमुपसंहरति- यावदिति । पराः ब्रह्मादयोपि अवराः यस्मात्सः परावरः तस्मिन् । द्रष्टरि सर्वसाक्षिणि । विश्वेश्वरे हरौ । यावत् सर्वोत्तमो मम महोपकारकोऽत एव सर्वतः प्रियतम इति

---

१ येन - क ह छ ज ज ण । २ चिन्तयेत् - ङ । ३ हसितमिति लक्ष्यते - घ ङ ज ग छ ट । ४ अङ्गोपाङ्गम् - ङ । ५ शुध्यति - क ग ट छ ज ग ङ ।

स्थिरं सुखञ्चासनमास्थितो यतिर्यदा जिहासुरिममङ्ग लोकम् ।
काले च देशे च मनो न सज्जेत् प्राणान्नियच्छेन्मनसा जितासुः ॥

मनश्च बुध्याऽमलया नियम्य क्षेत्रज्ञ एतां निनयेत्तमात्मनि ।
आत्मानमात्मन्यवरुध्य धीरो लब्धोपशान्तिर्विरमेत कृत्यात् ॥१७॥

---

ज्ञानपूर्वकप्रेमलक्षणभक्तियोगः अखण्डध्यानप्रापको न जायेत तावत्पर्यन्तं 'पातालमेतस्य हि पादमूलं' इत्यादिनोक्तं सर्वलोकदेवाद्याधारं पुरुषस्य स्थवीयः अतिस्थूलं रूपं स्मरेत । तत्रापि निरन्तरंध्यानाशक्तः सन् नित्यक्रियावसाने प्रयतः प्रयत्नवान् स्मरेतेत्यन्वयः ॥ १५ ॥

इदानीं उक्तविधोपासनाजनितज्ञानेनापरोक्षीकृतपरमात्मतत्वस्य तत्प्रसादाद्विज्ञातब्रह्मादितत्वस्य च ज्ञानिनः यदा देहत्यागेच्छा तदा स्वदेहगतेन्द्रियाद्यभिमानिदेवतालयन्मरणपूर्वकं मोक्षप्रकारमाह— स्थिरमिति । यतिः निर्जितेन्द्रियग्रामः अपरोक्षज्ञानी इमं लोकं देहं यदा जिहासुः त्यक्तुमिच्छति तदा यथा सुखं भवति तथा स्थिरं अचलं आसनं आस्थितः काले देशे च कालस्थेषु देशस्थेषु च विषयेषु धावन्मनः न सज्जेत् सक्तं न कुर्यात् । अथ मनसा स्ववशेन प्राणान् विषयान् धावन्तीन्द्रियाणि च नियच्छेत् तत आहरेत् । आहृत्य च प्राणान्नियच्छेत् प्राणायामान् कुर्यात् । अथ जितासुः भक्त्या प्राप्तप्राणप्रसादः इन्द्रियप्रेरकान् दिगादिदेवान् मनोभिमानिनीन्द्रे नियच्छेत् इन्द्राधीनान् चिन्तयेत् ॥ १६ ॥

मनश्च मनोभिमानिनं इन्द्रं च अमलया बुध्या बुद्धिदेवतया उमया नियम्य तदधीनं स्मृत्वा एतां बुद्धिदेवतां उमां क्षेत्रज्ञे जीवान्तर्यामिणि हरौ निनयेत् नितरां तदधीनां चिन्तयेत् । तं क्षेत्रज्ञं आत्मनि देहमध्यस्थे हरौ निनयेत् तदैक्येन चिन्तयेत् । तं देहमध्यगतं आत्मानं हरिं आत्मनि सर्वगते हरौ अवरुध्य तदेकीभावेन सञ्चिन्त्य देहादुत्क्रम्य लब्धोपशान्तिः प्राप्तसर्वाधिकमङ्गलास्यविष्णुरूपः धीरः कृत्यात् विधिनिषेधलक्षणात् कार्यात् विरमेतेत्यन्वयः । 'भक्त्या प्राणं वशं नीत्वा जितप्राणो

---

१ तदात्म - ग । २ विषयेषु मनः - ज । ३ अनुधावन्ति - ग ङ छ क ग । मूलभृतः ख ङ पाठस्थः ।
४ निनयेत् नितरां तदैक्येन - ज । ५ भक्त्या प्राणमित्यतः पूर्वं तदुक्तमिति, भण्यते इत्यनन्तरं इतीति-ज ।

न यत्र कालोऽनिमिषप्रभुः प्रभुः कुतो नु देवा जगतां य ईशिरे।
न यत्र सत्वं न रजस्तमश्च न वै विकारो न महान्प्रधानम् ॥१८॥

---

भवत्युत।' 'जीवस्थो भगवान्विष्णुः क्षेत्रज्ञ इति गीयते। हृद्गतस्तु स एवात्मा व्याप्तोऽप्यात्मेति भण्यते।' 'हरौ हरेर्भेदैर्नीतिस्तदेकत्वस्य चिन्तनम्। अन्यत्र तन्नियम्यादिचिन्तनं नीतिरुच्यते।' इति प्रमाणेभ्यः उक्त एवार्थोऽन्यो न स्वकपोलकल्पित इति भावः। 'मनस्तत्वं बुद्धितत्वे बुद्धितत्वं क्षेत्रज्ञे अधिष्ठानभूते तं क्षेत्रज्ञद्रष्टारं आत्मनि शोधितत्वंपदार्थे चिन्मात्रे तमात्मानं शोधितत्वंपदार्थभूतमात्मनि शोधिततत्पदार्थभूते परमात्मन्यखण्डे एकीकृत्य भेदहेतुमविद्याम् अधिष्ठानयाथात्म्यज्ञानेन निरस्य कृत्यात् विरमेते'ति मायावादिनः, 'एतां व्यष्टिरूपां बुद्धिं क्षेत्रज्ञे समष्टिरूपहिरण्यगर्भात्मनि तं क्षेत्रज्ञं आत्मनि कारणात्मके तं कारणात्मके आत्मनि शुद्धे ब्रह्मणि अवष्टभ्य कृत्यात् विरतः स्या दि'ति पौराणिकंमन्याः इति द्वयमपि प्रमाणविरुद्धत्वादुपेक्षणीयम्। मनश्चेति चशब्देन मनःशब्दवाच्यं रुद्रं, बुद्धिशब्दवाच्यवाणीविरिञ्चलक्ष्मीद्वारा क्षेत्रज्ञे, लयं तत्वानां स्वस्वकारणेषु ब्रूत इति ज्ञातव्यम्। 'उपोऽधिके समीपे चे'ति 'शान्ती प्रशमनकाले' इति च 'मङ्गलं भगवान् विष्णु'रिति च॥ १७॥

एवं उत्क्रान्तो ज्ञानी यं लोकं आप्नोति तमितरलोकेभ्यो व्यावर्तयति- न यत्रेति। यत्र यस्मिन् लोके अनिमिषाणां रुद्रादिदेवानां प्रभुः कालो वायुः न प्रभुः स्वशक्त्युद्बोधकः। 'हरिश्च प्रकृतिश्चैव ब्रह्मवायू तथैव च' इत्यादेः। ये रुद्रादयः देवाः जगतां ईशिरे जगन्ति स्वस्वकार्येषु प्रवर्तयामासुः ते देवाः न प्रभवन्ति। कुतोऽन्यस्यावकाशः? न कुतोऽपीत्यर्थः। यत्र यस्मिन् स्थाने सत्वादिगुणत्रयञ्च स्वशक्तिप्रकाशकं न। विकारो वै भूतेन्द्रियात्मको अहङ्कारश्च न। महान् महत्तत्त्वञ्च न। प्रधानं प्रकृतिश्च न। जरादिलक्षणो वादिका न भवन्तीत्यर्थः॥ १८॥

---

१ तदेकत्वविचिन्तनम् - ख ड। २ अयं ग ड ट ज छ क पाठस्थः। ३ अयं ग क ड पाठः। अन्यत्र बुद्धिशब्दवाच्यां वाणीं विरिञ्चलक्ष्मीद्वारा। ४ अयं ख ड पाठस्थः। अन्यत्र शान्तिः प्रशमनकालेत चेति।
५ अनिमिषां परप्रभुः - ग क ज। अनिमिषः प्रभुः प्रभुः - छ। ६ कारणात्मानं - ड।
७ प्रमाणविधुरत्वाद् - ड। ८ मूले स्तवनम्मरं सुपर्णे शेषरुद्राश्च शक्रः सूर्ययमावपि। अग्निर्यमानुजश्चैव कालशब्देरिताः क्रमात्' इति अधिकः श्लोकः। कोशान्तरेषु न दृश्यते।
९ कुतो विकल्पावकाशः - ज। कुतो वा स विकल्पावकाशः - ख। १० भवन्तीत्यर्थः - छ ट ज ख ड।
११ 'प्रभव इति' - ड।

परं पदं वैष्णवमामनन्ति तद्यन्नेति नेतीत्यतदुत्सिसृक्षवः ।
विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यापुरमुं पदे पदे ॥१९॥

इत्थं मुनिस्तूपरमेद्व्यवस्थितो विज्ञानदृग्वीर्यसुरन्धिताशयः ।
स्वपार्ष्णिनाऽऽपीड्य गुदं ततोऽनिलं स्थानेषु षट्सून्नमयेज्जितक्लमः ॥

---

ननु कालादिसंसर्गाभावात् शशविषाणवन्नास्तीति तत्राह- **परं पदमिति** । तद्वैष्णवं विष्णोः विद्यमानं परं पदं प्राप्तव्योत्तमं लोकं आमनन्ति पठन्तीत्यन्वयः । अनेन यथा कालादिकृतोपद्रवो हरेः नास्ति तथा लोकस्यापीत्युक्तं भवति । यत्सम्बन्धाल्लोकोऽपि तादृङ्महिमा स विष्णुः किं महिमेति तत्राह- **यन्नेति** । वैष्णवमित्यनेन प्रस्तुतो विष्णुः यमित्युच्यते । अतत् तस्माद्ब्रह्मणः इतरत् संसारलक्षणं दुःखं उत्सिसृक्षवः त्यक्तुकामाः विशिष्टाधिकारिणः यं विष्णुं नेति नेति पृथिव्यादिवन्नाकाशादिवच्च न तत्कारणमहदादिवच्च न तदभिमानिवच्च नेत्युपास्य दौरात्म्यं दुरात्मनां आसुरप्रकृतीनां विद्यमानं संसारदुःखं विसृज्य अनन्यसौहृदाः अनन्यभक्ताः हृदा निरतिशयस्नेहलक्षणभक्त्या उपगुह्य पदे पदे मनसा निरन्तरं परिरभ्य अमुं आपुः एवंविधस्य हरेः विद्यमानमिति पूर्वेणान्वयः ।

यद्वा यत्सर्वोत्तमं परमनङ्गलं विष्णुरूपं आप्तवान् तद्रूपमितरेभ्यो व्यावर्तयति- **न यत्रेति** । अतत् तस्मात् ब्रह्मणोन्यत् जगत् उत्सिसृक्षवः त्याजयितुकामाः 'स वा एष आत्मा नेति नेती'त्यादिवेदाः यं नेति नेतीत्यामनन्ति तदित्यन्वयः । वेदानां अचेतनत्वेन बुद्धिपूर्वप्रवृत्त्यसम्भवात् कथं तदुक्तं निर्णेतुं शक्यते इत्यत्राह **विसृज्येति** । वेदोक्तं निर्णीय दौरात्म्यं दुष्टोपास्तिं ऐक्यविषयां विसृज्य पदे पदे अन्वहं हृदोपगुह्य अपरोक्षीकृत्य अनन्यसौहृदाः भूतभवद्भविष्यन्तः अमुं आपुः आप्नुवन्ति आप्स्यन्ति च । अतो युक्तमुक्तमिति ॥ १९ ॥

सम्प्रति ज्ञानिनो देहादुत्क्रमणप्रकारमाह- **इत्थमिति** । तुशब्दः प्रकरणभेदार्थः । इत्थं 'स्थिरं सुखं चासनमि'त्युक्तप्रकारेण मुनिः उपरमेत् उत्क्रान्तो भवेत् । कथम् अत्राह- **व्यवस्थित इति** । देहादुत्क्रमणे व्यवसितो निश्चितबुद्धिः । विज्ञानं आत्मयोग्यज्ञानं स्वबिम्बविषयम् । तदेव दृक् । तस्याः वीर्येण सुष्ठु रन्धितो दग्धः आशयो बाह्यान्तःकरणं यस्य स तथोक्तः । विज्ञानं ब्रह्मेति

नाभ्यां स्थितं हृद्यवरोप्य तस्मादुदानगत्यो रसितं नयेन्मुनिः ।
ततोऽनुसन्धाय धिया मनस्वी स्वतालुमूलं शनकैर्नयेत ॥ २१ ॥

तस्माद् भ्रुवोरन्तरमुन्नयेत निरुद्धसप्ताश्वपथोऽनपेक्षः ॥
स्थित्वा मुहूर्तार्धमकुण्ठदृष्टिर्निर्भिद्य मूर्धन्विसृजेत्परं गतः ॥ २२ ॥

---

श्रुतेः विज्ञानस्य ब्रह्मणो दृशो वीर्येणेति वा । जितक्लमः शरीरग्लानिरहितः प्रथमं स्वपार्ष्णिना गुल्फाधोभागेन गुदं अपानद्वारं आपीड्य ततोऽपानद्वारनिरोधानन्तरं ततो मूलाधारात् चतुर्दलपद्मात् अनिलं उदानवायुं उत्थाप्य नाभिहृदयोरस्तालुमूलभ्रूमध्यमूर्धसु षट्सु स्थानेषु क्रमात् उन्नयेत् ऊर्ध्वं गमयेदित्यन्वयः ॥ २० ॥

सङ्क्षिप्योक्तं विशिनष्टि— नाभ्यामित्यादिना । मुनिः मूलाधारात् चतुर्दलपद्मात् उन्नीय नाभ्यां स्थितषड्दलपद्मे नीतं उदानगत्या ब्रह्मनाड्या हृदि दशदलपद्मे अवरोप्य सन्निवाप्य ततो दशदलपद्मात् तं उरसि द्वादशदलपद्मे नयेत् । मनस्वी मनःसमाधाननिरतः ततो द्वादशदलपद्मात् यथा नाड्यन्तरं न गच्छेत् तथा धिया अनुसन्धाय शनकैः अतन्त्रेणेण स्वतालुमूलं षोडशदलकमलं नयेत ॥ २१ ॥

तस्मात् भ्रुवोः अन्तरं भ्रूमध्यस्थितं द्विदलं कमलं उन्नयेत । तत्रापीतिकर्तव्यतया भाव्यमित्याह— निरुद्धेति । निरुद्धाः सप्तानां अश्वानां कर्णाक्षिनासिकादिसञ्ज्ञानां पन्थानो येन सः तथोक्तः । अनपेक्षः बाह्यसुखानिच्छुः । अत्रापीत्थंभावमाह— स्थित्वेति । मनसा परं गतः भ्रूमध्ये तु मुहूर्तार्धं स्थित्वा मार्गगन्यविशेषेषु अकुण्ठदृष्टिः मूर्धन् मूर्धनि शिरोमध्ये निर्भिद्य विसृजेत् शरीरमिति शेषः । गत इत्यनेन चिन्तनमुच्यते, 'अथैकयोर्ध्व उदानः' 'प्राणापानाविडायाञ्च पिङ्गलायाञ्च वर्ततः । व्यानः सन्धिषु सर्वत्र उदानो ब्रह्मनाडिगः' इति श्रुतिस्मृतिभ्यां उदानगतिः ब्रह्मनाड्यामिति सिद्धम् । 'इत्थं मुनिरि त्यनेन निर्गुणविद्याफलमुक्त्वा स्वपार्ष्णिनेत्यनेन सगुणविद्याविदो देहोत्क्रमणप्रकार उच्यत' इत्येतदनुपपन्नम् । एकवाक्यतया मुख्यार्थे सम्भवति वाक्यभेदायोगादिति ॥ २२ ॥

यदि प्रयास्यत्यथ पारमेष्ठ्यं वैहायसानामुत यद्विहारम् ।
अष्टाधिपत्यं गुणसन्निवाये सहैव गच्छेन्मनसेन्द्रियैश्च ॥ २३ ॥
योगेश्वराणां गतिमामनन्ति बहिस्त्रिलोक्याः पवनान्तरात्मा ।
न कर्मभिस्तां गतिमाप्नुवन्ति विद्यातपोयोगसमाधिभाजाम् ॥

---

एवं देहादुत्क्रान्तानां योगिनां प्राप्यस्थानं गम्यञ्चाह– यदित्यादिश्लोकद्वयेन । अत्र यदि यत् अथ उतेति[2] शब्दाः पुनरावृत्यान्वेतव्याः । तथाहि– यदि सम्यग् पक्वभक्त्यादिसाधनवान् तर्हि अथ उत्क्रमणानन्तरमेव पारमेष्ठ्यं परमेष्ठिनो ब्रह्मणो लोकं प्रयास्यति । तत्रायं किङ्करोतीति तत्राह– अथेति । अथ तल्लोकप्राप्त्यनन्तरं पुनरुत्पत्तिहीनो ब्रह्मसालोक्यमात्रं प्राप्य अथ भक्त्यादिकल्याण-परिपाकोद्योगी[1] वसति । अनन्तरं ब्रह्मप्रलये ब्रह्मणा सह स्वयोग्यां मुक्तिं प्राप्नोतीति शेषः । उतशब्दोऽ-प्यर्थे । यत् यदि तत उत पूर्वोक्तयोगिनोऽपि अपरिपक्वभक्त्यादिकल्याणवान् तर्हि वैहायसानां वैमानि-कानां सिद्धानां विहारं क्रीडास्थानं महर्लोकादि प्रयास्यति । तत्र अस्य योगफलमाह[3]– अष्टाधिपत्य-मिति । अथ महर्लोकादिस्थाने अष्टानां अणिमादियोगानां आधिपत्यं अवाप्य वसति अथ यदि सम्यक् पक्वभक्त्यादिमान् अप्रतीकालम्बनः तर्हि यत्र पवनस्यान्तरात्मा विकुण्ठनाथः तत्र विकुण्ठ नाथलोकेऽमुक्तस्थाने अमुक्तैः देवादिभिरुपलभ्यमानं हरिं प्रयास्यति । यदि प्रतीकालम्बनः तर्हि यत्र पवनश्चासावन्तरात्मा चेति पवनान्तरात्मा वायुः ब्रह्मा च तत्र सत्यलोके वायुं ब्रह्माणञ्च प्रयास्यति । किमुक्तं भवति इति तत्राह– योगेश्वराणामिति । त्रिलोक्याः भूम्यन्तरिक्षस्वर्गसंज्ञायाः बहिः महर्लो-कादौ योगेश्वराणां गतिं आमनन्ति । न त्वर्वाक् । तल्लोकप्राप्तौ साधनविशेषमाह– विद्येति । विद्याऽपरोक्षज्ञानं । तदादिपुरुषार्थसाधनसामग्रीमतां पुंसां तां महर्लोकादिगतिं केवलकर्मभिः नाप्नु-वन्ति । किन्तु अपरोक्षज्ञानेनैव । अत्रायं कश्चन विशेषः । गुणानां सत्वादीनां सन्निवायैः[4] सन्निवासो यत्र सः गुणसन्निवायः । तस्मिन् महर्लोकादिवैकुण्ठामुक्तस्थानाधिके[5] प्रदेशे प्रयास्यन् बाह्येन्द्रिय-मनोभिः सहैव गच्छेत् । आविष्कृतनिजरूपस्यापि तस्य आब्रह्मकल्पलोकपर्यन्तं दग्धपटवत् तेषां स्थित्युक्तेः । पश्चात् ज्ञानादिगुणसन्निवाये[6] मुक्तस्थाने चिन्मात्रेन्द्रियमनोभिः सहैव वसति । तदुक्तं

---

१ पाकाय योगी - ट क छ । २ योग्य - ग छ । ३ अत्र यदि यदथेति - ड ।
४ सन्निवापः - ड । ५ अयं ग ट ड पाठस्थः । मूले वैकुण्ठान्तमुक्तस्थानावधिके
६ सन्निवापे - ड ।

वैश्वानरं याति विहायसा गतः सुषुम्नया ब्रह्मपथेन शोचिषा ।
विधूतकल्कोऽथ हरेरुदस्तात्प्रयाति चक्रं नृप शैंशुमारम् ॥ २५ ॥

योन्तः पचति भूतानां यस्तपत्यण्डमध्यगः ।
सोऽग्निर्वैश्वानरो मार्गो देवानां पितॄणां मुनेः ॥ २६ ॥

---

'चिन्मात्राणीन्द्रियाण्याहुः मुक्तानामन्यदेव तु' इत्यादि । 'ईयुर्लोकान्कर्मणा लोकाञ्ज्ञानेनैव तदुच्चयान् । तत्र मुख्या हरिं यान्ति तदन्ये वायुमेव तु । अपक्वा ये न ते यान्ति वायुं वा हरिमेव वा । स्नानमात्राश्रितास्ते तु पुनर्जनिविवर्जिताः' इति समाख्यावचनबलात् अध्याहारेण व्याख्यातम् । न तु स्वमनीषोत्प्रेक्षाबलादिति । यदि पारमेष्ठ्यादिलोकं प्रयास्यति तर्हि मनसेन्द्रियैः सहैव गच्छेदिति वान्वयः । यत्र योगेश्वराणां गतिं त्रिलोक्याः बहिः आमनन्ति यत्र पवनान्तरात्मा तत्र विद्यादि भाजां तां गतिं कर्मभिः नाप्नुवन्तीति वा ॥ २३ ॥ २४ ॥

तस्य योगिनो मार्गमाह– वैश्वानरमिति । सुषुम्नया नाड्या उत्क्रम्य विहायसा हृदयाकाशेन ब्रह्मपथेन सुषुम्नाख्येन शोचिषा । 'रोचिः शोचिरभीशु'रित्यभिधानम् । गतः निर्गतः अर्चिरादिदेवान् गत्वा अथ वैश्वानरं याति । अथ वैश्वानरप्राप्त्या विधूतकल्कः दग्धपापतृणः ततो वैश्वानरलोकात् उदस्तात् उपरि हरेः शैंशुमारचक्रं शिशुमारस्वरूपं प्रयातीत्यन्वयः । 'वैश्वानरे द्युनद्यां वा सूर्ये वा देह एव वा । विधूय सर्वपापानि यान्ति विस्तुंभकेशवं' इत्येतत् अथेति सूचितम् ॥ २५ ॥

वैश्वानरो नाम क इत्यत्राह– य इति । यो भूतानां अन्तः कोष्ठगाग्नौ स्थित्वा तद्भुक्तं चतुर्विधमन्नं पचति । यश्च ब्रह्माण्डमध्यगः स्वपुरमध्यगः तपति प्रकाशते । सः प्रधानवह्निः वैश्वानराख्यः ब्रह्मदेवपितृलोकगन्तुः मुनेः योगिनः कर्मयोगिनश्च गन्तव्यत्वात् मार्ग इतीरित इत्यन्वयः । 'पितृयानं देवयानं ब्रह्मयानमिति त्रिधा । गच्छन्वैश्वानरं याति तस्मान्मार्गः स ईरितः' इति च । देव-

---

१ जाति - ज । २ इत्यादीति ङ पाठः । अन्यत्र - इतीति ।
३ सुषुम्नया सुषुम्नाख्येन शोचिषा-ङ । सुषुम्नया सुषुम्नाख्यशोचिषा-ञ छ ज ट ड । सुषुम्नाख्ययाशोचिषा-क ।
४ रोचिःशोचिरभीशुवम् - ज ख रोचिः शोचिरभ इत्याधभिधानं - क ।
५ शैशुमारेति मूले टीकायां च - क छ पाठः । ६ किं स्तुभ - ख । ७ पितॄणां - क न ।
८ कोष्ठाग्नौ - ग । कोष्ठकाग्नौ - ट छ । कोष्ठमग्नौ - ङ । ९ पितृयानं - ख ।
१० ईरित इति चेति - ख ज ङ ट छ ड पाठः अन्यत्र नास्ति ।

देवयानं पिङ्गलाभिरहान्येति शतायुषा ।
रात्रीरिडाभिः पितृणां विषुवत्त्वां सुषुम्नया ॥ २७ ॥

तद्विश्वनाभिं त्वभिपद्य विष्णोरणीयसा विरजेनात्मनैकम् ।
नमस्कृतं ब्रह्मविदामुपैति कल्पायुषो यद्विबुधा रमन्ते ॥ २८ ॥

---

दानेन गन्तॄणां वैश्वानरादर्वाक् अर्चिरादयो गन्याः सन्ति । तत्र ब्रह्मदेवपितृलोकगन्तृभिः सर्वैरपि वैश्वानरः प्राप्यत इति द्योतनाय 'वैश्वानरं याति'ति प्रथमत एव वैश्वानरप्राप्तिकथनमिति ज्ञातव्यम् ॥ २६ ॥

के तर्हि त इति तत्राह— देवयानमिति । पिङ्गलाभिः शरीरदक्षिणपार्श्वस्थपिङ्गलाख्यनाडीभिः शतायुषा मरणेनोत्क्रमणात्[2] अहानि अहःसञ्ज्ञं देवयानं एति । इडाभिः[3] देहवामपार्श्वस्थेडाख्य-नाडीभिः । शतायुषा मरणेनोत्क्रमणात् रात्रीः रात्रिसञ्ज्ञं पितॄणां यानं एति । देवयानपितृयानमार्ग-स्थानां अहरादिकालाभिमानिनीनां देवतानां प्राचुर्यात् अहानि रात्रीरिति बहुवचनम् । 'दक्षिणाः पिङ्गलाः सर्वाः इडा वामाः प्रकीर्तिताः । नाड्योऽथ मध्यमाः[4] प्रोक्ताः सुषुम्ना वेदपारगैरि'ति । 'देव-यानस्य मार्गस्थाः अहःशब्दाभिसञ्ज्ञिताः । पितृयानस्य मार्गस्था रात्रिशब्दाह्वया मता' इति च । पिङ्गलेडामध्यस्थया[5] सुषुम्नया नाड्या शतायुषा विशिष्टसुखवत्वात् विषुवत्त्वाख्यं ब्रह्मयानमेति । विशिष्टं सुखं विषु । तदस्यास्तीति विषुवत् । तस्य भावः विषुवत्त्वा ताम् । सषयोरभेदात् वात्युपसर्गयोगाद्वा सकारस्य षकारः । 'विषुवत्ता ब्रह्मयानं विशेषेण सुखं यतः' इति । रागोपरक्तसुखादिदातृत्वात् पिङ्गलादेः देवयानादिशब्दवाच्यत्वम् । तदुक्तं— 'पिङ्गला देवयानं स्यात्पिङ्गाख्यसुखदं[6] यतः । इडान्न-दानात्पितॄणामेवं मार्गाः प्रकीर्तिताः' इति । अत्र देवयानब्रह्मयानभेदोऽवान्तरोऽवगन्तव्यः ॥ २७ ॥

अधुना शिशुमारलोकादुपरितनमार्गप्रकारमाह— तदिति । शैशुमारमित्यनेन यद्रूपमुक्तं विष्णोः तद्विश्वनाभिं विश्वाधाररूपं अभिपद्य[7] प्रतिपद्य तुशब्दसूचितां तदनुज्ञामादाय विरजेन विगत-रागादिदोषेण अणीयसा सूक्ष्मतरेण आत्मना स्वरूपेण सर्वोऽपि ब्रह्मज्ञानिजनः तं ब्रह्मलोकं[8] उपैति ।

---

१ अयं ग छ ट पाठस्थः ।

२ मरणाख्योत्क्रमणेन - ख ज । मरणोत्क्रमणात् - ग छ । मरणोत्क्रमणेन - ट । मरणाख्योत्क्रमणात् - क ।

३ वामाभिः इडाभिः - ख । ४ मध्यदा - ग ड । ५ ब्रह्मयानो - ट ग छ ख ज ।

६ सुखदा - क ख । ७ अयं ज पाठः । अन्यत्र नास्ति । ८ अयं ज पाठः । अन्यत्र नास्ति ।

अथो अनन्तस्य मुखानलेन दन्दह्यमानं स निरीक्ष्य विश्वम् ।
निर्याति सिद्धेश्वरजुष्टधिष्ण्यं यद्द्वैपरार्ध्यं तदु पारमेष्ठ्यम् ॥२९॥

न यत्र शोको न जरा न मृत्युर्नार्तिर्न चोद्वेग ऋते कुतश्चित् ।
यच्चित्ततोदः क्रिययाऽनिदंविदां दुरन्तदुःखप्रभवानुदर्शनात् ॥

---

तं विशिनष्टि– कल्पायुष इति । कल्पायुषः विबुधाः यत् यत्र रमन्ते क्रीडन्ति तमिति शेषः । किंविशिष्टं रूपं– ब्रह्मविदां समुदायेन नमस्कृतं एकं मुख्यं केवलमिति वा । 'मन्वन्तरायुषः स्वर्ग्या महर्लोके तु कालिका' इति । पिङ्गलामतिक्रम्य देवयानेन गतः परान्ते ब्रह्म प्रयास्यन् तत्र महर्लोके अष्टाधिपत्यमित्युक्ताणिमाद्यैश्वर्यशाली वसति । कश्चन जनलोके कश्चन तपोलोके ज्ञानादिपरिपाकाय आन्ते । कश्चित् सत्यलोके हर्याज्ञया वसति । ब्रह्मयानेन गताः अप्रतीकालम्बनाः प्रतीकालम्बनाश्च शिंशुमारहरिणा अनुज्ञाताः तद्दैवानिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवाः प्राप्य दिवमर्ति वायुं प्राप्य तेन कार्यं ब्रह्म प्रापिताः तदुपदेशं प्राप्य प्रतीकोपासकाः निवसन्ति । अन्ये तु तेन वायुना परं ब्रह्म प्रापिताः तल्लोके निवसन्ति इत्यादिविशेषः तुशब्देन सूचित इति ज्ञातव्यम् ॥ २८ ॥

महर्लोकादिषु विहरतां तथा ज्ञानादिसाधनपरिपाकाय च निवसतां चतुर्मुखप्राप्तिप्रकारमाह– अथो इति । महर्लोकादिषु वसन् सः ज्ञानिसङ्घः अथो द्विपरार्धावसाने ब्रह्मप्रलये ब्रह्मणा सह मुक्तिं यास्यन् सिद्धेश्वरैः[1] सनकादिभिः जुष्टस्य चतुर्मुखस्य धिष्ण्यं निवासस्थानं यत् द्वैपरार्ध्यं द्वयोः परार्धयोः सम्बन्धि । चतुर्मुखस्य आयुषः परेति नाम । चतुर्मुखायुर्लक्षणशतसंवत्सरभोग्यमित्यर्थः । तत्पारमेष्ठ्यं निर्याति । महर्लोकादेः निर्गत्य सत्यलोकमाप्नोतीत्यर्थः । गन्तुं हेतुमाह– अनन्तस्येति । अनन्तस्य भगवतः मुखानलेन मुखान्निर्गताग्निना पुनः पुनः दह्यमानं विश्वं निरीक्ष्य सङ्कर्षणमुखाग्निना प्रपञ्चस्य दाहो हेतुरित्यर्थः । उशब्दो ब्रह्मलोकं प्राप्य तेनैव सह मुक्तिं प्राप्नोतीत्यस्मिन्नर्थे[3] वर्तते ॥२९॥

सत्यलोकस्य इतरलोकेभ्यो वैशिष्ट्यमाह– न यत्रेति । यत्र स्थाने सत्यलोके शोकादयो न सन्ति । 'आर्तिस्तु व्यसने चित्ते दुःखेऽधिष्ठानबन्धयोरि'ति व्यसनं आर्तिरित्युच्यते । यत्र अनिदंविदां अब्रह्मविदां क्रियया दुःखस्य प्रभवस्य जननादिलक्षणस्य च अनुदर्शनात् जनस्य यश्चित्ततोदः सोऽपि

---

१ संकर्षणादिर्भवान् - क छ ज । संकर्षणवान्तर्भवान् - ग ज । संकर्षणान्तर्भवान् - ढ ।
२ लोकैः - क ख ज ग ट छ ढ । ३ मुक्तिमाप्नोतीत्येवमस्मिन्नर्थे - ढ ।

ततो विशेषं प्रतिपद्य निर्भयस्तेनात्मनाऽपोऽनलमूर्ध्नि च त्वरन् ।
ज्योतिर्मयो वायुमुपेत्य काले वाय्वात्मना खं बृहदात्मलिङ्गम् ॥

---

नास्ति तं सत्यलोकमाप्नोतीति पूर्वेणान्वयः । जनादिलोकापेक्षया सत्यलोकस्य वैशिष्ट्यं । न तु मुक्ति[1]-विशेषात् । तदुक्तं— 'सर्वदुःखविहीना ये मुक्ताः प्रायस्तु तादृशाः । अमुक्तास्तु[3] जनाद्येषु विशेषेण तु सत्यगाः' इति । ननु यदि ब्रह्मणा सहैव मुक्तिः सर्वेषां तर्हि ततः पूर्वं नायासेन साधनसामग्री-सम्पादनं व्यर्थं इति चेन्न योग्यतावाहुविध्यात् मुक्तिप्राप्तेरपि वाहुविध्यात् । तदुक्तं 'विष्णोर्लोके तदै-वैके यान्ति कालान्तरे परे । आज्ञयैव हरेः केचिदपूर्तेः केचिदञ्जसा । विहत्यैवान्यलोकेषु मुच्यन्ते ब्रह्मणा सह' इति[2] ॥ ३० ॥

एवं देवयानेन गत्वा सत्यलोके परब्रह्मलोके च स्थितानां ज्ञानिनां मोक्षं वक्तुं देवमुक्तिप्रकारमाह— तत इति । प्रतीकालम्बनाप्रतीकालम्बनसंज्ञः सः ज्ञानिसङ्घः ब्रह्मप्रलये स्वबिम्बं प्रविष्टो गरुडशेषलक्षण-मार्गद्वयेन वाणीं प्रविश्य तया भौतिकशरीरं ब्रह्माणं प्रविश्य ततः तेन ब्रह्मणा सह विशेषं पृथिवीं प्रतिपद्य तेन पृथिव्यात्मना सह अपः प्रतिपद्य तेनाबात्मना अनलमूर्ध्नि प्रतिपद्य तेन ज्योतिर्मयः कान्ति-प्रधानो भूत्वा वायुं उपेत्य मुक्तिकाले तेन वाय्वात्मना आत्मनः हरेर्लिङ्गं आकाशवद्व्याप्तं नित्यत्वेनेति बृहत् महत् खं प्रविशतीत्यन्वयः । निर्भयः संसारभयान्मुक्तः । अत एव त्वरन् त्वरमाणः । प्रलय-कालीनमार्गत्वात् । अत्रेदं तात्पर्यं चशब्दादवगन्तव्यम् । तथाहि— विशेषाख्याण्डे स्थिते[4] विशेष-नाम्नि विरिञ्चे स्थितं वैराजाख्यं हरिं पुनः तद्द्विगुणाण्डकटाहात्मकविशेषाख्यपृथिव्यां स्थिते विरिञ्चे स्थितं अन्ननामानं हरिं तेन अन्ननाम्ना हरिणा अप्सु स्थिते चतुर्मुखे स्थितं अन्नाख्यं हरिं तेनान्नेन विष्णुना तेजोगतविरिञ्चस्थं प्राणनामानं हरिं तेनाग्निगतेन हरिणा वायुस्थितचतुराननस्थितं प्राणाख्यं प्राप्य तेन वायुस्थितविरिञ्चान्तर्यामिणा आकाशस्थितविरिञ्चस्थं प्राणाख्यहरिं प्रविशतीति । पृथिव्या-दिकार्याणां स्वस्वकारणेषु अव्यादिप्रधानान्तेषु लयः । तदभिमानिदेवताशरीराणाञ्च । तत्र विरिञ्च-केशवयोः तत्तत्पदार्थस्थितस्वस्वरूपैरेकीभावो दीपानां दीपान्तरैरिव । अन्येषां द्वारमात्रमिति । 'ज्ञानिनः प्रळये सर्वे ब्रह्मणा सह पार्थिवम् । भूम्यन्तगानन्ननामानं प्राणमन्नद्यादिसंस्थितमि'त्यादिवाक्यद्वयेन चशब्दगृहीतेन निष्प्रमाणमिति शङ्का निरस्तेति ज्ञातव्यम् ॥ २१ ॥

---

१ मुक्तिविशेषात् - ग छ क । २ इति वाक्ये - ज । ३ अमुक्ताश्च - ड ।
४ स्वव्यवस्थितं - कोशान्तरेषु सर्वत्र । ड कोशे स्थिते इत्येव ।

घ्राणेन गन्धं रसनेन वै रसं रूपन्तु दृष्ट्या स्पर्शं त्वचैव ।
श्रोत्रेण चोपेत्य नभोगुणन्त्वप्रायेण नावृत्तिमुपैति योगी ॥ ३२ ॥

स भूतसूक्ष्मेन्द्रियसन्निकर्षात् सनातनोऽसौ भगवाननादिः ।
मनोमयं देवमयं विकार्यं संसाद्य मत्या सह तेन याति ॥ ३३ ॥

विज्ञानतत्त्वं गुणसन्निरोधं तेनात्मनात्मानमुपैति शान्तिम् ।
आनन्दमानन्दमयोऽवसाने सर्वात्मके ब्रह्मणि वासुदेवे ॥ ३४ ॥

---

इदानीं पञ्चतन्मात्राप्रलयप्रकारमाह— घ्राणेनेति । घ्राणेन्द्रियाद्यधिष्ठातृविरिञ्चस्थेन हरिणा गन्धतन्मात्राद्यधिष्ठातृविरिञ्चस्थितं हरिं उपेत्य योगी पुनरावृत्तिं नोपैतीत्यन्वयः । तत्र वाय्वादीनां पुनरावृत्तिसद्भावात् प्रायेणेत्युक्तम् । यद्वा एवमुक्तवक्ष्यमाणप्रकारेण मुक्तानां तेषां ज्ञानिनां भोगप्रकार-माह— घ्राणेनेति । एवं मुक्तः[2] केवलचिदानन्दैकदेहो[5] योगी स ज्ञानिसङ्घः तादृशैः इन्द्रियैः घ्राणा-दिभिः अत्युत्तमान् गन्धादीन् पञ्चविषयान् उपेत्य श्वेतद्वीपादिस्थानेष्वाश्रित प्रलयेऽपि न पुनरावृत्ति-मुपैतीत्यन्वयः । वा इत्यनेन 'पञ्चेन्द्रियैर्ये विषयाः एष्टव्याः[3] सर्वतो वराः' इत्यादिमानसिद्धं[4] द्योतयति । इयमेव मुक्तिः नाद्वैतवादिकथितेत्येवशब्दः । तुना 'मग्नस्य हि परेऽज्ञाने किम्न दुःखतरं भवेदि'ति मानं सूचयति ॥ ३२ ॥

उक्तमुक्तिशेषमाह— स इति । भूतसूक्ष्मेन्द्रियसन्निकर्षात् भूतसूक्ष्मैः पञ्चभूतैः शब्दादि-तन्मात्राभिः तथा भूतसूक्ष्मैः जीवराशिभिश्च इन्द्रियैश्च तदभिमानिभिश्च सहितः अनादिः सनातनः सोऽसौ भगवान् विकार्यं विविधकार्ययुक्तं देवमयं देवप्रधानं मनोमयं मनस्तत्त्वाभिमान्येन्द्रस्थितविरिञ्चगत-मानसनामानं स्वात्मानं याति इत्यन्वयः । नातेन[6] नादेन सहितत्वात् सनातनः । 'नादेन तेन महता सनातन इति स्मृत' इति । 'मनःस्थितो हरिर्नित्यं सर्वदेवेषु संस्थितः । देवप्रधानकान् लोकान् करोत्यनुगतः सदे'ति च । योऽसावनादिर्मनोमयः विष्णुः तं यातीति वा । उभयथापि तस्यैव गन्तृत्वं

---

१ घ्राणेन्द्रियाद्यधिष्ठित .... - ग क छ ङ । २ एवमुक्तः - अन्यत्र कोशेषु । ३ द्रष्टव्याः - क ।
४ इत्यादि मानसिद्धि - क ग ख ज ङ । ५ केवलचिदानन्दात्मकदेहो - ङ । ६ नातनेन क ।

एतां गतिं भागवतो गतो यः स वै पुनर्नेह विषज्जतेऽङ्ग ।
एते सृती ते नृप वेदगीते त्वयाभिपृष्टेऽथ सनातने च ॥
ये वै पुरा ब्रह्मण आह पृष्टः आराधितो भगवान्वासुदेवः ॥ ३५ ॥

---

गम्यत्वञ्च[1] ज्ञातव्यम् । मनःस्थं मानमनानानं[2] स्वात्मानं संसाय स हरिः उमाश्रितविरिञ्चिस्थितत्वान्न-द्वारा मतिशब्दवाच्यं अहङ्कारगतवाणीस्थविरिञ्चिस्थं स्वात्मानं याति । मत्या मतिस्थेन तेन मनःस्थेन च सह । विज्ञानतत्वं विज्ञाननामानं विज्ञानतत्वाख्यवाणीगतविरिञ्चिस्थं स्वात्मानं याति । तेन विज्ञान-तत्वगतेन हरिणा गुणसञ्ज्ञितेवं सत्वादिगुणविधुरं सर्वमूलकारणमहत्तत्वाख्यविरिञ्चिगतं विज्ञाननामानं आत्मानं याति । एवं सर्वान्तर्यामिरूपैरेकीभूतः सः महत्तत्वान्तर्यामी विज्ञाननामा हरिः तेनात्मना विरिञ्चेन सह शान्ति[3] चित्प्रकृतिस्थितं आनन्दनामानं स्वात्मानं[4] याति । सः आनन्दमयः पूर्णानन्दः आनन्दनामा महत्तत्वगतो विष्णुः श्रियानुज्ञातं ब्रह्माणमादाय अवसाने द्विपरार्धावसाने सर्वात्मके सर्वा-न्तर्यामिणि गुणबृंहिते परिपूर्णगुणे ब्रह्मणि वासुदेवे वासुदेवाख्ये विहरति । जीवसङ्घस्तु स्वस्व-योग्यतानुसारेण बृंहितत्वात्[5] ब्रह्माख्ये स्वमूलरूपे विहरतीति शेषः । इत्येषां[6] देवानां मुक्तिरिति भावः । एवं स्वस्वबिम्बद्वारेण हरिं प्रविष्टानां मुक्तानां पुनरावृत्तिर्नास्तीत्याह— वासुदेव इति ॥ ३३ ॥ ३४ ॥

यो भागवतः आत्यन्तिकभक्तः वासुदेवे एतां सायुज्याख्यां गतिं मुक्तिं गतः सः ब्रह्मादिलक्षः पुनः इह संसारे न विषज्जते । सामान्यविषयो वा इत्यन्वयः[7] । वैशब्देन नानन्दसङ्करः नापि[8] ब्रह्मणा परमात्मनैक्यं समुद्रे प्रविष्टनदीवदित्यादि दर्शयति । ननु इतः आनन्दातिशये, नेह विषज्जते । इति इदं युक्तं । तदभावे प्रशंसामात्रमिदं किं न स्यात् इत्येतच्चोद्यं 'वासुदेवाश्रिता देवाः ब्रह्माद्या मुक्त-बन्धना' इत्यादिना परिहर्तव्यम् । उपसंहरति— एते इति । पुरा चतुर्मुखेनाराधितः पृष्टः वासुदेवः भगवान् ये द्वे सृती[10] ब्रह्मणे आह ते एते सृती मया ते कथिते इत्यन्वयः । वक्तव्यत्वे हेतुमाह—

---

१ ख ज ड कोशेषु गम्यत्वमिति नास्ति । २ मानमविरिञ्चिस्थं इत्यधिकः पाठः - ग छ ञ ट ।
३ शान्तं - ख ड । ४ हरिं - क ५ बृंहितत्वाच्च - क ग छ ञ ड ।
६ इत्येषां - ग ट ञ ण ज । ७ ङ ख ज पाठोऽयं । अन्यत्र नास्ति ।
८ संसारविषयो नेत्यन्वयः - क । ९ आनन्दसङ्करेणापि - ड कोशं विना कोशान्तरेषु सर्वत्र । ङकोशे मूलभूतः पाठः । १० एतदनन्तरं मार्गौ इत्यधिकः पाठः - ग ।

नह्यतोऽन्यः शिवः पन्थाः विश्रुतः संसृताविह ।
वासुदेवे भगवति भक्तियोगो यतो भवेत् ॥ ३६ ॥

भगवान्ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया ।
तद्धि ह्यपश्यत्कूटस्थे रतिरात्मन्यतो भवेत् ॥ ३७ ॥

भगवान्सर्वभूतेषु लक्षितश्चात्मना हरिः ।
दृश्यैर्बुध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः ॥ ३८ ॥

---

**त्वयेति** । तत्रापि निमित्तमाह– **वेदेति** । अथेत्यनेन 'अथ येऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसम्भवन्ति' इत्यादि वेदं सूचयति । वेदगीतत्वेऽप्यश्रद्धेयत्वेन हेयत्वं दृष्टमत्राह– **सनातने इति** नित्यस्थितिहेतुत्वादित्यर्थः ॥ ३५ ॥

अतोऽत्र निःश्रेयसार्थिभिः श्रीभागवतमेवाभ्यसनीयमिति भावेनाह– **न हीति** । इह संसृतौ अतः भागवताख्यात् ग्रन्थात् विश्रुतः शिवः पन्था नास्ति । सज्जनकरुणया भगवतोक्तत्वादिति शेषः । हेत्वन्तरमाह– **वासुदेव इति** ॥ ३६ ॥

'एकस्य प्रतिनार्मात्तु[1] कृतकाम विशिष्यते' इत्यतः आप्तिमूलत्वेन तदुक्तं प्रमाणमेवेत्याह– **भगवानिति** । हि यस्मात्[2] भगवान् त्रिः त्रिवारं ब्रह्म वेदं अन्वीक्ष्य आलोच्य यतो ग्रन्थात् अभ्यस्तात् आत्मन् आत्मनि कूटस्थे निर्विकारे हरौ भक्तिलक्षणा रतिर्भवेत् तैर्भागवतं[3] पुराणमपश्यदित्यन्वयः । द्वितीय[4]हिशब्देन 'नित्यज्ञानेन सिद्धश्च पुनः पुनरवेक्ष्यते' इत्यादिकं सूचयति ॥ ३७ ॥

उत्तमाधिकारिणां वेदादिना भगवत्सद्भावे सिद्धेऽप्यितरेषां तदस्तित्वं कथमवगन्तुं शक्यं इत्याशङ्क्याह– **भगवानिति** । इतोऽपि इदमेव निःश्रेयसहेतुत्वात् श्रवणादिनाभ्यसनीयमित्यतो वाह– **भगवानिति** । द्रष्टा साक्षी भगवान् अनुमापकैः निश्चयज्ञानजनकैः दृश्यैः हरेः सर्वेत्वात्म्यादिना

---

१ अयं ङ पाठः । अन्यत्र प्रतिमानमिति ।

२ हि यस्मादिति क ख ज कोशेषु नास्ति । ३ एतद् - ग छ ट ।

४ द्वितीय - ङ क ग ज कोशेषु नास्ति । एवं च मूलश्लोके हिशब्दद्वयं टीका मूलकोशानुसारेण ज्ञेयं । तद्धि ह्यपश्यत् इति ङ कोशे तद्वयपश्यद्धि इति ज ग कोशे मूलश्लोकपाठः । क ज कोशस्थटीकापाठानुरोधेन तु एक एव हिशब्दः । तदपश्यत् इति च कोशेऽस्ति । एतद्व्यपश्यदिति च छकोशे । एतच्छब्दघटितव्याख्या पाठानुसारी । तदपश्यत्यदिति मद्गुरुपाठानुसारिपाठः हिशब्दरहितोऽन्योऽप्यस्ति ङ कोशे ।

तस्मात्सर्वात्मना राजन्हरिः सर्वत्र सर्वदा ।
श्रोतव्यो कीर्तितव्यश्च स्मर्तव्यो भगवान्नृणाम् ॥ ३९ ॥

पिबन्ति ये भगवत आत्मनः सतां
कथामृतं श्रवणपुटेषु सम्भृतम् ।
पुनन्ति ते विषयविदूषिताशयं
व्रजन्ति तच्चरणसरोरुहान्तिकम् ॥ ४० ॥

॥ इति श्रीमद्भागवते द्वितीयस्कन्धे द्वितीयोऽध्यायः ॥

---

ब्रह्मादिजीवराशेः अस्वातन्त्र्यादिना च प्रमाणेन गृहीतव्याप्तिकैर्बुद्ध्यादिभिर्लक्षणैः लिङ्गैः सर्वभूतेषु नियामकत्वेन स्थित इति आत्मना जीवेन अस्मिन् पुराणे लक्षितः ज्ञातः इत्यतः तदस्तित्वे सिद्धे तेन प्रोक्तत्वात् वेदमूलत्वेन आप्तिमूलत्वाच्च इदमवश्यमभ्यसनीयमित्यायातमिति भावः । इदं बुध्येयं[1], नेदमित्यत्र बुद्ध्यादीनां पारवश्यदर्शनात् अन्यो नियन्ता अस्तीत्यस्य स्वानुभवसिद्धत्वात् स चान्यो हरिरेवेत्यस्यावधारणायां चशब्दः । तदुक्तं– 'सनाभावत्समाधौ च निःस्वतन्त्रस्य देहिनः' इत्यादि ॥ ३८ ॥

उक्तमुपसंहरति– तस्मादिति । यस्मात् सर्वज्ञेन व्यासेनैष नारायण एव वेदवेद्येषु सर्वोत्तमत्वेन द्रष्टव्यत्वेनोक्तः तस्मात् स एव श्रोतव्यादिः ॥ ३९ ॥

श्रवणादिफलमाह– पिबन्तीति । सतां सकाशात् श्रवणपुटेषु सम्भृतं संपूरितम् । विषयैः विशेषेण दूषितम् ॥ ४० ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
द्वितीयस्कन्धे द्वितीयोऽध्यायः ॥

* * *

---

१ इदं तु ध्येयम् - ग । इदं बुद्धयैव नेदमित्यत्र - ट ज ।

## ॥ अथ तृतीयोऽध्यायः ॥

श्रीशुक उवाच —

एवमेतन्निगदितं पृष्टवान्यद्भवान्मम ।
नृणां यन्म्रियमाणानां मनुष्येषु मनीषिणाम् ॥ १ ॥

ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणस्पतिम् ।
इन्द्रमिन्द्रियकामस्तु प्रजाकामः प्रजापतीन् ॥ २ ॥

देवीं मायान्तु श्रीकामस्तेजस्कामो विभावसुम् ।
वसुकामो वसून्रुद्रान्वीर्यकामस्तु वीर्यवान् ॥ ३ ॥

---

## ॥ अथ तृतीयोऽध्यायः ॥

हरेः श्रवणादिजनितभगवद्भक्तिरेवापेक्षिताशेषपुरुषार्थसाधनम् । नान्यत्[1] । अन्यदेवतायागादिकं प्रातिस्विकफलदम् । तदपि हर्यैकायत्तमित्येतदस्मिन्नध्याये निरूप्यते । तत्र प्रथमतो वृत्तमनुवदति– एवमिति । भवान् मनुष्येषु मध्ये म्रियमाणानां मनीषिणां नृणां यत् कर्तव्यत्वेन मम सकाशे पृष्टवान् तदेतदेव निगदितम् । यद्वा मनुष्येषु म्रियमाणानां नृणां यत्कर्तव्यत्वेन मनीषिणां मतं पृष्टवानेतत् इति ॥ १ ॥

इदानीं प्रातिस्विकफलप्रदयागप्रकारमाह– ब्रह्मेति । ब्रह्मवर्चसकामः वृत्ताध्ययनसम्पत्कामः शिष्यप्रशिष्यादिषु वेदप्रणेतृत्वेन ब्रह्मणस्पतिं वेदस्य पतिं बृहस्पतिं । बृहजातिजीवकमलासनशक्रराशिष्वित्यभिधानात्[2] । यजेत तत्तत्तन्त्रोक्त[3]तद्द्रव्यैरिति शेषः । तुना ब्रह्मार्पण[4]बुद्धिं सूचयति । इन्द्रियकामः चक्षुरादीन्द्रियपाटवकामः शुक्लस्तम्भनकामो वा । प्रजाकामः पुत्र[5]कामः । 'प्रजा तु जन पुत्रयोरि'ति यादवः । प्रजापतीन् कश्यपादीन् ॥ २ ॥

मायां देवीं लक्ष्मीम् । विभावसुं अग्निम् । 'तेजो बले प्रभावेऽग्नौ ज्योतिष्यर्चिषि रेतसीति च' । वसुकामः हिरण्यकामः । वीर्यकामः 'वीर्यं पराक्रमे तेजस्यत्नमाहात्म्ययोरपी'ति च[6] ॥ ३ ॥

---

१ 'नान्यत् । अन्य' इति स्थाने 'नान्य' - इति ट । २ अयं ज पाठः । अन्यत्र - 'इति धातोश्चे'ति ।
३ वेद तत्तन्त्रोक्त - ज । ४ ब्रह्मणि बुद्धि - क ग छ ट ण । ५ अयं ज पाठः । प्रजननकामः - ग । अन्यत्र - जनकामः । ६ प्रजा तु जनपुत्रयोरिति यादवकोशसमुच्चयार्थः चकारः । उत्तरत्रापि वीर्यं पराक्रमे इत्यत्र चकार एवमर्थः । ७ रेतस्यग्नि - ख ज ।

अन्नाद्यकामस्त्वदितिं स्वर्गकामोऽदितेः सुतान् ।
विश्वान्देवान्राष्ट्रकामः साध्यान्संसाधको विशाम् ॥ ४ ॥

आयुष्कामोऽश्विनौ देवौ पुष्टिकाम इलां यजेत् ।
प्रतिष्ठाकामः पुरुषो रोदसी लोकमातरौ ॥ ५ ॥

रूपाभिकामो गन्धर्वान् स्त्रीकामोऽप्सरउर्वशीम् ।
आधिपत्यकामः सर्वेषां यजेत परमेष्ठिनम् ॥ ६ ॥

यज्ञं यजेद्यशस्कामः कोशकामः प्रचेतसम् ।
विद्याकामस्तु गिरिशं दाम्पत्यार्थ उमां सतीम् ॥ ७ ॥

धर्मार्थमुत्तमश्लोकं तन्तुं तन्वन्पितॄन्यजेत् ।
रक्षाकामः पुण्यजनानोजस्कामो मरुद्गणान् ॥ ८ ॥

---

विशां वैश्यानाम् ॥ ४ ॥

इलां भूमिम् । प्रतिष्ठाकामः स्वस्थानादभ्रंशेच्छुः । लोकमातरौ लोकस्य मातापितरौ । माता पृथिवी । पिता [1]द्यौः । 'मधु द्यौरस्तु नः पिते'ति श्रुतिः ॥ ५ ॥

अप्सराश्चासावुर्वशी चेत्यप्सरउर्वशी । तां परमेष्ठिनं चतुर्मुखम् ॥ ६ ॥

यज्ञं इन्द्रम् । फलभेदान्न पुनरुक्तिः । कोशकामः निधिकामः । प्रचेतसं वरुणम् । गिरिशं दक्षिणामूर्तिधरम् । दाम्पत्यार्थे अखण्डितदाम्पत्याय ॥ ७ ॥

धर्मार्थमक्षय्यपुण्यफलार्थं उत्तमश्लोकं विष्णुम् । 'अकामो धर्मकामो वा मोक्षकामोऽपि यो भवेत् । अथवा सर्वकामो यः स विष्णुं पुरुषं यजेदि'त्यनेन विष्णुरेवोत्तमश्लोक इति निश्चीयते । 'अकामः पुरुषं पुमानि'त्यत्रापि पुरुषो विष्णुरेव । अस्मादुक्तप्रमाणात् । तन्तुं सन्तत्यविच्छेदम् । तन्वन् विततं कुर्वन् । पुण्यजनान् यक्षान् मणिभद्र[2]ादीन् ॥ ८ ॥

---

१ अयं ज पाठः । अन्यत्र पृथिवी माता द्यौः पितेति । २ मणिमन्यादीन्- ट ।

राज्यकामो मनून्देवान्निर्ऋतिन्त्वभिचरन्यजेत् ।
कामकामः यजेत्सोममकामः पुरुषं पुमान् ॥ ९ ॥

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥ १० ॥

एतावानेव यजतामिह निःश्रेयसोदयः ।
भगवत्यचलो भावो यद्भागवतसङ्गतः ॥ ११ ॥

ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्र-
मात्मप्रसाद उभयत्र गुणेष्वसङ्गः ।
कैवल्यसम्भृतपथस्त्वथ भक्तियोगः
को निर्वृतो हरिकथासु रतिं न कुर्यात् ॥ १२ ॥

---

अभिचरन् परोपद्रवकर्म कुर्वन् । निर्ऋतिं कोणदिक्पतिम् । सोमं चन्द्रम् । अकामः निषिद्ध-कामरहितः पुरुषं पूर्णषड्गुणम् ॥ ९ ॥

अकामः भगवत्प्रसादमन्तरेणान्यत्राकामः सर्वकामः उक्तसर्वकामः अन्यदेवतायजनमनिच्छन्[1] परं पुरुषं यजेत । विष्णुभजने साधनमाह- तीव्रेणेति ॥ १० ॥

काम्यानुष्ठानस्य यथा मुक्तिसाधनता स्यात् तं प्रकारमाह- एतावानिति । इह कर्मभूमौ यजतां काम्यानुष्ठानं कुर्वतां निःश्रेयसोदयः एतावान् भागवतानां सङ्गतः सेवालक्षणात् भगवति हरौ अचलो भावो भक्तिलक्षण इति यत् स इति ॥ ११ ॥

भागवतसङ्गादचलो भावः कथं स्यात् इत्याशङ्क्य तेषां सदसि प्रसक्तानां हरिकथामृतानां श्रवण-लक्षणपानादिना प्रसन्नान्तःकरणस्य पुंसः हरेरितरत्र विरक्तस्य ज्ञानसाधनं भगवत्यचला भक्तिः तया ज्ञानं भविष्यतीत्याह[2]- ज्ञानमिति । यदा सत्सभासु प्रसक्ताभिः श्रुताभिः याभिः हरिकथाभिः पुंसः आत्मप्रसादः मनसः प्रसन्नता नैर्मल्यलक्षणा तदा उभयत्र इह परत्र च स्वर्गादौ गुणेषु विषयेषु असङ्गः फलस्नेहराहित्यलक्षणवैराग्यं भवति । अथ भक्तिसाधनवैराग्यजन्मानन्तरं कैवल्यसम्भृतपथः सम्यक् सम्पादितमोक्षमार्गः भक्तियोगो जायते । तुशब्दात्तद्भक्तेष्वपि । यथात्मनो हरेः प्रसादः स्यात् ।

---

१ अयं पाठः ख ङ कोशस्थः । कोशान्तरेषु - यजनमिच्छन्निति । २ भवतीत्याह - ङ ।

शौनक उवाच —

इत्यभिव्याहृतं राजा निशम्य भरतर्षभः ।
किमन्यत्पृष्टवान्भूयो वैयासकिमृषिं कविम्[1] ॥ १३ ॥

एतच्छुश्रूषतां विद्वन्सूत नोऽर्हसि भाषितुम् ।
कथा हरिगुणोदर्काः सतां स्युः सदसि ध्रुवम् ॥ १४ ॥

स वै भागवतो राजा पाण्डवेयो महारथः ।
बालः क्रीडनकैः क्रीडन्कृष्णक्रीडां य आददे ॥ १५ ॥

---

अनन्तरं हरेः अपरोक्षज्ञानं भवति । कीदृशं ? प्रतिनिवृत्तं अपक्रान्तं सत्वादिगुणनिमित्तानां अस्ति जायत इत्यादि षडूर्मीणां चक्रं पुन पुनरावर्तनं येन तत्तथोक्तम् । यद्वाऽपसारितं सत्वादिगुणा एव ऊर्मयः तरङ्गाः तेषां चक्रं येन तत्तथेति । यद्वा यदा यासां हरिकथानां श्रवणात् भगवदपरोक्षज्ञानं तदा प्रतिनिवृत्तगुणोर्मिचक्रं सत्वादिगुणनिमित्ता अशनायापिपासाशोकमोहरागद्वेषलक्षणाः ऊर्मयः तेषां चक्रं निरस्तं भवति । तस्मात् आत्मप्रसादः । तस्मात् उभयत्र गुणेष्वसङ्गः । तस्माद्वैराग्यात् कैवल्यं सम्भ्रियते अनेनेति कैवल्यसम्भृतं अपरोक्षज्ञानं तदेव पन्था मार्गो यस्य सः तथोक्तः । एवंविधो भक्तियोगो जायते । अथ तस्मात् को निर्वृतो रसज्ञः पुरुषः तासु हरिकथासु रतिं न कुर्यादित्यर्थः ॥ १२ ॥

परीक्षित्पृष्टशुकोक्तभगवत्कथा तद्विगुणीभूतरसैव स्यादित्याशयवान् शौनकः सूतं पृच्छति— इतीति । ऋषिनाऽत्रस्य त्रिकालदर्शित्वमस्तीत्यतः कविमिति । भगवन्तमपरोक्षतो जानातीति ॥ १३ ॥

शुश्रूषतां श्रोतुकामानाम् । सत्सभायां कदाचित् प्रसङ्गात् इतरकथाऽपि सम्भाव्यत इति नेत्याह— कथा इति । ध्रुवमित्यनेन नियमो दर्शितः ॥ १४ ॥

अन्योरेकस्याप्यसत्वे[2] नियमभङ्गः स्यादिति नेत्याह— स वा इति । तत्र हेतुमाह—बाल इति ॥ १५ ॥

---

१ वैयासकिम् - ज ट । व्यासवरुडेत्यादिवार्तिकेन इञि अकङ् । अतो वैयासकिरित्येव साधु ।
२ वक्तृश्रोत्रोरन्यतरस्याप्यसज्जनत्व इत्यर्थः ।

वैयासकिश्च भगवान्वासुदेवपरायणाः ।
उरुगायगुणोदाराः सतां स्युर्हि समागमे ॥ १६ ॥

आयुर्हरति वै पुंसां उद्यन्नस्तञ्च यन्नसौ ।
तस्यर्ते यः क्षणो नीतः उत्तमश्लोकवार्तया ॥ १७ ॥

तरवः किन्न जीवन्ति भस्त्राः किं न श्वसन्त्युत ।
न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे ॥ १८ ॥

श्वविड्वराहोष्ट्रखरैः स तुल्यः पुरुषः पशुः ।
न यत्कर्ण[६]पथोपेतो जातु नाम गदाग्रजः ॥ १९ ॥

---

अस्तूभयोः सत्वम् । ततः किं तत्राह– उरुगायेति । उरुगायेत्यनेन हरिकथायाः अवश्य-सद्भावं दर्शयति । उरुभिः वेदविद्याविशारदैः महात्मभिः गीयत इति उरुगायः । सतां समितौ प्राचुर्येण हरिकथासत्वेपि प्रसङ्गात् अन्यकथा स्यात् । न तथा श्रीशुकपरीक्षितोरित्यस्मिन्नर्थे हिशब्दः । कथा इति शेषः ॥ १६ ॥

वासुदेवकथामन्तरेण जीवनं व्यर्थमित्याह– आयुरिति । उद्यन् अस्तञ्च यन् गच्छन् असौ आदित्यः पुंसां यदायुर्हरति वै । 'आदित्यस्य गतागतैः अहरहः सङ्क्षीयते जीवितमि'ति वचनात् । तस्यायुषः यः उत्तमश्लोकवार्तया ऋते विना क्षणः कालविशेषः स नीत एव वृथेत्यन्वयः ॥ १७ ॥

हन्त लोके दीर्घकालं जीवन् पुमान् स्तूयत इति तत्राह– तरव इति । तरूणां श्वासाद्यभावा-दित्यत उक्तम्– भस्त्रा इति । भस्त्राः कार[२]दृतयः । स्वर्ण[३]सन्तापनार्थाश्चर्मविशेषाः । भस्त्राणां निश्चेतन्य-त्वा[४]त् न तत्साम्यं अत्राह– नेति । ग्रा[५]मपशवः सारमेयादयः मेहन्ति रेतोमूत्रादिकं उत्सृजन्ति । अपरे तिर्यग्जातिव्यतिरिक्ताः स्त्रीपुरुषाः । अनेन हरिचरितश्रवणाभावे चेतनत्वमप्रयोजकमित्युक्तं भवति ॥ १८ ॥

एतदेव विशिनष्टि– श्वविडिति । विड्वराहः अमेध्यसूकरः । पशुः विवेकशून्यः । गदाभृत इति पाठे गदां भृत इति पदार्थः । ग्रामं श्रित इतिवत् ॥ १९ ॥

---

१ जीवनम्-क । २ 'कार' इति कोशान्तरेषु नास्ति । ३ अयं ख ड पाठः । अन्यत्र 'अयः' इति पाठः । ४ अयं ग पाठः । अन्यत्र निश्चैतन्यात् । ५ ग्राम्य - ज । ६ पथोपेतं ज ट ।

बिले बतोरुक्रमविक्रमान्ये न शृण्वतः कर्णपुटे नरस्य ।
जिह्वाऽसती दार्दुरिकेव सूत न चेत्प्रगायत्युरुगाय गाथाम् ॥२०॥

भारः परं पट्टकिरीटजुष्टमप्युत्तमाङ्गं न नमेन्मुकुन्दम् ।
शावौ करौ नो कुरुतः सपर्यां हरेर्लसत्काञ्चनकङ्कणौ वा ॥२१॥

बर्हायिते ते नयने नराणां लिङ्गानि विष्णोर्न निरीक्षतो ये ।
पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो हरेर्यौ ॥२२॥

जीवच्छवो भागवताङ्घ्रिरेणुं न जातु मर्त्योऽभिलपेत यस्तु ।
श्रीविष्णुपद्यामनुजस्तुलस्याः श्वसच्छवो यस्तु न वेद गन्धम् ॥२३॥

---

इतोऽपि हरिकथां श्रावं श्रावं वर्तमानस्य पुंसः श्रोत्रादीन्द्रियसाफल्येनायुषः साफल्यम् । अन्यथा व्यर्थमित्याशयेनाह– बिलेति ॥

शृण्वतः शृणुतः । बिले । पर्वतस्येति शेषः । उरुगायगाथां न प्रगायति चेत् तर्हि दार्दुरिका दर्दुरस्य मण्डूकस्य विद्यमाना जिह्वेव असती अविद्यमानेव ॥ २० ॥

वा यदि । शावौ शवस्य विद्यमानौ ॥ २१ ॥

बर्हायिते पिच्छनेत्रवदाचरिते। निष्फले इत्यर्थः । लिङ्गानि प्रतिमाः । द्रुमवत् जन्म भजत इति । क्षेत्राणि पुण्यस्थानानि । 'क्षेत्रं पुरे गृहे देहे केदारे योनिभार्ययोः । पुण्यस्थाने समूहे च च घृतमाज्येऽम्बु सर्पिषोरि'ति यादवः ॥ २२ ॥

भागवतस्य भगवद्भक्तजनस्य अङ्घ्र्योः रेणुम् । यद्वा भागवतयोः भगवतो विद्यमानयोः अङ्घ्र्योः रेणुं नाभिलषेत न काङ्क्षेत । जीवच्छवः जीवन्मृतः । श्रीविष्णुपद्याः श्रीविष्णुपदप्रियायाः । श्वसच्छवः जीवन्मृतः । श्रीविष्णुपद्याः श्रीविष्णुपदप्रियायाः । श्वसच्छवः श्वासकृत्कुणपतुल्यः ॥२३॥

---

१ पिच्छ - ज न ग ।

तदश्मसारं हृदयं बतेदं यद्गृह्यमाणैर्हरिनामधेयैः ।
न विक्रियेताथ मुखे विकारो नेत्रे जलं गात्ररुहेषु हर्षः ॥ २४ ॥

अथाभिधेह्यङ्ग मनोऽनुकूलं प्रभाषसे भागवतप्रधानः ।
यदाह वैयासकिरात्मविद्याविशारदो नृपतिं साधु पृष्टः ॥ २५ ॥

इति श्रीमद्भागवते द्वितीयस्कन्धे तृतीयोऽध्यायः ॥

---

पुरुषस्य यद्धृदयं कथारूपेण गृह्यमाणैः हरिनामधेयैः न विक्रियेत द्रवीभावात्मकं विकारं नाप्नोति तदिदं अश्मसारवदतिकठिनम् ॥ अयोघनं वा । अथ यदि दैवाद्विकारः तदेदं लक्षणम् । मुखे विकासलक्षणो विकारः । नेत्रे जलं स्रवति । गात्ररुहेषु लोमसु हर्षः रोमाञ्चलक्षणः । स्यादिति शेषः ॥ २४ ॥

यत एवं हरिकथाश्रवणाभावे जन्मादेर्नैष्फल्यं अथ तस्मात् नृपतिना साधु पृष्टः आत्मविद्याविशारदः परमात्मविद्यायां पटुतरः वैयासकिः नृपतिं यदाह तन्मे[2] नः अभिधेहि । हरिकथाभिधाने मदन्यः किं न स्यात् ? अत्राह– मन इति । मनोऽनुकूलं यथा भवति तथा प्रभाषसे । हेत्वन्तरमाह– भागवतेति । अतः त्वत्त एव श्रोतुमिच्छा प्रवर्तत इति ॥ २५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
द्वितीयस्कन्धे तृतीयोऽध्यायः ॥

* * *

---

१ विकासो - ज । अयं पाठः टीकाननुगुणः ।          २ मना - ज ड । मूलकोशेष्वेवमेव पाठः ।

## ॥ अथ चतुर्थोऽध्यायः ॥

वैयासकेरिति वचस्तत्त्वनिश्चयमात्मनः ।
उपधार्य मतिं कृष्णे औत्तरेयः सतीं व्यधात् ॥ १ ॥

आत्मजायासुतागारपशुद्रविणबन्धुषु ।
राज्ये चाविकले नित्यनिरूढां ममतां जहौ ॥ २ ॥

---

## ॥ अथ चतुर्थोऽध्यायः ॥

सङ्क्षेपतः श्रुतहरिचरितत्वात् तस्मिन्नेवाहितान्तःकरणस्य परीक्षितो भक्त्यतिशयात् पुनर्विशेषतः श्रोतुकामस्य हरिसज्जनलीलाविलासविषयप्रश्नप्रकारः श्रीशुकाचार्यस्य गुरुदेवतानमस्कारपुरःसरं तत्प्रश्नप्रतिवचनप्रतिज्ञाप्रकारश्चास्मिन्नध्याये प्रतिपाद्यते । तत्र प्रथमतः शुकोपदेशात् तस्य प्रवृत्तविज्ञानविरक्ती अनुवदति– वैयासकेरिति ।

आत्मनः सर्वगुणपूर्णस्य हरेः तत्वस्य निश्चयो येन तत्तथा । उपधार्य हृदि निधाय । सतीं मतिं भक्तिपरिप्लुताम् ॥ १ ॥

आत्मजायाराज्यादिचिन्तामलकलिलान्तःकरणस्य तस्य कृष्णे सन्ततिविधानं कथं? तत्राह[2]– आत्मेति । स औत्तरेयः आत्मजायादौ अन्येषां नित्यनिरूढां ममतां जहावित्यन्वयः । हरेः सर्वस्वातन्त्र्यादिज्ञानविधुराणां अहं ममेति नित्यनिरूढामनेन[3] नित्यं तद्विदुषा पुरैव त्यक्तामपि तदा विशेषतस्त्यक्तवानित्यस्मिन्नर्थे चशब्दः । आत्मा देहः । 'स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ तथा सुहृत् । सप्तैतानि समस्तानि लोकेऽस्मिन्राज्यमुच्यत' इति मनुवचनादविकले सप्तप्रकृतिपूर्णे ॥ २ ॥

---

१ अवाहित - क ग ट ण छ । २ कथमत्राह - ड ।
३ इत्यनेन - मूलकोशपाठः । अन्यत्र इतीति नास्ति ।

पप्रच्छ चेममेवार्थं यन्मां पृच्छथ सत्तमाः ।
कृष्णानुभावश्रवणे श्रद्दधानो महायशाः ॥ ३ ॥

संस्थां विज्ञाय सन्यस्य कर्म त्रैवर्गिकञ्च यत् ।
वासुदेवे भगवति स्वात्मभावं दृढं गतः ॥ ४ ॥

राजोवाच—

समीचीनं वचो ब्रह्मन्सर्वज्ञस्य तवानघ ।
तमो विशीर्यते मह्यं हरेः कथयतः कथाः ॥ ५ ॥

भूय एव विवित्सामि भगवानात्ममायया ।
यथेदं सृजते विश्वं दुर्विभाव्यमधीश्वरैः ।
यथा गोपायति विभुः यथा संयच्छते पुनः ॥ ६ ॥

---

किमन्यत्पृष्टवानिति प्रश्नं परिहरति– पप्रच्छेति ॥ ३ ॥

संस्थां मरणम् । त्रैवर्गिकं धर्मार्थकामसाधनं यत् कर्म तच्च सन्यस्य स्वस्य आत्मा स्वामीति भावं भक्तिं गतः । एवमविकारस्तान्प्रीनान्राजा यमर्थं यूयं मां पृच्छथ इममेवार्थं परिपप्रच्छ च । शुकमिति शेषः ॥ ४ ॥

स्वाभीष्टं प्रष्टुं शुकवचनं स्तौति– समीचीनमिति । यदिष्टसाधनाववोधकं तत्प्रतिबन्धकनिवर्तकञ्च तदेव वचनं समीचीनं इष्टम् । एतत्कथमत्राह– तम इति । मह्यं मम तमः आन्तरं अज्ञानं विशीर्यते[4] इत्यनेन समूलमूतनुच्छिद्यते[3] इत्युक्तं भवति । मह्यमित्यनेन स्वेष्टसाधनं ज्ञानञ्च येन दीयत इति सूचितं भवति । हेतुर्वानेनोच्यते । मह्यं तमो विशीर्यत इति येन तस्मात् समीचीनमिति ॥ ५ ॥

आत्ममायया स्वेच्छया । स्वनियततया प्रकृत्या च । अन्यैः दुर्विभाव्यं दुरुत्पाद्यं इदं विश्वं यथा येन प्रकारेण सृजते, येन प्रकारेण गोपायति रक्षति, पुनः येन प्रकारेण संयच्छते संहरति तं प्रकारं भूयः पुनरपि विवित्सामि ज्ञातुमिच्छामि ॥ ६ ॥

---

१ अयं ज पाठः । अन्यत्र - यत् त्रैवर्गिकम् । २ अयं ग ण पाठः । अन्यत्र प्रतिबन्धनिवर्तकमिति ।
३ तूल - ख ड ज । ४ विशीर्यत इति येन तस्मादिति - ङ पाठः । ५ परेति नास्ति - ड ।

यां यां शक्तिमुपाश्रित्य पुरुशक्तिः परः पुमान् ।
आत्मानं क्रीडयन्क्रीडन्करोति विकरोति च ॥ ७ ॥
नूनं भगवतो ब्रह्मन्हरेरद्भुतकर्मणः ॥
दुर्विभाव्यमिवाभाति कविभिश्च विचेष्टितम् ॥ ८ ॥
यथा गुणांस्तु प्रकृतेर्युगपत्क्रमशोऽपि वा ।
बिभर्ति भूरिशस्त्वेकः कुर्वन्कर्माणि जन्मभिः ॥ ९ ॥
विचिकित्सितमेतन्मे ब्रवीतु भगवान्यथा ।
शब्दब्रह्मणि निष्णातः परस्मिंश्च भवान् खलु ॥ १० ॥

सूत उवाच—

इत्युपामन्त्रितो राज्ञा गुणानुकथने विभोः ।
हृषीकेशमनुस्मृत्य प्रतिवक्तुं प्रचक्रमे ॥ ११ ॥

---

पुरुशक्तिः अनन्तशक्तिः परः पुमान् आत्मानं जीवं संसारे क्रीडयन् अवतारैश्च क्रीडन् यां यां शक्तिमुपाश्रित्य विश्वस्य यदपेक्षितं तत्सर्वं सामान्यतो विशेषतश्च करोति तदपि विवित्सामीति । चशब्देन 'निर्विकारः सदा शुद्धः' इति वाक्यं प्रमाणयति ॥ ७ ॥

भगवच्चेष्टाविषयस्य ज्ञानस्य वक्ता ज्ञानिष्वपि दुर्लभ इति भावेनाह— नूनमिति । अज्ञैः दुर्विज्ञेयमिति किं वक्तव्यमित्यस्मिन्नर्थे चशब्दः ॥ ८ ॥

अथाप्येकः प्रश्नोऽस्तीत्याह— यथेति ॥ एको हरिः जन्मभिः वासुदेवाद्यवतारैः भूरिशः सृष्ट्यादिकर्माणि कुर्वन् प्रकृतेः सत्वादिगुणान् बिभ्रत् यथा कथं बिभर्ति । युगपत् क्रमशः क्रमेण वेति । तुशब्देन गुणानां विरुद्धस्वभावत्वेन युगपद्ग्रहणेऽनुपपत्तिं सूचयति । अपिपदेन क्रमशो ग्रहणं सम्भावितमिति ॥ ९ ॥

न केवलं विवित्सामि किन्तु वक्तव्यमिति त्वां प्रार्थये इत्याह— विचिकित्सितमिति । यथा यथावत् । एतद्वक्तुं तव पाण्डित्यमस्तीत्याशयेनाह— शब्देति ॥ अनेनालौकिकमपि वस्तु यथा बोद्धुं शक्यं तथा वक्तुं बोधयितुञ्च त्वं समर्थ इत्युक्तं भवति ॥ १० ॥

परीक्षित्पृष्टः शुकः किञ्चकारेति सूतः शौनकस्य हार्दीं[1] शङ्कां परिहरति— इतीति ॥ इतिशब्दः प्रकारवचनः । हृषीकेशमित्यनेन मुख्यतो वागादीन्द्रियशक्त्युद्बोधकत्वं हरेरित्यभिप्रैति । प्रतिवक्तुं प्रचक्रमे प्रारब्धवान् । भागवतसंहितामितिशेषः ॥ ११ ॥

---

१ हार्दीं शङ्कां - ख ड ।

श्रीशुक उवाच—

नमः परस्मै पुरुषाय भूयसे सदुद्भवस्थाननिरोधलीलया ।
गृहीतशक्तित्रितयाय देहिनामन्तर्भुवायाऽनुपलभ्यवर्त्मने ॥१२॥

भूयो नमः सद्वृजिनच्छिदेऽसतामसम्भवायाऽखिलसत्त्वमूर्तये ।
पुंसां पुनः पारमहंस्य आश्रमे व्यवसितानामनुमृग्यदाशुषे ॥१३॥

---

परीक्षित्प्रश्नोत्तररूपत्वेन भागवतपुराणं वक्तुकामः शुकः शिष्टाचारं परिपालयन् स्वेष्टदेवतां प्रणमति– **नमः परस्मा इत्यारभ्य नामस्तमां इत्यन्तैः श्लोकैः ।**

भूयस्त्वमुपपादयति– **सदित्यादिना ।** सतः सत्यस्य जगतः उद्भवः उत्पत्तिः, स्थानं पालनरूपा स्थितिः निरोधो लयः, एतन्निमित्तं लया गृहीतं शक्तीनं इच्छाज्ञानक्रियाख्यानां त्रितयं येन स तथोक्तः तस्मै । 'इच्छा ज्ञानं क्रिया चेति नित्याः शक्तय ईशितु'रिति वचनान्नित्येति पदमध्याहार्यम् । नित्यगृहीतशक्तित्रितयायेत्यर्थः । वेदादिरेवात्र प्रमाणम् । न प्रत्यक्षमिति भावेनाह– **देहिनामिति ।** देहिनां जीवानां चक्षुरादिना अनुपलभ्यवर्त्मने दुर्ज्ञेयमार्गाय । दूरस्थत्वादिति नेत्याह– **अन्तर्भुवायेति** अन्तर्यामित्वेन सन्ततमन्तःस्थिताय । 'यो वै भूमा तत्सुखं' 'द्वाविमौ पुरुषौ लोक' इत्यादिवाक्यमत्र प्रमाणम् ॥ १२ ॥

सर्वलोकनारायणप्रसादसाधनाद्भक्तिपूर्वकं पुनः पुनर्नमनमेव तत्प्रीतिजनकमिति भावेनाह– **भूय इति ।** भूयोऽपि परस्मै पुरुषाय नम इत्यन्वयः । यतः इष्टावाप्तितत्प्रतिबन्धकनिवृत्ती स्यातां स एव नन्तव्यो दृष्टः । अस्य कथमिति तत्राह– **सदिति ।** सतां नमनादिप्रशस्तकर्मणां पुंसां वृजिनं दुःखकारणं पापं छिनत्ति निर्मूलयतीति सद्वृजिनच्छित् तस्मै । असतामप्रशस्तकर्मणामन्दुर्गादीनामसम्भवाय असत्ता[३]करणाय । सुखप्रतिबन्धकजननिर्मूलकायेत्यर्थः । एतत्करणसामर्थ्यमस्यास्तीति भावेनाह– **अखिलेति ।** **अखिलसत्त्वमूर्तये ।** पूर्णसाधुभावस्वरूपा[४]य । 'निःशेषगुणपूर्णत्वात्सत्य इत्येव तं विदु'रिति वचनात् साधुभावाः[१] गुणाः इति ज्ञायन्ते । अनेन समस्तचराचरलक्षणप्राणिमूर्तय इत्येतन्निरस्तम् । अथाप्य[२]स्यादिष्टावाप्तिः कथमवगतेत्यत्राह– **पुंसामिति ।** परमहंससम्बन्धिनि आश्रमे व्यवस्थितानां सन्यास-

---

१ साधुभावः गुण इति ज्ञायते - क । साधुभावाः गुणा इति ज्ञायते - ख ग ट ण ज ड ।

२ अल्पद् - ढ ज ट ण । ३ असत्ताकरणाय - ड ।

४ अयं ड पाठः । अन्यत्र - भावेनाह अखिलसत्त्वमूर्तये इति पूर्णसाधुभावस्वरूपाय ।

नमो नमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम् ।
निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः ॥

---

धर्मवतां पुंसामनुमृग्यदाशुषे निजानन्दानुभवलक्षणमोक्षदात्रे । दाशृ दाने इति धातुः । अवधारणवाचिना पुनःशब्देन अन्ययोगं निवारयति । एतेभ्य एव अनुमृग्यं ददाति । नान्येभ्यइत्यर्थः ॥ १३ ॥

नन्वन्यशब्देन सन्यासीतरज्ञानिविवक्षायां 'तमेवं विद्वानमृत', इत्यादि अप्रमाणं स्यात् । अज्ञविवक्षायां 'अज्ञानां ज्ञानदो विष्णु'रिति च । अतः केऽत्र विवक्षिता इति मन्दाशङ्कां परिहरिष्यन् भागवतशास्त्रोक्तिविरुद्धयोगा एत इति वक्ति– नमो नम इति । सात्वतसंहितोक्तविधिना विष्णुमर्चयन्तः सात्वन्तः । तेषां सात्वताम् । ऋषं ज्ञानं भासयति दीपयतीति ऋषभः । ज्ञानमुद्दीप्य मुक्तिं ददातीत्यर्थः । तस्मै । 'सत्वन्तु शोभनत्वं स्यात्तद्युक्ताः सात्वता मता' इति वचनात् सात्वताः शोभनत्ववन्तः । तेषां अनुत्पन्नज्ञानानां तद्योग्यपुण्यवतां ज्ञानं ददातीति ऋषभः । तस्मा इति वा । अनेनोक्तवाक्यद्वयमपि प्रमाणमित्यायातमिति । यः परस्मै पुरुषायेति प्रक्रान्तः ते तस्मै । यद्वा स्वचित्तस्थं सम्बोध्य ते तुभ्यं नम इति । एवंविधफलदातृत्वेन तत्स्वामीति वाक्यार्थः । 'भस भर्त्सनदीप्त्योः' इति धातोः टिलोपेन सलोपः । शास्त्रकुत्सितो योगः ऐक्यध्यानलक्षणः स एषामस्तीति कुयोगिनः । तेषां विदूरे काष्ठा परिपूर्तिः अपरिच्छिन्नत्वलक्षणा यस्य सः तथा तस्मै । भगवदधिष्ठितदिङ्मात्रमपि न जानन्तीत्यतो वा विदूरकाष्ठायेति । 'दिशस्तु ककुभः काष्ठा' इत्यमरः । स्वतन्त्रत्वेन न स्वप्रयोजनमपेक्ष्य ज्ञानादिदातृत्वमितिभावेनाह– निरस्तेति । निरस्तौ साम्यातिशयौ येन तत्तथोक्तम् । तेन राधसा संसिद्ध्या स्वधामनि स्वयं प्रकाशे ब्रह्मणि अनवच्छिन्नचिदानन्दैकरसे रंस्यते रमणाणाय । सदातनोऽनुभवोऽयमिति शतृप्रयोगः । लोकविलक्षणेयं रतिरिति द्योतयितुं परस्मैपदप्रयोगः । प्रतिपदमनुसन्धेयमिति नमसां बहुत्वम् ॥ १४ ॥

---

१ शास्त्रोक्त - ट क ग ण । २ भक्षण - ज । ३ अपरिच्छिन्नलक्षणा - कोशान्तरेषु सर्वत्र ।
४ आशाः ककुभः काष्ठा इत्यभिधानम् - ख ङ । ५ प्रत्ययः - क ग ण ।

यत्कीर्तनं यच्छ्रवणं[1] यदीक्षणं यद्वन्दनं यत्स्मरणं[2] यदर्हणम्[3] ।
लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमो नमः ॥१५॥

तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः ।
क्षेमं न विन्दन्ति विना यदर्पणं तस्मै सुभद्रश्रवसे नमो नमः १६

विचक्षणा यच्चरणोपसाधनात्सङ्गं व्युदस्योभयतोऽन्तरात्मनः ॥
विन्दन्ति हि ब्रह्मगतिं गतक्लमास्तस्मै सुभद्रश्रवसे नमो नमः १७

किरातहूणान्ध्रपुलिन्दपुल्कसा आभीरकङ्कायवनाश्शकादयः ।
येऽन्ये च पापा यदपाश्रयाश्रयाच्छुध्यन्ति तस्मै प्रभविष्णवे नमः ॥

---

कीर्तनादिना विधूतकल्मषस्य नमस्क्रिया सम्पद्यत इतिभावेनाह- **यत्कीर्तनमिति** । सुभद्रश्रवसे सुमङ्गलकीर्तये । सद्य इत्यनेन भक्तिपूर्वकमिति सूचयति । 'क्षेमो [4]ना प्राप्तरक्षायां भद्रोऽप्यस्त्री तु मङ्गल' इति यादवः ॥ १५, १६ ॥

वैराग्येण दुर्लभया भक्त्या भगवच्चरणनिषेवणं ब्रह्मज्ञानसाधनं भवतीत्याशयेनाह- **विचक्षणा इति** । यच्चरणोपसाधनात् यच्चरणैकशरणप्राप्तिलक्षणनिषेवणात् अन्तरात्मनः अन्तःकरणस्य उभयतः इहामुत्रविषयेषु सङ्गं स्नेहं व्युदस्य निरस्य ब्रह्मगतिं ब्रह्मज्ञानं तेन मोक्षञ्च विन्दन्ति । यस्य गुणरूपस्य हरेः चरणोपसत्तेः अन्तरात्मनः क्षेत्रज्ञस्य उभयतः सङ्गं स्थूलसूक्ष्मशरीरसङ्गं व्युदस्य अपोह्य ब्रह्मगतिं ब्रह्मस्वरूपं विन्दन्ति अवगच्छन्तीति यन्मतं तत् हेतुवाचिना हिशब्देन निरस्तम् । यतो भेदः प्रत्यक्षादि प्रमाणसिद्धः अतोऽनुपपन्न ऐक्यवादः । सुभद्रं श्रवः श्रवणं यस्य स तथा तस्मै ॥ १६ ॥ १७ ॥

सज्जनसेवाया अप्येतादृशमाहात्म्यम् । किमुत भगवत्सेवाया इति भावेन तन्महिम्ने[5] विशिष्टं नमति- **किरातेति** । किरातादयो येऽन्ये च पापाः ते सर्वे यदपाश्रयाश्रयाच्छुध्यन्ति इत्यन्वयः । यस्मात् अन्यः आश्रयः नास्ति येषां ते यदपाश्रयाः विप्रादयः तेषां आश्रयात् सेवालक्षणात् शुध्यन्ति निष्पापा भवन्तीत्यर्थः । शबरात् पर्णशबरीजाताः किराताः आटविकाः । वैदेहकात् पुल्कसीजाताः

---

१ यत्स्मरणं - ख ज । २ यच्छ्रवणं - ख ज । ३ यदर्पणम् - ख ज ।
४ 'क्षेमो नाप्राप्तरक्षायाम्' इति आदौ ज ड ख पाठः । अन्यत्र नास्ति ।
५ तन्महिम्ना - ग छ ।

स एष आत्मात्मवतामधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः ।
गतव्यलीकैरजशङ्करादिभिर्वितर्क्यलिङ्गो भगवान्प्रसीदताम् ॥१९॥

---

हूणाः । वैश्यात् ब्राह्मणीजाताः वैदेहकाः । वैदेहकपुत्राः आन्ध्राः[1] । अज्ञातविप्रादिभावाः[2] नवु-पायिनः । निषादात् किरातीजाताः पुलिन्दाः । व्यभिचाराज्जाताः[3] चौर्यैः । तस्माज्जाता वा । शूद्रात् ब्राह्मणीजातश्चण्डालः । तस्माज्जाताः पुल्कसाः । ब्राह्मणात् वैश्यायां जातोऽम्बष्ठः ब्राह्मणात् तत्याम्ब-ष्ठस्य कन्यायां जाताः आभीराः । कङ्काः कर्पराः[4] । नृपाद्वैश्याजाताः यवनाः श्मश्रुलाः । शकास्तु तुरुष्कविशेषाः । डोम्बकुलविन्दमूतिवैपूर्वाः आदिशब्दगृहीताः । तथाचानुक्तैः सह चतुष्षष्टिजातयाः तथाचोक्तम्- 'ब्राह्मणस्य त्रयः पुत्राः वर्णास्त्रिष्वनुलोमजाः । शूद्रस्य च त्रयः पुत्राः तेष्वेव प्रति-लोमजाः । त्रयस्त्रयः क्षत्रविशोः प्रतिलोमानुलोमजाः । एते द्वादशवर्णानां पुत्रा एकैकशस्तु ते । चातुर्वर्ण्ये प्रसूयन्ते चतुरश्चतुरः सुतान् । ते चत्वारिंशदष्टौ च पूर्वैः द्वादशभिः सह । ब्राह्मणाद्यैश्चतु-र्भिश्च चतुःषष्टिर्हि जातय । ते सर्वे दस्यवो दोषैश्चौर्याद्यैः बहिष्कृताः' इति जातिविवेकाभिधाने । अन्ये पापाः ब्रह्महत्यादिकर्तारः । तस्मै प्रभविष्णवे प्रभवनशीलाय नम इत्यन्वयः ॥ १८ ॥

य एवंविधमहिमत्वेन प्रसिद्धः स एष आत्मा परमात्मा भगवान् प्रसीदतामित्यन्वयः । किं-विशिष्टः- आत्मवतां भक्त्या अङ्गीकृतपरमात्मतत्त्वानां मुक्तानां 'प्रशंसायां मतुबि'ति प्रशस्तमनसां ज्ञानिनां वा अधीश्वरः । वेदधर्मतपोनुसारिणां पुंसां वशगत्वात् त्रयीमयः धर्ममयः तपोमय इत्यनेन भक्तवात्सल्यं दर्शितम् । तदुक्तं 'वेदानुसारिवशगः स्वेच्छये'[6]ति । अत्र प्रमाणमाह- गतेति । 'व्यलीकं त्वप्रियेऽनृतं' इत्यभिधानात् गतव्यलीकैः अजशङ्करादिभिः ब्रह्मशिवादिभिः वितर्क्य विशे-षेणानुमेयं लिङ्गं जगज्जन्मादिलक्षणं यस्य सः तथोक्तः ॥ १९ ॥

---

१ एतदनन्तरं पुतिम्बा इति क । तिम्बा इति ड । २ भावाः - ग ङ ।
३ जातः चौरः - क । जाताः चौर्यः - ग ज । ४ कल्हाः - ख ड ।
५ अयं पाठः ख ज ट ड कोशस्थः । अयं ऐत. ब्रा. प्रयोग इति मानियर विलियम्स् कोशे दृश्यते । पूतिब - क ग ङ । ६ एतदनन्तरं 'तु हरिर्यतः ।' अतः स्वतन्त्रमप्याहुः प्राज्ञा वेदमयेति हेलध्याने' इत्यधिकः पाठः - ञ ण ।

श्रियःपतिर्यज्ञपतिः प्रजापतिर्धियां पतिर्लोकपतिर्धरापतिः ।
पतिर्गतिश्चान्धकवृष्णिसात्वतां प्रसीदतां मे भगवान्सतां पतिः ॥

यदङ्घ्र्यभिध्यानसमाधिधौतया धियाऽनुपश्यन्ति हि तत्वमात्मनः ।
वदन्ति चैतत्कवयो यथारुचं स मे मुकुन्दो भगवान्प्रसीदताम् ॥

---

चिर्चीकृततत्तदभीष्टसिद्धये तत्तद्गुणविशिष्टस्य हरेः प्रसादं प्रार्थयते- श्रियः पतिरिति । श्रीधरयोः पतित्वकथनेन सर्वाधिपत्ये सिद्धेऽपि तदवान्तरदेवता[1]नानाधिपत्यं निवारयति । वेदादिवाङ्मात्राभिमानित्वेन श्रीप्रसादोऽपि प्रार्थनीय इत्यभिप्रायेण श्रियः[2]पतिरिति । इतरविशेषणान्येवमनुसन्धेयानीति । बहुजनाश्रयत्वेन क्षमागुणनिधित्वेन स्थिरायाः धरायाः पतिः । ननु आदीन्द्रियव्यापारसाध्यस्य देहान्तरभोग्यफलस्य यज्ञकर्मणः फलदातृत्वेन तत्फलपालकः । फलपालनं किमर्थमिति तत्राह- प्रजापतिरिति । कर्मण्यधिकृतस्य जनस्य जीवनहेतुत्वेन पतिः । 'प्रजा तु जनपुत्रयोरिति' । प्रजापतिशब्दवाच्यत्वं मुख्यमस्येति वा । प्रवृत्तेर्ज्ञानपूर्वकत्वेन[3] सम्भवात् तदर्थं धियां पतिरिति । लोकपतिरित्यनेन पुरन्दरादीनां तत्पतित्वं निवारयति । पतिर्गतिश्चेत्यादिना भक्तवात्सल्यातिशयं[4] दर्शयति । निरपेक्षत्वेन सतां स्वामित्वापेक्षा नास्तीति शङ्कां निवारयति- सतां पतिरिति ॥ २० ॥

उक्तार्थज्ञानमिदं किम्प्रमाणकम् । कथं वा ज्ञातुं शक्यम इति तत्राह- यदङ्घ्रीति । कात्स्न्र्येना निवृत्तविषयसंस्कारं स्मरणमभिध्यानम् । निवृत्तविषयसंस्कारोऽस्मरणज्ञातान्यः समाधिः । यदङ्घ्रिविषयाभ्यां ताभ्यां धौतया निर्णिक्ता[6]विद्याकामकर्ममलया धिया आत्मनः परमात्मनः तत्वं अनुपश्यन्ति । हि यस्मात्तस्माद्दर्शनं प्रमाणम् । दृष्ट्वा च यथारुचं यथारुचि शिष्यादिभ्यः एतत्तत्वं वदन्ति चेत्यतः तदुपदेशशास्त्रेण ज्ञातुञ्च शक्यमित्यर्थः ॥ २१ ॥

---

१ देवानाम् - क ग छ ज ।

२ श्रीधरापतित्वकीर्तनेन सर्वलक्ष्मीरूपाधिपत्यसिद्धावपि अवान्तरदेवतानामुपरि हरेराधिपत्यं तदेव श्रीधरापतित्वकथनं निवारयतीति प्रतीतिः स्यात् अवान्तरदेवाधिपत्यकीर्तनमात्रे कृते श्रीपतित्वमसिद्धं स्यात् । उभयार्थं सर्वविशेषणकीर्तनं श्लोके इति भावः । ३ ज्ञानपूर्वकत्वसम्भवात् - ज ।

४ भक्तवात्सल्यातिशयत्वं - क । मूलकोशेष्वयमेव पाठः । ५ इलत उक्तं - इ ।

६ अयं ग ट पाठः । अन्यत्र कर्मेति नास्ति । ७ तत्तत्वं - क ग छ ज ट ढ ।

प्रचोदिता येन पुरा सरस्वती वितन्वताऽजस्य सतीं स्मृतिं हृदि ।
स्वलक्षणा प्रादुरभूत्किलाऽस्यतः स मे ऋषीणामृषभः प्रसीदताम् ॥
भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः ।
भुंक्ते गुणान्षोडश षोडशात्मकः सोऽलङ्कृषीष्ट भगवान्वचांसि मे ॥

---

ग्रन्थारम्भे सरस्वतीचतुर्मुखादिप्रसादश्चाभीष्टसाधनं भवतीत्यभिप्रायेणाह– प्रचोदितेति । पुरा सर्गादौ अजस्य आत् परब्रह्मणो जातस्य चतुर्मुखस्य हृदि सतीं सर्वचेतनेभ्यः उत्तमां स्थितिं सन्निधानै-लक्षणां वितन्वता संस्कारोद्बोधद्वारेण विस्तारयता येन भगवता प्रचोदिता प्रेरिता स्वलक्षणा स्वरूपभूत-नित्यत्वाख्यलक्षणा स्वरूपनिर्णायकषडङ्गाख्यलक्षणा वा सरस्वती वाक् ऋगादिवेदरूपा तस्यास्यतः आस्य-चतुष्टयात् प्रादुरभूत् अभिव्यक्ताभूत् । 'चत्वारो निर्गता वेदास्तव वक्त्रचतुष्टयादि'त्यादेः । स ऋषीणां ब्रह्मादिज्ञानिनां ऋषभः ज्ञानप्रदः परमवागीश्वरीपतिः नारायणः मे प्रसीदतां प्रसन्नो भवत्वित्यन्वयः । किलेत्यनेन सर्वश्रुत्यादिसंवादं दर्शयति । 'वार्तासंवादयोः किले'ति यादवः । यद्वा पुरा शास्त्रप्रबन्धे अधिकृतेन अजस्य मम पितामहस्य पराशरस्य हृदि सतीं ज्ञानोपदेशलक्षणां स्थितिं वितन्वता येन व्यासेन प्रचोदिता संकलिता स्वलक्षणावयोग्यसर्गादिदशलक्षणा सरस्वती भागवतसहितारूपा यस्याऽस्यत प्रादुरभूत् स ऋषीणां ऋषभो व्यासः मे प्रसीदतामित्यन्वय इति । 'अजः पितामहेऽनादौ' इति । 'प्रबन्धे निकटेऽतीते पुराणेऽनागते पुरे'ति च ।

'छागे विष्णौ हरे ह्यज' इत्यतोऽजस्य विष्णोः सतीं स्थितिं वितन्वता हृदि लोकस्येति शेष इति वा ॥ २२ ॥

इदानीं देहेन्द्रियादिप्रवर्तकं हरिं प्रसादयति– भूतैरिति । यो विष्णुः महद्भिः व्याप्तैः भूतैः पृथिव्यादिभिः पुरः शरीराणि निर्माय अमूषु पूर्षु आत्मादिरूपैः शेते इति यत् यस्मात् तत एव यः पुरुषः पुरिशयनयोगेन पुरुषनामा । 'तस्येदमेव शिर' इति श्रुतेः । गोलकात्मकदेहव्याप्तत्वाद्वा । षोडशात्मकः एकादशेन्द्रियपञ्चभूतव्यापी षोडशगुणान् शब्दादिविषयसारान् भुंक्ते । न दुःखानि । स भगवान् स्वविषयपुराणं व्याकर्तुकामस्य मे वचांसि अलङ्कृषीष्ट । स्वप्रीतिजनकानि कुर्यादित्यन्वयः ॥ ॥ २३ ॥

---

१ सान्निध्य - क ग ङ ट । नियम-ण । नियमन - ज । २ विज्ञानोपदेश - ङ । ३ च्छेऽज - ग ट ङ । ४ अयं न पाठः । अन्यत्र यस्मादिति नास्ति । ५ व्याप्तिस्वाद्वा - ङ । ६ व्याहर्तु - ज ।

नमस्तस्मै भगवते वासुदेवाय वेधसे ।
पपुर्ज्ञानमयं सौम्याः[1] यन्मुखाम्बुरुहासवम् ॥ २४ ॥

एतदेवात्मभू राजन्नारदायेति पृच्छते ।
वेदगर्भोऽभ्यधात्सर्वं यदाह हरिरात्मनः ॥ २५ ॥

॥ इति श्रीमद्भागवते द्वितीयस्कन्धे चतुर्थोऽध्यायः ॥

---

इदानीं भक्त्यतिशयेन देवकीनन्दनं कटाक्षीकृत्य नमति- **नमस्तस्मै इति** । सौम्याः ज्ञान-सोमार्हाः ब्रह्मादयो ज्ञानमयं ज्ञानात्मकं यस्य हरेः मुखाम्बुरुहादुत्थं आसवं मधु पपुः । तस्मै वेधसे कर्त्रे वासुदेवाय भगवते नमः । सौम्याः उद्धवादयः ज्ञानमयं यन्मुखाम्बुरुहासवं पपुः तस्मै वेधसे कंसाद्यसुरहन्त्रे वासुदेवाय शौरये नम इति वा । सौम्याः नारदादयः ज्ञानमयं ज्ञानप्रतिपादकं भागवतं नाम पुराणं यन्मुखाम्बुरुहासवं पपुः तस्मै वेधसे चतुर्मुखाय नमः । कीदृशाय वासुदेवाय । नारायण पुत्राय । शौरेः पुत्रोऽपि[2] शौरिरितिवत् । सौम्याः व्यासादयः तस्मै वेधसे विधिपुत्राय नारदाय । वासुदेवाय वासुदेवभक्ताय । सौम्याः वैशम्पायनादयः तस्मै वासुदेवाय वासुदेवावताराय व्यासाय नमः । वेधसे भारतादिशास्त्रकर्त्रे[3] ॥ २४ ॥

स्वाभीष्टदेवताप्रसादं प्रार्थयित्वा साम्प्रतं परीक्षित्प्रश्नं प्रतिवक्तुमुपक्रमते[4]- **एतदेवेति** । हरिः आत्मनः स्वस्य पुरा[6] यत् पुराणं आह आत्मभूः परमात्मपुत्रः वेदगर्भः ब्रह्मा तदेतत्सर्वं इति त्वत्प्रश्नप्रकारेण पृच्छते नारदाय अभ्यधादित्यन्वयः । अर्थव्यत्यासो नास्तीत्येवशब्दः । एतदुक्तं भवति । आदौ नारायणेन ब्रह्मणे प्रोक्तम् । ब्रह्मणा नारदाय । नारदेन व्यासाय । व्यासेन मह्यम् । तदहं त्वत्प्रश्न-परिहारत्वेन वक्ष्यामीति ॥ २५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
द्वितीयस्कन्धे चतुर्थोऽध्यायः ॥

---

१ सौम्येति श्लोके टीकायां च सर्वत्र - ट ।　　२ अयं ग ख ट ग ङ ड पाठः । अन्यत्र अपिरिदं नास्ति ।

३ एतदनन्तरं ञ कोशे – 'सौम्या इन्द्रादयः ज्ञानमयं ज्ञानप्रतिपादकं भागवतं नाम पुराणं यन्मुखाम्बुरुहात् पपुः । तस्मै वेधसो' इत्यधिकः पाठः ।　　४ प्रश्नपरिहारं प्रवक्तु - ञ ।　　५ साक्षात् - क ।

६ पुरा इति ढ पाठः । अन्यत्र नास्ति ।

## ॥ अथ पञ्चमोऽध्यायः ॥

नारद उवाच—

देवदेव नमस्तेस्तु भूतभावनपूर्वज ।
तद्विजानीहि यज्ज्ञानमात्मतत्त्वनिदर्शनम् ॥ १ ॥

यद्रूपं यदधिष्ठानं यतः सृष्टमिदं विभो ।
यत्संस्थं यत्परं यच्च तत्त्वं वद तत्त्वतः ॥ २ ॥

---

## ॥ अथ पञ्चमोऽध्यायः ॥

अस्मिन्नध्याये वेदगर्भनारदाख्यायिकाकथनव्याजेन ग्रन्थादौ प्रतिज्ञातं जगज्जन्मादिकारणत्वलक्षणं तदेकान्तनिष्ठमिति सप्रपञ्चं प्रतिपाद्यते । तत्रादौ नारदप्रश्नप्रकारमाह— देवदेवेति । यज्ज्ञानं आत्मनः परमात्मनः तत्त्वं नितरां दर्शयतीति[1] आत्मतत्त्वनिदर्शनं तज्ज्ञानं मह्यं विजानीहि विज्ञापय । आत्मब्रह्मणोः तत्त्वज्ञाने महान्विशेषोऽस्तीति भेदस्य, परमेश्वरप्रसादमन्तरेण वागादीन्द्रियप्रवृत्तिरपि विपरीता भवतीति तत्स्वातन्त्र्यस्य, अत्र[2] ब्रह्मा कर्ता अहं करणमिति करणत्वस्य[3] विवक्षया व्यत्ययोक्तिः[4] । जीवब्रह्मभेदः, हरेः स्वातन्त्र्यं, नारदस्य करणत्वमिति त्रयं व्यत्ययार्थः । तदुक्तं- 'व्यत्ययो भेदस्वातन्त्र्यकरणेष्विति वचनादिति ॥ १ ॥

ज्ञेयं पृच्छति- यद्रूपमिति । इदं विश्वं यस्य रूपमिव रूपम् । न तु साक्षाद्रूपम् । चित्त्वेन सत्त्वेन च सादृश्यात् तद्वशत्वाच्च । तदुक्तम्- 'तद्वशत्वादिदं रूपं हरेर्नैव स्वरूपत' इति । योऽधिष्ठानं मूलाधारो यस्य तत् यदधिष्ठानम् । न त्वारोप्यमाणसर्पस्य रज्जुवदधिष्ठानम् । 'अधिष्ठानमिति प्रोक्तं मूलाधारं विचक्षणैरि'ति । इदं यतः सृष्टं संभूतम् । 'यतो वा इमानि भूतानि जायन्त' इति श्रुतेः । पीठवत् यस्मिन् संस्था संस्थानं यस्य तत् यत्संस्थम् । 'यत्स्थितं दृश्यते वस्तु संस्थानं तदुदीरि-

---

१ तत्त्वं निदर्शयति - क ङ ज ण ।

२ अयं ख ज ड पाठः । अन्यत्र नास्ति ।   ३ करणस्य - क ख ङ ज ण ट ग छ ड ।

४ विज्ञापयेति वक्तव्ये विजानीहीति व्यत्ययोक्तमित्यर्थः ।

सर्वं ह्येतद्भवान् वेद भूतभव्यभवत्प्रभुः ।
करामलकवद्विश्वं विज्ञानावसितं तव ॥ ३ ॥

यद्विज्ञानो यदाधारो यत्परस्त्वं यदात्मकः ।
एकः सृजसि भूतानि भूतैरेवात्ममायया ॥ ४ ॥

---

तनि'ति च । पूर्वत्र पृथिवीवत् अत्र पीठवदिति विशेषेण[1] पुनरुक्तिः । यः परो यस्माज्जगतः तत् यत्परम् । हरिः परोऽस्य जगतो ह्यव्यक्तादेश्च कृत्स्नशः इति । यस्मात् संस्था मृत्युः संहारो यस्य तत् यत्संस्थम् । येन परं पालनं यस्य तत् यत्परम् । 'येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ती'ति वा । यच्च यदधीनञ्च । यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इति च[2] । तस्य हरेः तत्वं तत्वतो यथावत् वदेत्यन्वयः ॥ २ ॥

मम वक्तव्यांशे भवतो ज्ञानसामग्री कियत इत्याह- **सर्वमिति** । हिशब्देन 'प्रजापते नत्व-देतानी[3]'त्यादिश्रुतिप्रसिद्धिं द्योतयति । सर्वमेतदिति प्रतिज्ञा । भूतादिप्रभुरिति हेतुः । हीति व्याप्तिप्रदर्शनम् । करामलकवदिति निदर्शनम् । विज्ञानेति निगमनम् ॥ २ ॥

नैतत्सामान्यविज्ञानं[4], किन्तु विशिष्टमेव । हरिप्रसादायत्तत्वादिति भावेनाह- **यद्विज्ञान इति** । यस्य प्रसादात् विज्ञानं यस्य तव सः त्वं यद्विज्ञानः । यः आधारो यस्य सः तथा । यः परो यस्मात् स तथा । य आत्मा स्वामी यस्य सः यदात्मकः । त्वं तं वदेति शेषः । उक्तादधिकं ज्ञातुं पूर्वपक्षं दर्शयति- **एकः सृजसीत्यादिना** । एकस्त्वमेवात्ममायया स्वेच्छया भूतानि चराचराणि पृथिव्यादि-पञ्चभूतैः सृजसि ॥ ४ ॥

---

१ विशेषणात् - क ग छ ज ञ ट । विशेषात् - ड । नकाररहितपाठे पुनः उक्तिः पुनरुक्तिरर्थः । तत्सहितपाठे तु पुनरुक्तिर्न दोषायेत्यर्थः । २ एतदनन्तरं 'विभेदे विचनानामपि मिथो नित्यस्वरूपतः' इति चैत्यधिकपाठः मूलकोशे । क कोशे च । अन्यत्र नास्ति । तात्पर्ये तु- 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते । विचनाने विभेदेपि मिथो नित्यं स्वरूपतः' इति वर्तते । ३ अयं ख छ ज पाठः । अन्यत्र - न्य न्य इत्यादीति । नत्वदेतानीति श्रुतिप्रसिद्धिं दर्शयति - ड । ४ सामान्यज्ञानं - कोशान्तरेषु पाठः ।

आत्मन्भावयसे तानि न पराग्भावयेः स्वयम् ।
आत्मशक्तिमवष्टभ्य सूत्रनाभिरिवाक्रमः ॥ ५ ॥

नाहं वेद परं त्वस्मान्नावरं न समं विभो ।
नामरूपगुणैर्भाव्यं सदसत्किञ्चिदन्यतः ॥ ६ ॥

स भवानचरद्[६] घोरं यत्तपः सुसमाहितः ।
तेन खेदयसे नस्त्वं परां शङ्कां च यच्छसि ॥ ७ ॥

एतन्मे पृच्छतः सर्वं सर्वज्ञ सकलेश्वर ।
विजानीहि यथैवेदमहं बुध्येऽनुशासितः ॥ ८ ॥

---

कुलालादेः शालाद्यधिष्ठानं[१] दृष्टम् । किमस्याधिष्ठानमत्राह– आत्मन्निति । अक्रमः त्वं तानि भूतानि सूत्रनाभिः ऊर्णनाभिरिव आत्मशक्तिं निजसामर्थ्यमवष्टभ्य आत्मन् आत्मनि भावयसे उत्पादयसि । वर्धयसे[२] च । पराक् त्वत्तो बहिः न भावयेः[३] इति ॥

यतः तस्मात् अस्मात् भवतो[४] विश्वस्य परं उत्तमं कारणं अहं न वेद । अवरं हीनं समं कारणञ्च न वेद । तुशब्देन उक्तार्थमवधारयति । निगमयति– नामेति । नाम्ना वाचकेन, रूपेण शुक्लादिना, गुणैः सत्वादिभिः सत् स्थूलं असत् सूक्ष्मं वा किञ्चिद्वस्तु यद्भाव्यं उत्पाद्यं तत् त्वदन्यत इत्यपि गर्हितं निन्दितम् । अतस्त्वमेव सर्वकारणमित्यर्थः ॥ ५ ॥ ६ ॥

ज्ञाततत्त्वेन त्वया प्रश्नः [५]किमिति कृतः इति तत्कारणमाह– स भवानिति । तपः अचरदिति यत्तेन हेतुना त्वं नोऽस्मान् खेदयसे त्वयि अनलं बुद्धिं प्रापयसि । त्वदितरकर्तृसद्भावे परां शङ्काञ्च यच्छसि इत्यन्वयः । तस्मात् प्रश्नः कृत इति भावः ॥ ७ ॥

सर्वज्ञसकलेश्वरेति विशेषणद्वयं उक्तार्थस्थिरीकरणायोक्तम् । यथा बुध्ये जानामि तथेति शेषः । 'त्वदधीना यतः सत्ता ह्यवरस्यापि केशवे'त्यनेन पूर्वपक्षोऽयमिति ज्ञायते ॥ ८ ॥

---

१ कालाद्य - क ज छ ट ग । २ पालयति - क । ३ भावयसे - ड ग ड ख । भावयेः भावयसे - ह छ ।
४ अयं ड पाठः । अन्यत्र - यतः यस्माद्भवतो ।
५ किमर्थः ज । ६ आचरदिति ज ख पाठः । अन्यत्र अचरदिति मूलश्लोके व्याख्याने च ।

ब्रह्मोवाच —

सम्यक्कारुणिकस्येदं वत्स ते विचिकित्सितम् ।
यदहं चोदितः सौम्य भगवद्वीर्यदर्शने ॥ ९ ॥

नानृतं बत तच्चापि यथा मां प्रब्रवीषि भोः ।
अविज्ञाय परं मत्त एतावत्त्वं यतो हि मे ॥ १० ॥

येन स्वरोचिषा विश्वं रोचितं रोचयाम्यहम् ।
यथार्कोऽग्निर्यथा सोमो यथर्क्षग्रहतारकाः ॥ ११ ॥

नमस्तस्मै भगवते वासुदेवाय धीमहि ।
यन्मायया दुर्जयया मां वदन्ति जगद्गुरुम् ॥ १२ ॥

---

नारदप्रश्नं परिहरिष्यन् तज्जिज्ञासितं स्तौति– सम्यगिति । अहं भगवतो हरेः वीर्यस्य सृष्ट्यादिलक्षणस्य दर्शने ख्यापने चोदित इति यत् यस्मात् अतः ते विचिकित्सितं सम्यक् समीचीनमित्यन्वयः । कारुणिकस्येत्यनेन लोकोपकारकमिदमिति लक्षयति ॥ ९ ॥

तत्र प्रथमतः पूर्वपक्षांशमाक्षिपति– नानृतमिति । त्वं एकः सृजसीति यथा मां प्रब्रवीषि तथा तत् अनृतं न किं ? अनृतमेव ! बत त्वद्वचनं श्रुत्वा अहं खिन्नः । 'खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत' इति वचनात् । बत मत्तः परमविक्रमीश्वरमविज्ञाय नाहं वेद परं त्वस्मादिति मामात्थ तच्चानृतं तदप्यनृतमेव । कुत इति तत्राह– अपीति । अतिगर्हितत्वात् । 'अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेष्विति' सूत्रात् । 'गर्हा समुच्चयप्रश्नशङ्कासंभावनास्वपी'त्यभिधानाच्च । कस्मान्मदुक्तमाक्षिपसीति तत्राह– एतावत्त्वमिति । हिशब्दः एवार्थे । मे एतावत्त्वं तद्रोचिषा रोचितरोचकत्वं ह्येव । नातोऽधिकमिति यस्मात् तस्मात् इति शेषः[2] ॥ १० ॥

एतदेव स्पष्टयति– येनेति । तत्र प्रमाणमाह– यथेति । 'तमेव भान्तमनुभाति सर्वम्' 'यदादित्यगतं तेजो जगद्भासयतेऽखिलमि'त्यादेः ॥ ११ ॥

बुभूषुणा दुर्मतश्रवणप्राप्तापराधो भगवन्नमनेन परिहर्तव्य इति भावेन भगवन्तं नमति– नम इति । तस्मै वासुदेवाय भगवते नमः । वयं तं धीमहि इत्यन्वयः । अनेन ॐ नमो भगवते वासु-

---

१ अपि - ज । २ [illegible] शेष इति ड पाठः । अन्यत्र नास्ति ।

विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया ।
विमोहिता विकत्थन्ते ममाहमिति दुर्धियः ॥ १३ ॥

---

देवाय' 'नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्' इति द्वादशाक्षरी चतुर्विंश-दक्षरी चेति द्वे विद्ये हिरण्यगर्भेण नित्यं सेव्ये इति दर्शितम् । यद्वा– मत्तः परमविज्ञाय यथा एकः सृजतीत्यादि यं प्रकारं मां प्रब्रवीषि तच्च तत्प्रकारविषयवचनमेवानृतम् । नान्यत् यद्रूपमित्यादि । तदेवानृतं कुत इत्यत आह– नेति । प्रमाणविरोधात् । 'नाभावान्यविरोधेष्वि'ति वचनात् । अयं पक्षः सम्भावित इत्याह– अपीति । वत सन्तोषहेतुत्वात् । कुतोऽनृतमिति तत्राह– एतावत्त्वमिति । यतः यस्मात् विष्णोः मे एतावत्त्वं परिच्छिन्नप्रभावत्त्वं हि प्रसिद्धम् । कथं प्रसिद्धमित्यत उक्तमेव विशिनष्टि– येनेति । अनेन हरेः करणत्वं तव कर्तृत्वं प्रतीतं, न तु हरेः स्वातन्त्र्यकर्तृत्वमित्याशङ्क्य दासभावकथनेन स्पष्टयति– नम इति । रामेण मुक्तः शरो रावणमवधीदि-त्यादाविव करणत्वमपि मुख्यकर्तृत्वं प्रयोजयतीत्यतः करणत्वप्रयोगोऽकिञ्चित्करः । नन्वेवं चेत् तव कर्तृत्ववादः कथं अत्राह– यन्माययेति ॥ १२ ॥

त्रिविधा माया । एका हरेरिच्छा मुख्या । द्वितीया अमुख्या प्रकृतिः । तृतीया अमुख्यतमा दीनां जीवानां बन्धकशक्तिरिति । तत्र यस्य विष्णोः इच्छाधीनया दुर्जयया हरिभजनवर्जितैः जेतुमशक्यया यस्य हरेः ईक्षापथे दृष्टिमार्गे स्थातुं विलज्जमानया चित्प्रकृत्या अभिमन्यमानया शैवल्या-ख्यया जीवस्वरूपाच्छादिकया अमुया मायया मोहिताः अन्यथा ज्ञानमाप्ताः अत एव दुर्धियः जनाः मम वशे विश्वमस्ति सर्वस्याहं कर्तेति च विकत्थन्ते तं धीमहीत्यन्वयः । 'मुख्या माया हरेः शक्ति-रमुख्या प्रकृतिर्मते'त्यादिना त्रैविध्यावगमात् नेन्द्रजाललक्षणा मायात्रोच्यते ॥ १३ ॥

---

१ चतुर्विंशत्यक्षरी - क ड । ३ यद्रूपमित्यादि । न प्रमाणविरोधात् - ख ग ड । ४ दास्य - ड ।
२ प्रेति ड पाठः अन्यत्र नास्ति । ५ करणप्रयोगः - ख ड ।
६ अं ख ज ड पाठः । अन्यत्र नास्ति । ७ अस्य - ख ड ।

द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
वासुदेवात्परो ब्रह्मन्न चान्योर्थोऽस्ति तात्त्वतः ॥ १४ ॥

नारायणपरा वेदा देवा नारायणाङ्गजाः ।
नारायणपरा लोका नारायणपरा मखाः ॥ १५ ॥

नारायणपरो योगो नारायणपरं तपः ।
नारायणपरं ज्ञानं नारायणपरा गतिः ॥ १६ ॥

---

ननु विष्णोरितरत्कारणं नास्तीति कथमुच्यते । पृथिव्यादीनां प्रातिस्विककारणत्वप्रतीतेरिति तत्राह– द्रव्यमिति । द्रव्यं पृथिव्यादि । कर्म पुण्यपापलक्षणम् । पृथिव्यादीनां परिणामविशेषो वा । कालः परिणामहेतुः त्रुटिलवात्मकः । स्वभावः सात्त्विकादिः । जीवः सुखदुःखाश्रयः । द्रव्यं पुरोडाशादि । कर्म ऋत्विगादिव्यापारः । कालः वसन्तादिः । स्वभावो ब्राह्मणत्वादिः । जीवः यजमानसंज्ञ इति वा । द्रव्याद्यन्यतमोऽन्योर्थः[1] वासुदेवात् परः अधिकः नास्ति । तर्हि तत्समः कश्चित् स्यात् । अत्राह तात्त्वत इति । नेत्यनुवर्तते । तात्त्वतः तद्वदेव स्थितः समोपि नास्तीत्यर्थः । 'तद्वदेव स्थितं यत्तु तात्त्वतं तत्प्रचक्षत' इति वचनात् । अनेन द्रव्यादीनां प्रातिस्विककारणत्वस्य भगवदेकनियतत्वेन हरेः अखण्डकर्तृत्वं सुस्थिरमिति सिद्धम् ॥ १४ ॥

ननु 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' । ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ते'त्यादिश्रुतयस्तद्गुणप्रतिपादनपराः कथमन्यविषयाः स्युः इत्याशङ्क्य मदन्तःस्थस्य मन्नाम्नो हरेः गुणप्रतिपादिका इत्याशयेनाह– नारायणपरा इति । स्वप्रतिपाद्येषु वस्तुषु नारायण एव परो अधिको येषां ते तथोक्ताः । सर्वस्मादुत्कृष्टं नारायणमेव प्रतिपादयन्तीति कुतः इति तत्राह– देवा इति । नारायणस्य चक्षुराद्यवयवेभ्यो जाता इत्यनेन देवानामवरत्वं नारायणस्योत्कृष्टत्वमुक्तमिति ज्ञायते । नारायण एव पालकत्वेन परो येभ्यस्ते तथोक्ताः । 'अहं हि सर्वयज्ञानां' इत्यादेः । इज्येषु इन्द्रादिषु अयं पर इति कृत्वा नारायणपरा मखाः इत्युक्तम् । अष्टाङ्गयोगेन योज्यमानेष्वपि परो हरिरेव । कृच्छ्रचान्द्रायणादितपसां विषयोपि स एव । अत्रापि तपसा युज्यमानानां पर इत्यर्थः । नारायणपरं

---

१ द्रव्यादिरन्यार्थः - ख ज ड ।

तस्यापि द्रष्टुरीशस्य कूटस्थस्याखिलात्मनः ।
सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदितः ॥ १७ ॥
सत्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः ।
स्थितिसर्गनिरोधेषु गृहीता मायया विभोः ॥ १८ ॥
कार्यकारणकर्तृत्वे द्रव्यज्ञानक्रियाश्रयाः ।
बध्नन्ति नित्यदा मुक्तं मायिनं पुरुषं गुणाः ॥ १९ ॥

---

ज्ञानं ज्ञानेन परमज्ञेयो हरिः । नारायणपरा गतिः आश्रयेषु गम्येषु वा मुख्याश्रयो मुख्यगम्यश्चा-यमेव । तदुक्तं– 'गम्येज्यज्ञेयवाच्येषु योज्येषु च परो हरिरि'त्यादि[1] । अनेन हिरण्यगर्भादिशब्दानां चतुर्मुखादिविषयत्वमपहस्तितम् । 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुतेः ॥ १५ ॥ १६ ॥

ननु भवतः स्रष्टृत्वाभावे कथं त्वन्नाम लोके ख्यातं वर्तत इत्यतः तं प्रकारं दर्शयति– तस्या-पीति । तद्दृष्टिं प्रतिष्टब्धुं कोऽपि समर्थो नास्तीति ईशस्येति । ईशत्वञ्च वरादिप्राप्तं नेति– निर्विकार-स्येति । एतदपि बलवत्प्रतिबन्धकेनान्यथा न भवतीति– अखिलस्वामिनः इति । एवंविधस्य तस्य हरेः अपिशब्दात् श्रियश्च ईक्षयैव कटाक्षवीक्षणेनैवाभिचोदितः तेन सृष्टः अहं सृज्यं जगत्सृजामी-त्यन्वयः । एवशब्देन सृष्टौ प्रयोजकान्तरं निवारयति ॥ १७ ॥

एवं हरेः मुख्यकर्तृत्वं प्रदर्श्याधुना युगपत् क्रमशोऽपि वेति प्रश्नं परिहरति– सत्वंरजस्तम इति । तेन हरिणा नित्यं गृहीता अपि सत्वं रजस्तम इति त्रयो गुणाः निर्गुणस्य सन्ततं सत्वादिगुण-रहितस्य विभोः मायया इच्छया स्थित्यादिषु निमित्तभूतेषु क्रमशो युगपच्च गृहीता इत्यन्वयः । माययेति विशेषणात् मूलसृष्ट्यादिषु क्रमशः दैनन्दिनसृष्ट्यादिषु युगपद्गृहीता इति विशेषः । तदुक्तं 'नित्यं गृहीताः सत्वाद्याः स्थित्यादिषु विशेषतः । युगपत्क्रमशश्चैवे'ति ॥ १८ ॥

रजोगुणमुपादानीकृत्य सृष्टिं वक्ष्यन्हरेः सत्वादिगुणैः जीवबन्धकत्वमहिमानमाह– कार्येति । पुरुषमिति जातावेकवचनम् । द्रव्यज्ञानक्रियाश्रयाः द्रव्यं तामसाहङ्कारकार्यं शरीरम् । ज्ञानं वैकारिका-हङ्कारकार्यं मनः । श्रोत्रादीन्द्रियाणि च । क्रिया तैजसाहङ्कारकार्यं वागादीन्द्रियजातम् आश्रयो येषां ते

---

१ श्रुतेश्च - ज ख ड ।

स एष भगवाँल्लिङ्गैस्त्रिभिरेतैरधोक्षजः ।
स्वलक्षितगतिर्ब्रह्मन्सर्वेषां मम चेश्वरः ॥ २० ॥

कालं कर्म स्वभावञ्च मायेशो मायया स्वया ।
आत्मन्यदृच्छया प्राप्तं विबुभूपुरुपाददे ॥ २१ ॥

---

तथोक्ताः । एवंविधाः प्रकृतेः सत्वादयो गुणाः अभिनानन्तरेण नित्यदा मुक्तं प्रकृतिसम्बन्धविधुरं मायिनं स्वतो ज्ञानिनं पुरुषं जीवसमुदायं कार्यकारणकर्तृत्वे बध्नन्तीत्यन्वयः । तत्रायं विभागः । तमोगुणः कार्ये शरीरे तद्गतदुःखाद्यनुभवेन बध्नाति । रजोगुणः कर्म[1]कारणैरिन्द्रियैः कारणेषु कर्मसु बध्नाति । सत्वगुणस्तु मनसा ज्ञानेन्द्रियैश्च आन्तरं यत्सुखं अनुभवानीति तत्र कर्तृत्वे बध्नाति । इदमुक्तं भवति । शरीरगतदुःखाद्यनुभवे तमो गुणः । कर्मसु रजो गुणः । अहं सुखीति सुखानुभवे सत्वगुणः कारणम् । गुणानामचेतनत्वेन स्वतः प्रवृत्त्यनुपपत्तेः तन्नियमने मुख्यकारणम् ईश्वरेच्छेति । तदुक्तं 'ज्ञानेन्द्रियैश्च मनसा सत्वं बध्नाति पूरुषम् । रजः कर्मेन्द्रियैर्नित्यं शरीरेण तमस्तथे'त्यादि ॥ १९ ॥

न केवलमेतानि देहेन्द्रियमनांसि बन्धकानि । हरिप्रसादज्ञानमोक्षयोग्यानां मुक्तिसाधकानि चेत्याह– स एष इति । यो 'येन स्वरोचिषा विश्वमि'त्यारभ्य 'कार्यकारणकर्तृत्वे' इत्यन्तेन ग्रन्थेन प्रतिपादितः स एषः अधोक्षजः भगवान् एतैः त्रिभिः देहेन्द्रियमनोभिः लिङ्गैः ज्ञानोपायलक्षणैः यमादिसाधनैः यतमानैः एतैः जीवैः स्वलक्षितगतिः प्रदर्शितस्वरूपो भवति । एतदुक्तं भवति । देहेन्द्रियमनोजयिनः तैरेव साधनैः भगवद्विषयैः तं पश्यन्तीति । 'स्वप्रसादादिनं जीवः पश्येत्तेन स्वलक्षितः' इ[2]ति । अधःकृतेन्द्रियजन्यज्ञानत्वेन मु[3]क्तोऽप्यधोक्षजः स्यात् इत्यतः– सर्वेषामिति । सर्वेषां मुक्तामुक्तानाम् । स्वस्य सर्वान्तर्भावेऽपि नारदस्य विशेषशङ्कापरिहाराय मम चेति विशिष्योक्तम् ॥ २० ॥

त्वय्यं त्वं जानामि सृष्टोऽस्मीतीममर्थं स्पष्टयितुं सृष्टिप्रकारमाह– कालमिति । ब्रह्मज्ञाने मुख्यलक्षणं जगज्जन्मादिकारणत्वमेवेति ज्ञापयितुमित्यतो वा सृष्टिप्रकारमाह– कालमिति । मायेशः लक्ष्मीपतिः परनामस्वनिमेषान्ते सृष्टिकाले प्राप्ते विबुभूषुः बहुधा भवितुकामः अनादित एव आत्मन्

---

१ अयं ड पाठः । अन्यत्र - कर्मकारणेन्द्रियैः ।

२ इति च - क ज ख ड । ३ मुक्तो - कोशान्तरेषु पाठः ।

कालाद्गुणव्यतिकरात्परिणामस्वभावतः ।
कर्मणो जन्म महतः पुरुषाधिष्ठितादभूत् ॥ २२ ॥

महतस्तु विकुर्वाणाद्रजस्सत्त्वोपबृंहितात् ।
तमः प्रधानस्त्वभवद्द्रव्यज्ञानक्रियात्मकः ॥ २३ ॥

---

आत्मनि यदृच्छया स्वेच्छया प्राप्तमेव कालं सृष्टिकालं, कर्म जीवानां नानाविधादृष्टं, स्वभावं सात्त्विकादिलक्षणं, चशब्दात् सगुणत्रयां प्रकृतिं स्वया मायया स्वशक्त्या[1] विशेषत उपाददे इत्यन्वयः । प्रकृतिं प्रविश्य स्वशक्त्या क्षोभयामासेत्युक्तं भवति । 'यत्रान्यहेत्वभावः स्यादीश्वरेच्छादिना विना । तदिच्छा हि यदृच्छा स्यात्तत्र यदृच्छये'ति 'कालकर्मस्वभावादिनित्ययेशेच्छया सदा । प्राप्तमेव विशेषेण सृष्ट्यादावुपयत्यज' इति च । 'ईशो यह्वीः पुरः सृष्ट्वा तत्रैव बहुरूपताम् । तत्तन्नियामकतया प्राप्तुं कालाद्युपाददे' इति वचनेभ्यो न मायामयी सृष्टिरत्रोच्यत इति सिद्धम् ॥ २१ ॥

गुणव्यतिकरात्मकमूलप्रकृतेः महत्तत्वोत्पत्तिप्रकारमाह– कालादिति । यदा सिसृक्षुः विष्णुः कालकर्मस्वभावरजोगुणानाविश्य सृष्ट्ये प्रेरकः, तमोगुणो[2] रजोगुणेन च संयुक्तोऽभूत्, सः गुणवैषम्यात्मको गुणव्यतिकरः । तस्मात् । कालादिति पञ्चमी तृतीयार्थे । कालेन सृष्टिहेतुना । कर्मणः कर्मणा हिरण्यगर्भादृष्टेन तदुपकृतत्वात्[3] । परिणामस्वभावतः इति तसिः । सः[4] तृतीयार्थे । विकारस्वभावया मूलप्रकृत्या च सहितात् । पुरुषाधिष्ठितादिति पुरुषेण विष्णुना अधिष्ठाय क्षोभ्यमाणात् महतः महत्तत्वस्य चतुर्मुखदेहस्थानीयस्य जन्माभूदित्यन्वयः । गुणानां व्यतिरेको विषमावस्था यस्मिन् तस्मादव्यक्तादिति वा । तदुक्तं– 'गुणकालस्वभावेभ्यः ईशेनाधिष्ठितत्वतः । जगदादिमहत्तत्वमभूत्स्वेच्छया हरे'रिति ॥ २२ ॥

तुशब्देन कालादिकमनुकर्षति । कालकर्मस्वभावेभ्यः विकुर्वाणात् रजःसत्त्वोपबृंहितात् सत्त्वेनानुन्यूनरजोगुणेन प्रवृद्धात् महत्तत्वात् तमःप्रधानः तत्वविशेषोऽभवदित्यन्वयः । द्वितीयस्तुशब्दो महत्तत्वमपेक्ष्य तमःप्रधानत्वं नेतरापेक्षया[5] । तदपेक्षया सत्वप्रधान एवेत्यस्मिन्नर्थे । इतोऽपि तमःप्रधानत्वमौपचारिकमिति भावेनाह–द्रव्येति । द्रव्याणि भूतानि ज्ञानं ज्ञानेन्द्रियाणि क्रिया कर्मेन्द्रियाणि च आत्मा स्वरूपं यस्य स तथा ॥ २३ ॥

---

१ स्वमायया स्वशक्त्या - क ज ट  २ अयं ग पाठः । अन्यत्र - तमोगुणेन ।
३ उपकृतात् - ख ङ ग ट । उपक्लृप्तात् - ज ।  ४ स इति ज ख ङ पाठः । अन्यत्र नास्ति ।
५ नेतरात् - ख ङ ।

सोऽहङ्कार इति प्रोक्तो विकुर्वन्समभूत्त्रिधा ।
वैकारिकस्तैजसश्च तामसश्चेति यद्भिदा ॥ २४ ॥

द्रव्यशक्तिः क्रियाशक्तिर्ज्ञानशक्तिरिति प्रभोः ।
तामसादपि भूतादेर्विकुर्वाणादभून्नभः ॥ २५ ॥

तस्य मात्रागुणः शब्दो लिङ्गं यद्द्रष्टृदृश्ययोः ।
नभसोऽथ विकुर्वाणादभूत्स्पर्शगुणोऽनिलः ।
परान्वयाच्छब्दवांश्च प्राण ओजः सहो[2] बलम् ॥ २६ ॥

---

किन्नामकः असौ पदार्थ इति तत्राह- सोऽहङ्कार इतीति । तद्विभागमाह- विकुर्वन्निति । त्रीन्[1] निर्दिशति वैकारिक इति । यस्याहङ्कारस्य भिदा भेदः ॥ २४ ॥

प्रकारान्तरेण तद्भेदमाह- द्रव्यशक्तिरिति । द्रव्यनामकपञ्चभूतोत्पादनशक्तिमत्त्वात् क्रियानामककर्मेन्द्रियजननशक्तिमत्त्वात् तथा ज्ञाननामकज्ञानेन्द्रियजननशक्तिमत्त्वात् मनोदिगादिदेवानाञ्चोत्पत्तिशक्तिमत्त्वात् तस्य अहङ्कारात्मनः प्रभोः तत्त्वस्य द्रव्यशक्तिरित्यादिभेदोऽवगन्तव्यः । तथा चोक्तम्- 'भूतानि द्रव्यनामानि ज्ञानं ज्ञानेन्द्रियाणि चे'त्यादि । द्रव्याद्युत्पादनशक्तिमत्त्वात् द्रव्यादिशक्तिरित्युक्तम् । तं प्रकारमाह- तामसादपीति । अपिशब्दः कालकर्माद्यनुकर्षणार्थः । भूतादेः भूतानां मूलकारणात् ॥ २५ ॥

तस्य आकाशस्य मात्रागुणः पञ्चेन्द्रियैः मेयत्वात् मात्रागुणः शब्दोऽभूत् । तस्मान्नभोऽप्यभूदि[3]त्युक्तिविशेषोऽत्र ज्ञातव्यः । तथा वक्ष्यमाणत्वात् । तत्प्रयोजनमाह- लिङ्गमिति । यच्छब्दरूपं द्रष्टृदृश्ययोः द्रष्टुः हरेः दृश्यस्य विश्वस्य च लिङ्गं ज्ञापकं प्रमाणम् । तदुक्तम्- 'पञ्चेन्द्रियाभिमेयत्वान्मात्रागुण इतीरितः । शब्देनैव परो द्रष्टा ज्ञायते जगदेव चे'ति च । शब्दः क्वचिदाश्रितः गुणत्वादिति च । स्पर्शाख्यो गुणः त्वगिन्द्रियैकग्राह्यः यस्य स तथा । परस्याकाशस्य अन्वयात् संसर्गात् शब्दवान् शब्दगुणोपेतः । वायोर्नैसर्गिकगुणानाह- प्राण इति । सर्वचेष्टयितृत्वात् प्राणः । अभिभवशक्तित्वात् ओजः अवष्टम्भकशक्तेर्वा । अनभिभाव्यत्वात् सहः । स्वेच्छाकरणशक्तिस्वरूपत्वाद्बलम् । तदुक्तम्- 'सर्वचेष्टयितृत्वात्तु प्राणोऽभिभवशक्तितः । ओज इ'त्यादि । 'ओजोऽवष्टम्भबलयोरि'ति यादवः ॥२६॥

---

१ इयं ख ज ङ पाठः । अन्यत्र - त्रीणि ।

२ अत्र सप्तविंशः श्लोकः क पाठे, अष्टविंशः श्लोकः ग पाठे, त्रिंशः श्लोकः ज पाठे पठ्यते ।

३ पश्चान्नभो ङ ।

वायोरपि विकुर्वाणात्कालकर्मस्वभावतः ।
उदपद्यत तेजो वै रूपवत्स्पर्शशब्दवत् ॥ २७ ॥

तेजसस्तु विकुर्वाणादासीदम्भो रसात्मकम् ।
रूपवत्स्पर्शवच्चाम्भो घोषवच्च तदन्वयात् ॥ २८ ॥

विशेषस्तु विकुर्वाणादम्भसो गन्धवानभूत् ।
परान्वयाद्रसस्पर्शरूपशब्दगुणान्वितः ॥ २९ ॥

वैकारिकान्मनो जज्ञे देवा वैकारिका दश ।
दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमित्रकाः ॥ ३० ॥

---

कालकर्मस्वभावतः विकुर्वाणात् वायोः तेजः उदपद्यत उत्पन्नमभूत् । तेजः स्वतो रूपवत् । कारणानुस्यूतत्वात् स्पर्शादिगुणवत् । उपाधिवशात् स्पर्शादिगुणवत्त्वं न स्वत इति वैशेषिककल्पितं स्वकपोलकल्पितमिति दर्शितं वा इत्यनेन ॥ २७ ॥

विकुर्वाणात्तेजस इत्यादौ कालकर्मस्वभावत इत्येतदनुवर्तनीयम् । तदन्वयात् कारणपरम्परान्वयात् रूपस्पर्शवोपवत् । रसगुणः आत्मा स्वरूपं यस्य तत्तथा । रसगुणोत्पत्तिपूर्वकमिति भावः । घोषवत् शब्दवत् ॥ २८ ॥

सर्वे गुणाः पृथिव्यां विशिष्यन्त इति विशेषः पृथिवी । गन्धवानिति गन्धतन्मात्रागुणोत्पत्तिपूर्वकमित्यर्थः । परान्वयात् कारणसंसर्गात् ॥ २९ ॥

वैकारिकाहङ्कारात् सृष्टिप्रकारमाह- वैकारिकादिति । वैकारिकाहङ्कारात् सात्त्विकांशात् मनः अन्तःकरणम् । शब्दज्ञानादिविशिष्टकार्यशक्तित्वात् वैकारिकनामानो देवाः । ते अपि तस्माज्जज्ञिर इति शेषः । तदुक्तम्- 'विशिष्टकार्यशक्तित्वाद्देवा वैकारिकाः स्मृताः' इति । न्यूनाधिकसंख्याव्यवच्छेदार्थं दशेति । तेषां नामसङ्कीर्तनं करोति- दिग्वातेति । प्रचेता वरुणः । अश्विनावित्यश्विनौ । उपेन्द्रो विष्णुः । तस्य न पादाभिमानित्वम् । किन्तु पादाभिमानिनो यज्ञनाम्नो देवस्यान्तर्यामित्वेन पादाङ्गुष्ठमधिष्ठाय शरीरधारकत्वात्तन्नामकीर्तनम् । 'अनाद्यनन्तोऽपि हरिर्वैकारिकगुणेष्वजः । अवतीर्णः पदाङ्गुष्ठमध्यास्ते विश्वभुग्विभुः' इत्यादेः । को दक्षप्रजापतिः ॥ ३० ॥

---

१ अयं इ ट पाठः । अन्यत्र - परान्वयात् । २ कारन संसर्कात् ड । कारणसंसर्गात - क ।

तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन् ।
ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणस्तु तैजसः ॥ ३१ ॥

श्रोत्रत्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायवः ।
य एतेऽसङ्गताभावा भूतेन्द्रियमनोगुणाः ।
यदायतननिर्माणे न शेकुर्ब्रह्मवित्तम ॥ ३२[4] ॥

---

तैजसाहङ्कारकार्याणि किमिति नोच्यन्त इति । पक्कं भक्षयेति भावेनाह[1]– तैजसादिति । अत्रापि कालाद्यनुकर्षः कर्तव्यः । तेषां शक्तिवैषम्यात् क्रोडीकारेण विभागमाह– ज्ञानशक्तिरिति । अचेतनानामिन्द्रियाणां ज्ञानादिजनकत्वं कथं घटते इति तत्राह– बुद्धिरिति । ज्ञानेन्द्रियाणां ज्ञाने ज्ञानजनने शक्तिः यस्याः सा ज्ञानशक्तिः बुद्ध्यभिमान्युमा[2] बुद्धिः, कर्मेन्द्रियाणां क्रियायां क्रियाजनने शक्तिः यस्य सः क्रियाशक्तिः प्राण आहङ्कारिकश्च तैजसः तैजसाहङ्कारादुत्पन्नावित्यर्थः । 'ज्ञानेन्द्रियाणां देवानां ज्ञानशक्तिरव्याहते'त्यादावुर्दीर्यमाणदेवानां ज्ञानादिशक्तिरपि बुद्धिप्राणयोः प्रसादादित्यवगन्तव्यम् । इन्द्रियाणां तैजसामिवानं अतिजाज्वल्यमानत्वात् । भूतानां तामसत्वञ्च ज्ञानक्रियाशक्त्योरभावात् । तदुक्तम्– 'अतिजाज्वल्यमानत्वात्तैजसानीन्द्रियाण्यपी'त्यादि । भूतानां द्रव्यत्वञ्च द्रवणप्राप्यनिमित्तम् । अहं पूर्वमहं पूर्वमिति विवदमानयोरिव स्थितयो द्वयोः पृथिव्यपोः[3] वायुतेजसोर्वा वेगलक्षणसंस्कारसंपर्कात् मिथोद्रवणं युज्यते । आकाशस्य व्याप्तत्वेन द्रवणाभावेऽपि प्रदेशात्मना तत्संभवात् द्रव्यत्वं युक्तम् । तदुक्तम्– 'द्रव्यं तु द्रवणप्राप्यं द्वयोर्विवदमानयोः । पूर्वं वेगाभिसम्बन्धादाकाशश्च प्रदेशत' इति ॥३१॥

इन्द्रियाणां विशेषनामान्याह– श्रोत्रेति । त्वक् त्वगिन्द्रियम् । दोषौ हस्तौ । मेढ्रं गुह्येन्द्रियम् । बाह्यसृष्टिमुक्त्वा तेभ्यस्तत्त्वेभ्यो ब्रह्माण्डसृष्टिप्रकारमाह– य एत इति । ये एते कथिताः । भूतेन्द्रियमनोगुणा इत्युपलक्षणम् । पञ्चभूतदशेन्द्रियतैजसबुद्धिप्राणमनःशब्दादिसत्वादिगुणमहदहङ्काराख्याः भावाः पदार्थाः अन्योन्यमसङ्गताः असंश्लिष्टाः यदा आयतननिर्माणे ब्रह्माण्डकरणे न शेकुः शक्तिमन्तो नासन् ॥

---

१ इयमवतारिका ड कोशस्था । अन्यत्र नास्ति । २ बुद्धिमानिन्युमा - ड ।
३ अप्पृथिव्योः - ञ ड । ४ अत्र त्रयस्त्रिंशः श्लोकः षड्पादः ज ग ड पाठेषु ।

तदा संहत्य चान्योन्यं भगवच्छक्तिचोदिताः ।
सदसत्त्वमुपादाय नो भयं ससृजुर्ह्यदः ॥ ३३ ॥

वर्षपूगसहस्रान्ते तदण्डमुदकेशयम् ।
कालकर्मस्वभावस्थो(ऽ)जीवो(ऽ)जीवमजीजनत् ॥ ३४ ॥

---

तदा भगवन्तमभिगम्य शरणं गताः । ततः स्तुतिप्रसन्नस्य तस्य चेष्टकरूपेण तं गणं प्रविष्टस्य हरेः शक्त्या चोदिताः मिथः संहत्य संश्लिष्य सदसत्त्वं व्यक्ताव्यक्तत्वधर्मवत् पृथिव्यादिभूतत्रयं आकाशवाय्वाख्यभूतद्वयञ्च उपादाय उपादानीकृत्य नः अस्माकं संसारभयजनकं अदः ब्रह्माण्डं ससृजुरित्यन्वयः । 'नोभयं सदसद्विलक्षणमि'त्येतत् अयुक्तम् । 'यतः सत्यत्वं प्रत्यक्षादिप्रमाणसिद्धम्. अत' इति हेतुवादिनो हिशब्दात् । ब्रह्माण्डे संसारः 'अतोण्डं भयकारणमिति' भयहेतुत्वं वा हिशब्देन प्रतीयते । तदुक्तम्– ब्रह्माण्डं हि वदन्ति जीवानां भयकारणम् । तत्र हि संसृतिरिति । 'आकाशवायू त्वव्यक्तौ इतरेऽण्डे प्रकाशिताः' इत्यादेः भूतानां सदसत्त्वं युक्तम् ॥ ३२ ॥ ३३ ॥

ब्रह्माण्डान्तःसृष्टिं वक्तुं हरेस्तत्र व्यक्तिप्रकारमाह– वर्षपूगेति । कालचुद्बोधकत्वेन कालकर्म स्वभावस्थः अजीवः संसारिव्यतिरिक्तः परमेश्वरः सहस्रवत्सरमुदकेशयं आवरणजलमध्ये स्थितं तदण्डं वर्षपूगसहस्रान्ते तैः तत्त्वैः सह प्रविश्य तदण्डं यथा स्वात्मानं प्रसूते तथा परिवृंह्य अजीवं स्वात्मानं तत्राजीजनत् व्यञ्जयामास । 'यः प्राणधारणं प्राणप्रसादात्कुरुतेऽनिशम् । स जीव इति सन्दिष्टः' इत्यादेः 'अजीव' इत्येव पदच्छेदः । 'कालकर्मस्वभावस्थो वासुदेवः परः पुमान् । अकरोदण्डमुद्बुद्धमात्मप्रसवकारणम् इति वचनात् 'अजीवम्' इत्येव ।

यद्वा जीवः प्राणधारकः परमात्मा, जीवं तथाविधार्थं स्वात्मानं तत्राजीजनदिति । प्राणान्धारयते यस्मात्स जीवः परमेश्वर' इति च ।

---

१ ततस्तुति - ख ज ड ।

२ अयं ख ड पाठः । अन्यत्र नास्ति । ३ वाचिनोहि - क ग ज ट छ । वाचि हि - ड ।

४ अयं ख ड छ पाठः । अन्यत्र - 'वदन्तीति' इति पाठः । ब्रह्माण्डं वसन्ति इति हिकाररहितपाठः - ड ।

५ अव्यक्त - ख ड । ६ अयं ख ड ज पाठः । अन्यत्र - परिवृत्य ।

७ अयं छ ज क ग पाठः । अन्यत्र - अजीव ।

स एष पुरुषस्तस्माद्ण्डं निर्भिद्य निर्गतः ।
सहस्रोर्वङ्घ्रिबाह्वक्षिः सहस्राननशीर्षवान् ॥ ३५ ॥

यस्येहावयवैर्लोकान् कल्पयन्ति मनीषिणः ।
ऊर्वादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः ॥ ३६ ॥

पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः ।
ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रो व्यजायत ॥ ३७ ॥

---

[1]जीवादत्युद्रिक्ततेजस्त्वादजीवः । जगज्जीवनहेतुत्वाज्जीवः इति हेतुद्वयादिदं युक्तञ्च । 'अजीवोऽपि महातेजास्त्वथवा जीवयञ्जगदि'तिवचनात् ।

यद्वा अजीवः परमेश्वरः जीवं सर्वजीवप्रधानं चतुर्मुखमुत्पाद्य तदन्तर्यामित्वेन प्राणधारकं स्वात्मानमजीजनत् । विरिञ्चस्यापि विराडाख्याण्डान्तर्वर्तित्वजननस्यात्राभिप्रेतत्वात् । तदुक्तम्– 'अण्डे जातौ पुमांसौ द्वौ हरिर्ब्रह्मा तथैव चे'त्यादि ॥ ३४ ॥

तामेवाभिव्यक्तिं स्फुटीकरोति– स एष इति । अयमर्थः- यो महदादितत्त्वानि सृष्ट्वा तदन्तः-प्रविष्टः[2] तदुपादानतया अण्डं निर्माय तदन्तः प्राविशत् स एषः पुरुषः करचरणाद्यवयववत्त्वेन पुरुषनामा हरिः अण्डं निर्भिद्य बृंहयित्वा तस्मादण्डात् निर्गतः प्रकाशितोऽभूत् । पुरुषत्वेऽपि लोकविलक्षणोऽय-मितिभावेन विशिनष्टि- सहस्रेति । अत्र सहस्रशब्दस्य यथासम्भवमर्थो वक्तव्यः ॥ ३५ ॥

पुरुषाख्यविष्णोरवयवेभ्य एव चतुर्दशभुवनसृष्टिः अन्येभ्यस्त्वनुपत्येति भावेनाह– यस्येति । इह पञ्चाशत्कोटिविस्तीर्णब्रह्माण्डे आयामतो विस्तारतस्तावत् विपुलानन्दादिदेहत्वेनावतीर्णस्य चतुर्दश-भुवनेभ्यो अण्डाच्च भिन्नस्य पुरुषाख्यस्य हरेः अवयवैर्निमित्तकारणैः मनीषिणः चतुर्दशलोकान् सृष्टान् कल्पयन्तीति बलात् तस्मात् तत्सृष्टेः ज्ञानिप्रत्यक्षसिद्धत्वात् अन्यतः सृष्टिरमुख्येति भावः । 'हरेरव-यवैर्लोकाः सृष्टा इति विकल्पनमि'त्यादेश्च । तत्सृष्टिकल्पनाप्रकारमाह– ऊर्वादिभिरिति । ऊर्वादिभिः पादतलान्तैरवयवैरतलादिपातालान्ताः सप्तलोकाः निर्मिताः । जघनादिभिः मूर्धान्तैरवयवैः ऊर्ध्वं पृथिव्यादिसत्यान्ताः सप्तलोकाः सृष्टा इति ॥ ३६ ॥

इदानीं पुरुषस्य मुखाद्यङ्गेभ्यो ब्राह्मणादिजातिजनिमाह– पुरुषस्येति । 'ब्राह्मणो मुखमित्येव मुखाज्जातत्वहेतुतः' इत्यादेः मुखमित्यादिप्रथमा पञ्चम्यर्थे । प्रमाणान्तरगवेषणायासो न कर्तव्यः ।

---

१ अत्र एतत्पूर्वं । यद्वा जीवः परमात्मा अजीवं स्वात्मानमजीजनदि'ति त्रुटितं भाति ।

२ तदाविष्टः - ट । तदन्ताविष्टः - ख ङ ग छ ण ।

भूर्लोकः कल्पितः[1] पद्भ्यां भुवर्लोकोऽस्य नाभितः ।
हृदा स्वर्लोक उरसा महर्लोको महात्मनः ॥ ३८ ॥

ग्रीवायां जनलोकश्च तपोलोकोऽस्य[2] नेत्रयोः ।
मूर्धभिः सत्यलोकस्तु ब्रह्मलोकः[3] सनातनः ॥ ३९ ॥

तत्कट्यां[4] चातलं कॢप्तमूरुभ्यां वितलं विभोः ।
जानुभ्यां सुतलं कॢप्तं जङ्घाभ्यान्तु तलातलम् ॥ ४० ॥

महातलन्तु गुल्फाभ्यां प्रपदाभ्यां रसातलम् ।
पातालं पादतलतः इति लोकमयः पुमान् ॥ ४१ ॥

भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकस्तु नाभितः ।
स्वर्लोकः कल्पितो मूर्ध्नि इति वा लोककल्पना ॥ ४२ ॥

इति श्रीमद्भागवते द्वितीयस्कन्धे पञ्चमोऽध्यायः ॥

---

अत्रैव दर्शनादिति भावेनाह– ऊर्वोरिति । अनेन पुरुषनाम्नो हरेः यथा मुखाद्यङ्गेभ्यो ब्राह्मणादि-जात्युत्पत्तिः एवं लोकसृष्टिरपि तदङ्गेभ्यः सिद्धा । नान्यतः । ३७ ॥

तामेव सृष्टिं प्रपञ्चयति– भूर्लोक इति । भूरिति भूमेः अव्ययं नामान्तरम् । भूर्लोकः पद्भ्यां जात इति कल्पित[6] इत्यन्वेतव्यम् । भु रित्यन्तरिक्षलोकः । इदम्[5] अप्यव्ययम् । जघनपादयोः सामीप्यात् जघनादिभिरित्यनेन न विरोधः । कट्योर्जघनान्तर्भावेऽपि ऊर्वोः तत्सामीप्यात् ऊर्वादिभिरित्यस्य अविरोध इति ॥ ३८ ॥ ३९ ॥ ४० ॥

उपसंहरति इतीति । यत एवं हरेः लोकनिर्मातृत्वं लोकाधारत्वं लोकव्याप्तत्वं लोकोचितत्वम्, अतो वैराजाख्यो विष्णुः लोकमय इत्युपासीतेति शेषः ॥ ४१ ॥

प्रकारान्तरेण पुरुषावयवेभ्यो लोकसृष्टिप्रकारमाह– भूर्लोक इति । अत्र अतलादीनां भून्यन्त-र्भावेन महरादीनां स्वर्लोकान्तर्भावेन त्रिलोकविवक्षा ज्ञेया । अतो नोक्तविरोधः । अत्रेदं तात्पर्यमुक्तं भवति । चतुर्दशलोकपक्षस्त्वेकः । सप्तलोकपक्षस्त्वपरः । त्रिलोकपक्षस्त्वन्यः । अविकारिनिंदेन ध्यानार्थत्वात्कल्पनायाः । ततो विकल्प उपपन्न इति ॥ ४२ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां द्वितीयस्कन्धे पञ्चमोऽध्यायः ॥

---

१ कल्प्यते - ज । २ जनलोकस्तु तपोलोकश्च - ज ग ह ट क । ३ ब्राह्मो - ज ।
४ कटिभ्यां - ज । ५ शुद्धम् - ग क ह ट । ६ कल्प्यते - ह ।

## ॥ अथ षष्ठोऽध्यायः ॥

ब्रह्मोवाच —

वाचो वह्निर्मुखं क्षेत्रं छन्दसां सप्तधातवः ।
हव्यकव्यामृतान्नानां जिह्वा सर्वरसस्य च ॥ १ ॥

सर्वासूनाञ्च वायोश्च तन्नासे परमायने ।
अश्विनोरोषधीनाञ्च घ्राणो गन्धस्य चैव हि ॥ २ ॥

---

## ॥ अथ षष्ठोऽध्यायः ॥

आध्यात्मिकाधिदैविकाधिभौतिकादिरूपस्य जगतो हरेर्मुखादिभ्य उत्पत्तिः तस्य ततो भिन्नत्वं तदुत्तमत्वं प्रतिमावद्रू[1]पत्वञ्च प्रतिपाद्यतेऽस्मिन्नध्याये । तत्र प्रथममध्यात्मेन्द्रिय[2]तदभिमानिदेवतादिसर्वपदार्थानां तदङ्गेभ्य उत्पत्तिप्रकारमाह— वाच इत्यादिना । वाचो वागिन्द्रियस्य वक्तव्यस्य च तदभिमानिनो वह्नेः अग्निदेवस्य च पुरुषस्य मुखं क्षेत्रं योनिः कारणम् उत्पादकमित्यर्थः । 'क्षेत्रं पुरे गृहे देहे केदारे योनिभार्ययोरि'ति । 'योनिः स्त्रीणां भगे स्थाने कारणे ताम्रके पण' इति च यादवः । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीसंज्ञानां सप्तानां छन्दसाम् अस्य पुरुषस्य त्वक्चर्ममांसरुधिरमेदोमज्जास्थ्याख्याः सप्त धातवः क्षेत्रमित्यनुवर्तते । अत्र तदुत्पन्नत्वं तदाश्रितत्वञ्चेति तात्पर्यम् उत्तरत्राप्यनुसन्धेयम् । हव्यादिसर्वान्नानां जिह्वेन्द्रियस्य च कषायमधुरादिसर्वरसस्य च तस्य पुरुषस्य जिह्वा क्षेत्रम् ॥ १ ॥

सर्वासूनां सर्वप्राणानां मुख्यवायोश्च तन्नासे तस्य हरेः नासा[3]पुटे क्षेत्रे परमायने च उत्तमाश्रयणे च । अभिमानिनोरश्विनोः व्रीह्याद्योषधीनाञ्च घ्राणेन्द्रियस्य च गन्धस्य सुरभ्यसुरभिलक्षणस्य च तस्य घ्राणः क्षेत्रम् । नपुंसकस्य घ्राणस्य पुंशक्तिमत्त्वद्योतनाय घ्राण इत्युक्तम् । 'क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिके'त्यमरः ॥ २ ॥

---

१ प्रतिमावद्रूपत्वं च - ट ञ ङ ग छ । प्रतिमादे रूपत्वं - क । अस्य जगतः प्रतिमात्वम् रूपत्वमित्यर्थः ।
२ अध्यात्मस्थेन्द्रिय - ग ट ञ क ङ । अध्यात्मरूपेन्द्रिय ञ । ३ नासिकापुटे - ङ ।

रूपाणां तेजसां चक्षुर्दिवः सूर्यस्य चाक्षिणी ।
कर्णौ दिशाश्च तीर्थानां श्रोत्रमाकाशशब्दयोः ॥ ३ ॥

तद्गात्रं वस्तुसाराणां सौभाग्यस्य च भाजनम् ।
त्वगस्य स्पर्शवायोश्च सर्वमेधस्य चैव हि ॥ ४ ॥

रोमाण्युद्भिज्जजातीनां यैर्वा यज्ञस्तु संभृतः ।
केशश्मश्रुनखान्यस्य शिलालोहाभ्रविद्युताम् ॥ ५ ॥

---

चक्षुरिन्द्रियस्य तद्विषयाणां च रूपाणां, विषयप्रकाशकानां च तेजसां ज्योतिषां हरेः चक्षुः क्षेत्रम् । दिवः द्युलोकस्य, अभिमानिनः सूर्यस्य च हरेः अक्षिणी चक्षुर्गोलके क्षेत्रमिति शेषः । दिशां दिग्देवतानां, तीर्थानां शास्त्राणाञ्च हरेः कर्णौ क्षेत्रम् । 'तीर्थं मन्त्राद्युपाध्याये शास्त्रेष्वम्भसि पावन' इत्यभिधानम् । श्रोत्रेन्द्रियस्य तद्विषयस्य शब्दस्य आकाशस्य च हरेः श्रोत्रेन्द्रियं कारणम् ॥ ३ ॥

वस्तुसाराणां वस्तुश्रेष्ठानां वस्तुबलानां वा सौभाग्यस्य च तस्य हरेः गात्रं उत्पादकं, भाजनं निधानं निधानपात्रञ्च[1] । त्वगिन्द्रियस्य स्पर्शगुणस्य स्पर्शाभिमानिनो वायोः सर्वमेधस्य सर्वयज्ञस्य च अस्य हरेः त्वगिन्द्रियं क्षेत्रम् ॥ ४ ॥

यैः उद्भिज्जजातिविशिष्टैः पलाशादिवृक्षैः[2] यज्ञः सम्भृतः सम्पादितः[3] । यज्ञकारिभिरिति शेषः । तेषां उद्भिज्जजातीनां वृक्षाणां हरेः रोमाणि रोममूलानि[4] क्षेत्रम् । यैः अयज्ञः सम्भृतः, यज्ञात् अन्यः कार्यविशेषः साधितः, तेषां हरेः रोमान्तर्भागाः । अयं विकल्पो वाशब्दसूचितात् 'याज्ञिका रोममूलस्था रोमान्तस्थास्तु तत्हरे' इति वचनात् ज्ञायते । तुशब्द उक्तार्थावधृतौ वर्तते । अस्य हरेः केशाः अभ्राणां, श्मश्रूणि विद्युतां, शिलालोहानां नखानि क्षेत्रम् । 'पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियामि'त्यमरः । 'हरेः श्मश्रवाश्रया विद्युच्छिलालोहा नखाश्रयाः' इति वचनात् ॥ ५ ॥

---

१ भाजनं निधानं पात्रं च - । भाजनं निधानपात्रं च - म ड । २ पालाशादि - ख ज ठ छ ग क ट ङ ड । ३ साधितः - ख ज ड । ४ वृक्षाणां रोमाणि हरेः रोममूलानि - क ट ।

ब्राह्वो लोकपालानां प्रायशः क्षेमकर्मणाम् ।
विक्रमो भूर्भुवःस्वश्च क्षेमस्य शरणस्य च ।
सर्वकामवरस्यापि हरेश्चरण आस्पदम् ॥ ६ ॥

अपां वीर्यस्य सर्गस्य पर्जन्यस्य प्रजापतेः ।
पुंसः शिश्न उपस्थन्तु प्रजात्यानन्दनिर्वृतेः ॥ ७ ॥

पायुर्यमस्य मित्रस्य परिमोक्षस्य नारद ।
हिंसाया निऋतेर्मृत्योर्निरयस्य गुदः स्मृतः ॥ ८ ॥

---

ब्राह्मणवैश्यादीन् वर्जयितुं प्रायश इत्युक्तम् ॥ भूर्भुवः स्वरिति भुवनत्रयमस्य हरेः विक्रमः पादविक्षेपस्थानम् । क्षेमस्य मङ्गलस्य प्राप्तरक्षाया वा, शरणस्य मोक्षस्य च, सर्वकामवरस्य च सर्वाभिमतलाभस्य च हरेः चरण आस्पदम् । दातृत्वेनेति शेषः । 'मोक्षः शान्तिश्च शरणं निर्वाणञ्चाभिधीयत' इति वचनात् शरणं मोक्षः । 'भेजे खगेन्द्रध्वजपादमूलमि'त्यतो मोक्षोपि पादमूलमिति भावः । 'स्वोत्पत्यङ्गेषु देवानां अन्येषां पादमूलतः । मुक्तिस्तु विहिता विष्णोर्निर्दिष्टेषु यथा वचः' इति वचनात् च शब्दसूचितान्नोक्तविरोधः ॥ ६ ॥

अपां जलस्य वीर्यस्य रेतसः, सर्गस्य सृष्टेः, जलाभिमानिनः पर्जन्यस्य, सर्गाभिमानिनो दक्षप्रजापतेः, शिश्नस्य च परस्य पुंसः शिश्नः[1] क्षेत्रम् । प्रजातिः प्रजननं आनन्दः सुखं ताभ्यां सहितायाः निर्वृतेः'[2] अथवा प्रजातिः मैथुनक्रिया तन्निमित्तादानन्दात् या निर्वृतिः तस्याः हरेः उपस्थः गुह्येन्द्रियं तुशब्दात् गुह्येन्द्रियस्य च क्षेत्रम् ॥ ७ ॥

[3]मित्रनाम्नो देवस्य पाय्विन्द्रियस्य तद्विषयस्य परिमोक्षस्य गुदक्रियाविशेषस्य यमनाम्नो देवस्य[4] च पुंसः पाय्विन्द्रियं क्षेत्रमित्येतत् मन्दमतीनां सुबोधार्थमन्वीयते[5] । हिंसादीनां पुंसो गुदः अपानद्वारं क्षेत्रम् ॥ ८ ॥

---

१ शिश्न - क ज । २ सहिता या निर्वृतिः - ज ह क ठ ग छ ।
३ एतत्पूर्वं 'यमस्ये'ति मूलकोशे ज ट ड कोशेषु चाधिकः पाठः । ४ अयं क ग ट ज ह पाठः । मूलकोशे 'यमनाम्नो देवस्ये'ति नास्ति । ख कोशे तु 'पुरुषनाम्नः पुंस' इति पाठः । ५ अन्वीयते - ज ट ।

पराभूतेरधर्मस्य तमसश्चापि पश्चिमः ।
नाड्यो नदनदीनान्तु गोत्राणामस्थिसंहतिः ॥ ९ ॥

अव्यक्तरससिन्धूनां भूतानां निधनस्य च ।
उदरं विदितं पुंसो हृदयं मनसः पदम् ॥ १० ॥

धर्मस्य मम तुभ्यञ्च कुमाराणां भवस्य च ।
विज्ञानस्य च तत्त्वस्य परस्यात्मा परायणम् ॥ ११ ॥

---

पराभूतेः पराजयस्य अलक्ष्म्या वा अधर्मस्य पापस्य तदभिमानिनः अधर्मस्य कलेश्च तमसः तमो गुणस्य च पुंसः पश्चिमः पृष्ठभागः क्षेत्रम् । नदनदीनां शोणगङ्गादिना, तुशब्दात् इतरनदीनां च पुंसो नाः क्षेत्रम् । गोत्राणां पर्वतानां हरेः अस्थ्नां संहतिः क्षेत्रम् ॥ ९ ॥

अव्यक्तस्य मूलप्रकृतेः । रसानां मधुरादीनाम् । सिन्धूनां समुद्राणां[1] । भूतानां जीवानां निधनस्य च संहारस्य च पुंसः उदरं क्षेत्रमिति विदितम् । मनसः परस्य हृदयं पदं[2] क्षेत्रम् ॥ १० ॥

धर्मस्य सुकृतस्य तदभिमानिनो धर्माख्यदेवस्य, चतुर्मुखनाम्नो मम, तुभ्यं तव, कुमाराणां सनकादीनां[3] चतुर्णां, भवस्य रुद्रस्य च, विज्ञानस्य तत्त्वस्य च, तदभिमानिन्याः सरस्वत्याश्च परस्य पुंसः आत्मा मध्यदेहः परायणम् । 'कुमार ब्रह्मरुद्राद्याः हरेर्मध्यात्समुद्गताः' इत्यनेन 'आत्मा जीवे धृतौ देहे' इत्याद्यभिधानमपविद्धम्[4] ॥ ११ ॥

---

१ जीवानामिति कोशान्तर पाठः । मूलकोशे नास्ति ।

२ पदमिति कोशान्तरपाठः । मूलकोशे नास्ति ।

३ सनत्कुमारादीनां - ड ।

४ अयं ख ड पाठः । अभिधानेनापि सिद्धम् - मूलकोशे क ग ट ठ ड थ कोशेषु च । मूलधृतपाठस्य तात्पर्यं आत्मशब्दस्य मध्यदेहार्थत्वे 'आत्मेति मध्यदेहश्च सर्वदेहोपि वा भवेदि'ति कोश उदाहृतः । अन्ये कोशाः केवलं सर्वदेहपरा उपलभ्यन्ते । अतस्ते अत्र न ग्राह्या' इति भावः ।

अहं भवान् भवश्चैव य इमे मुनयोऽग्रजाः ।
सुरासुरनरा नागाः खगा मृगसरीसृपाः ॥ १२ ॥

गन्धर्वाप्सरसो यक्षा रक्षोभूतगणोरगाः ।
पशवः पितरः सिद्धा विद्याध्राश्चारणाद्रुमाः ॥ १३ ॥

अन्ये च विविधा जीवा जलस्थलनभौकसः ।
ग्रहर्क्षकेतवस्तारास्तडितः स्तनयित्नवः ॥ १४ ॥

सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत् ।
तेनेदमावृतं विश्वं वितस्तिमधितिष्ठता ॥ १५ ॥

स्वधिष्ण्यं प्रतपन्प्राणो बहिश्च प्रतपत्यसौ ।
एवं विराजं प्रतपंस्तपत्यन्तर्बहिः पुमान् ॥ १६ ॥

---

सृजामि तन्नियुक्तोऽहमिति यत्सर्वस्वातन्त्र्यं हरेरुक्तं तत्पुरुषसूक्तसंवादेन विवृणोति– **अहं भवानित्यादिना** । अग्रजा मुनयः सनकादयः । घटादिवन्न भातीति नभः आकाशः अकारान्तोप्यस्ति[1] । यदेतदसदादिकं आतृणं भूतं भव्यं भवन् जगत् एतस्माद्धरेरुत्पन्नं तदिदं सर्वं पुरुष एव पुरुषाधीन-सत्ताद्येव । त्रिकालमपि तदधीनमेव । न तु तेनैकीभूतम् । 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इति वचनात् । यद्वा पुरुष एवेदं पुरुषेणैवेदं व्याप्तं । 'पुरुष एवेदं सर्वं यद्भूतं...... पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यमिति पुरुषेणैवेदं व्याप्तं आतृणात्कोशात् सर्वं भगवानिति मिथ्या दृष्टिरेषा' इति श्रुतेः । तामेव व्याप्तिं स्पष्टीकरोति– **तेनेदमिति** । वितस्तिमात्रं जीवहृदयं अधितिष्ठाता तेन पुरुषेण । 'सर्वं पुरुष एवेति भण्यते भेदवज्जगत्' । वितस्तिमात्रं हृदयमास्थाय व्याप्नुते जगदित्यादेः सर्वं सिद्धम् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

हृदयोपाध्यवच्छिन्नस्य हरेः जीववैलक्षण्यमाह– **स्वधिष्ण्यमिति** । 'तपसन्तापदर्शनयोरिति' धातोः स्वधिष्ण्यं स्वस्थानं हृदयं[2] स्थित्वा अन्तः सर्वं प्रतपन् पश्यन् असौ प्रकृष्टचेष्टायोगात्प्राणनाम परमात्मा देहाद्बहिश्च बहिष्ठान् विषयानपि प्रतपति पश्यति । एवं विराजं विराजाख्यांण्डं[3] तदन्तः-स्थितान् सर्वपदार्थान् प्रतपन् पश्यन् बहिः ब्रह्माण्डाद्बहिष्ठान् विशेषादिमूलप्रकृत्यन्तान् सर्वान्

---

१ न भवति - क ग ङ ज । 'नभौकसः' इत्यनुरोधेन अकारान्तनभशब्दनिर्वचनं कृतम् ।
२ स्वस्थानदेहहृदयं - ख ङ । स्वस्थाने देहे हृदयं - छ । ३ विरालाख्याण्डान्तःस्थान् - ङ ।

सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात् ।
महिमैष ततो ब्रह्मन्पुरुषस्य दुरत्ययः ॥ १७ ॥

पादोऽस्य सर्वभूतानि पुंसः स्थितिविदो विदुः ।
अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु ॥ १८ ॥

---

पदार्थान् अशेषविशेषाकारेण तपति पश्यति । 'पश्यन् स्वविण्यं देहं स बहिष्ठान्विषयानपि । एवं मण्डान्तरं पश्यन् बहिः सर्वञ्च पश्यति ।' इति वचनात् ॥ १६ ॥

नन्वस्तु अमुक्तप्रपञ्चाद्वैलक्षण्यम् । मुक्तप्रपञ्चवैलक्षण्यं कुत इति तत्राह- **स इति** । सः पुरुषः अभयस्य जननादि भयरहितस्य अमृतस्य अनन्तमुक्तसमुदायस्य ईशः स्वामी । सर्वाभीष्टदानेनेति शेषः । आत्मनोऽन्नं भोग्यं नित्यमुक्तलक्ष्मीतत्त्वं तदभिन्नमन्यन्नानमव्यक्तं जडं तत्कार्यं मर्त्यं देहनाशादिना विनाशिनं महदादितत्त्वाभिमानिनं ब्रह्मादिसर्वजीवसमुदायं तानि तत्त्वानि[1] च अत्यगात् अनाद्यनन्तकालत्व इति शेषः[2] । नानैकान्तिकोऽयं हेतुरिति भावेनाह- **महिमेति** । ब्रह्मादितत्त्वं पक्षान्तर्भूतमिति यत् तत इति । 'अव्यक्तमात्मनोऽन्नञ्च महदादि विनाशि च । यदतीतः परो विष्णुः स एवातो विलक्षणः' इति स्मृतेः ॥ १७ ॥

जीवानां परमात्मांशत्वात् कथं दुरत्ययत्वं महिम्नः इति तत्राह- **पाद इति** । स्वरूपांशो भिन्नांश इति द्विविधांशो हरेरस्ति । तत्र सर्वभूतानि सर्वजीवाः अस्य पुरुषस्य पादः भिन्नांश इति स्थितिविदः सर्वस्य यथावत् स्थितिज्ञाः विदुः[3] । अतः खद्योतस्य कालाग्न्यंशत्वेपि तन्महिमात्ययत्वं यथा नास्ति प्रमाण विरुद्धत्वात् एवं जीवानामपीति भावः । तर्हि स्वरूपांशाः के कुत्र सन्तीति तत्राह- **अमृतमिति** । अमृतं अनन्तासनाख्यं, क्षेमं वैकुण्ठाख्यं, अभयं श्वेतद्वीपाख्यमिति पुरत्रयं त्रिमूर्ध्नः हरेः त्रिषु मूर्धसु अधायि धृतम् । रूपान्तरेणेति शेषः । नन्दनेन प्रश्नपरिहारः कथमागतः इत्यस्यापि इदमेवोत्तरम् । तथाहि- त्रि-विधाः मुरः जीवाः तान् धत्ते इति त्रिमूर्धा । तस्य हरेः अमृतं अनन्तगतं रूपं अनन्तासनमिति यावत् ।

---

१ तत्वादीनि - क ग ठ छ ण ड ण । २ अयं ग ग छ ज्ञ पाठः । मूलकोषेतु - 'तत्वानि च अनाद्यनन्त-कालत्वोऽत्यगादिति शेषः । यत् तत्त इति शेषः । तत्वानिचानाद्यनन्तकालत्वोऽत्यगादिति सनस्मादिते देवः- ड ।
३ अविदुः - ड । एतत्पाठे मूलश्लोके स्थितिविदो विदुरित्यत्र अकारप्रश्लेषः कार्यः।

पादास्त्रयो बहिस्त्वाप्रजानां य आश्रयाः ।
अन्तस्त्रिलोक्यास्त्वपरो गृहमेधैर्बृहद्व्रतः ॥ १९ ॥

---

अमि अनन्ते ऋतं गतं रूपमिति[1] । 'अनन्तं[2] विदुर्बुधा' इत्येकाक्षरमालायाम् । विकुण्ठनाम्नोऽपमृत्युलक्षणं क्लेशं क्षिणोतीति क्षेमं वैकुण्ठाख्यं । भा-दीप्ताविति धातोः दीप्तिविरोधित्वात् अभानि जलानि याति आप्नोति आश्रयत्वेनेति[3] अभयं नारायणाख्यं इति रूपत्रयं एषु त्रिषु मूर्धसु उत्तमेषु बहुलक्ष्योच्छ्रितिषु अधायि निहितम् । तस्मादनन्तासनवैकुण्ठनारायणाः स्वरूपांशाः एषु लोकेषु सन्तीति भावः । तदुक्तम्— 'स्वरूपांशो विभिन्नांश इति द्वेधांश इष्यते' इत्यादि । 'त्रिमूर्धा सन् हरिर्धत्ते ध्रुवत मूर्धभिस्त्रिभि'रित्यादिना 'ब्रह्मविष्णुमहेश्वरात्मना त्रयो मूर्धानो यस्य स त्रिमूर्धा तस्य मूर्धसु सत्यवैकुण्ठकैलासाख्यस्थानेषु तेषामेव नामान्तरविशिष्टं अमृतमित्यादिरूपत्रयमधायी'त्यपव्याख्यानमपहस्तितम् ॥ १८ ॥

ते च लोका त्रिलोक्या बहिरेवेत्याह— पादा इति । पादयन्ति प्रापयन्त्यात्मानमिति पादाः । ये लोकाः ये च तेषु वसन्तः स्वरूपांशाः अप्रजानां अपुत्राणां अदायादानां ब्रह्मादिदेवानां आश्रयाः ते भूम्यादित्रिलोक्याः बहिरेवासन्नित्यन्वयः । अत्र तुना सूचितमिदं प्रमाणम्— 'अनन्तासनवैकुण्ठनारायणपुराणि तु' इत्यादि । तस्यैव त्रिधाम्नो विष्णोः त्रिलोक्यन्तर्गतस्वरूपांशान्तरमाह— अन्तरिति । बृहदिति भावप्रधानः । स एव विष्णुः त्रिलोक्याः अन्तः अपरः यज्ञपुरुषाख्यः गृहमेधैः गृहस्थैः बृहत्त्वेन ब्रह्मत्वेन । ब्रह्मार्पणबुद्ध्येति यावत् । हुतो वसतीति शेषः । तुना तस्य स्थानस्य शक्रलोकसामीप्यं सूचयति । तदुक्तम् - 'स एवान्यस्वरूपेण शक्रलोकसमीपग' इत्यादि । न केवलं शक्रलोकनिकटवर्तिलोकस्थ एव पूज्यते । अपि तु त्रिलोक्या अन्तर्भुवादिलोकस्थोऽपि इतीममर्थमपि तुशब्देनाह । तदुक्तम्— 'यतीनां ध्रुवलोकस्थो वनिनां मेरुमध्यग' इत्यादि ॥ १९ ॥

---

[1] रूपमिति वा - ङ । [2] अमृतं अमि अनन्ते ऋतं गतं रूपं अनन्तासनमिति यावत् अमनन्तं विदुर्बुधा' इत्यादि पाठः - ङ । [3] याश्रयत्वेन - ग ङ ।

सृती विचक्रमे विश्वक्साशनानशने उभे ।
यदविद्या च विद्या च पुरुषस्तूभयाश्रयः ॥ २० ॥

तस्मादण्डाद्विराड जज्ञे भूतेन्द्रियगुणाश्रयः ।
तद्द्रव्यमत्यगाद्विश्वं गोभिः सूर्य इवाश्रयम् ॥ २१ ॥

---

एते त्रयोऽपि स्वरूपांशा इति निर्णयाय मूलरूपवद्भिन्नांशेषु देवादिसर्वजीवेषु तेषां व्याप्तिप्रकार-माह- सृती इति । अनन्तासनवैकुण्ठनारायणाख्यत्रिपाद्भगवान् यत् ये द्वे[१] ब्रह्मविद्या तदविद्या च आश्रिते ते विरुद्धलक्षणत्वात् उभे देवमनुष्यसंज्ञे सृती सरणी मार्गौ विष्वक् सर्वतः विचक्रमे व्याप । देवमनु-ष्यसंज्ञे कुतोऽवगते इति तत्राह- साशनानशने इति । साशनाः मनुष्याः अनशनाः देवाः तद्विषय-त्वात्तथोक्ते । यद्वा ये विद्या चाविद्या च ते सृती इत्यनेन तद्वन्तः पुरुषाः लक्ष्यन्ते । तेषु विक्रम्य स्थितः । तदुक्तम्- 'त्रिपात्स एव भगवान् सर्वप्राणिषु संस्थितः । निरन्तरेषु च विद्वत्सु त्रिदशे-ष्वितरेषु च ॥' इति । ननु हरेः आधेयत्वेन पारतन्त्र्यमागतमत्राह- पुरुष इति । पुरुषो विष्णुः उभयोराश्रयः आधारः । तुशब्देन अन्ये मत्स्यादयः स्वरूपांशा अपि सर्वव्याप्तिमन्त इति सूच्यते ॥ २० ॥

अण्डव्याप्तचतुर्मुखोत्पत्तिमाह- तस्मादिति । पूर्वं महदादितत्त्वोत्पादनाय हरिणा यदण्डं निरमायि तस्मादण्डात् ब्रह्मनामा[२] विराड् जज्ञे । अण्डव्यापिनं तं विशिनष्टि- भूतेति । भूतानां पृथिव्यादीनां जीवानां वा, इन्द्रियाणां श्रोत्रादीनां, गुणानां शब्दादीनां इन्द्रियगुणानां, इन्द्रियाणां विषयवृत्तौ[३] सहकारिणां दिगादिदेवानां वा आश्रयः आधारः । यद्वा स्वसृष्टात् तस्मादण्डात् विश्वासौ राट्चेति विराट् विष्णुः जज्ञे शेषशायित्वेन प्रादुर्भूतः । किञ्च अण्डादभिव्यक्तात् तस्माच्छेषशायिनो हरेः नाभिपद्मात् रूपान्तरेण भूतेन्द्रियगुणाश्रयो[४] विराट् ब्रह्मा जज्ञ इत्यन्वयः । 'तस्माद्धरेरण्डमभूदण्डा-दपि चतुर्मुख' इत्यादेरुक्तार्थ वायं श्लोकः । एतस्माद्गुणयोगात्परमेष्ठिनाम चास्याभूदिति भावेनाह- तद्द्रव्यमिति । यदा ब्रह्माण्डान्तरुभयात्मको ब्रह्मा जज्ञे तदैव सः लोकपितामहः हरेः स्वस्माद्वा यत्

---

१ द्वे इति ङ पाठः । अन्यत्र - 'विद्या' इति पाठः । २ ब्रह्मनाम्ना - ङ ।
३ गुणानां शब्दादिविषयाणां विषयवृत्तौ - क ङ । ४ नाभिपद्मात् भूतेन्द्रियगुणाश्रयरूपान्तरेण - ज ।

यदाऽस्य नाभ्यान्नलिनादहमासं महात्मनः ।
नाविन्दं यज्ञसम्भारान् पुरुषावयवानृते ॥ २२ ॥

तेषु यज्ञाश्च पशवः सवनस्पतयः कुशाः ।
इदञ्च देवयजनं कालश्चोरुगुणान्वितः ॥ २३ ॥

---

शर्वपूर्वादिविश्वजनुत्वं तदर्थ्यं गोभिः भक्तिज्ञानादिगुणलक्षणाभिः अत्यगात् उद्रिक्तोऽभूत् । कथमिव यथा सूर्यः दिगन्तविश्रान्तैः रश्मिभिः अन्तरिक्षाद्याश्रयवत्त्वेति तथेत्यन्वयः । तदुक्तं 'यदोभयात्मको जज्ञे ब्रह्मालोकपितामह'इत्यादि ॥ २१ ॥

प्रथमेरूपस्य[1] विरिञ्चस्यापि स एव पुरुष इत्युक्तैवराजपुरुषाभिधहरेः मुख्याधिष्ठानत्वात् 'यस्येहावयवै'रित्याद्युक्तलक्षणं चतुर्मुखेऽपि सम्भवतीति तत्परिहारायाह– यदेति । यदा अस्य नाभ्यात् नाभिप्रदेशाज्जातात् नलिनात् अहमासं द्वितीयरूपेणोत्पन्नोऽभवम् । महात्मन इत्यनेन तन्माहात्म्यात् स्वमाहात्म्यस्य अत्यन्तार्वाचीनत्वं सूचयति । तदा भक्त्या तं यियक्षुरहं पुरुषावयवानृते अण्डस्य पुरुषप्रतिमात्वात् लोकादियागसम्भाराणामुक्तप्रकारेण तदवयवोत्पन्नत्वात्तदवयवव्याप्तत्वात् तदाश्रितत्वाच्च पुरुषावयवान्विहाय लोकादियज्ञसम्भारान्नाविन्दम् । न लब्धवानित्यन्वयः । अनेन यज्ञकर्मणा भगवद्विषयेण शुद्धान्तःकरणस्य पुंसः समुद्रिक्तभक्तिज्ञानादिभिः तत्प्रसादातिशयो भवतीत्युक्तं भवति ॥ २२ ॥

पुनः ब्रह्मणा किमकारीत्याशङ्क्य तदर्थत्वेन तत्स्थत्वेन तत्तन्निधानविशिष्टैः तैस्तैः हरियजनाद्धरिप्रीतिरेव भवतीति विमृश्य यज्ञसम्भरणप्रकारमाह– तेष्विति । तेषु पुरुषावयवेषु तदाश्रिताः[2] यज्ञादिसम्भाराः मया सम्भृताः सम्पादिताः इत्यन्वयः । यज्ञाः अग्निष्टोमादयः । पशवोऽजादयः । वनस्पतयोऽश्वत्थादयः यैः अरण्यादिनिर्माणं क्रियते । देवयजनं यागभूमिः । कालो वसन्तादिः । तस्य गुणाः धर्माद्याः ॥ २३ ॥

---

१ प्रथमपुरुषस्येति ज पाठः ।   २ सदाश्रिताः - ङ ।

वसून्योषधयः स्नेहा रसलोहमृदो जलम् ।
ऋचो यजूंषि सामानि चातुर्होत्रञ्च सत्तम ॥ २४ ॥

नामधेयानि मन्त्राश्च दक्षिणाश्च व्रतानि च ।
देवतानुक्रमः कल्पः सङ्कल्पः सूत्रमेव च ॥ २५ ॥

गतयो मतयः श्रद्धा प्रायश्चित्तं समर्पणम् ।
पुरुषावयवैरेतैः सम्भाराः सम्भृता मया ॥ २६ ॥

---

वसूनि काञ्चनादीनि । ओषधयः व्रीह्यादयः । स्नेहा आज्यादयः । रसाः क्षीरगुडादयः । लोहाः अयःप्रभृतयः । मृदो वल्मीकमृदिष्टकादयः । जलं गङ्गादिजलम्[1] । नियतपादबद्धा ऋचः । अनियतच्छन्दोबन्धोपेतानि यजूंषि । गानप्रधानानि सामानि । चतुर्भिः अध्वर्य्वादिभिः क्रियमाणं कर्म चातुर्होत्रम् ॥ २४ ॥

नामधेयानि इन्द्र इत्यादीनि । अग्निहोत्रदर्शादीनि वा । मन्त्राः द्विविधाः बीजात्मकाः मालात्मकाः । विंशद्वर्णादर्वाक्[2] बीजमन्त्राः । ततोऽधिकाः मालाख्याः । ते च द्रव्यदेवतादिप्रकाशकाः । चन्द्रकलावत् बिन्दुमण्डितशिरसो वर्णाः बीजाख्याः । चतुर्थ्यन्तेन्द्रादिनामविशिष्टाः नमःस्वाहा-फडन्ता मालामन्त्राः । उभये च जपाधिका न्यूनजपा इति । कर्म दक्षयन्तीति दक्षिणाः होत्रादिभ्यो द्रव्यदानसम्बन्धाः[3] । व्रतानि ब्रह्मचर्यादीनि । देवताः तत्तन्मन्त्रवाच्याः अग्न्यादिकाः । अनुक्रमः तासां तारतम्यं पौर्वापर्यलक्षणम् अनुपाठो वा । कर्मक्रमो वा । कल्पः प्रयोगविधिप्रतिपादको बौधायनादिः । सङ्कल्पः इदं करिष्ये इति मनोवाग्भ्यां स्मरणकीर्तनलक्षणः । सूत्रं मीमांसासूत्रम् । चशब्दात् कर्मदेवमीमांसासूत्रे च गृहीते ॥ २५ ॥

गतयः स्वर्गादिफलानि । मतयो ज्ञानानि । ऋषिमतभेदभिन्नानि वा[4] । श्रद्धा आस्तिक्यबुद्धिः 'इदं सत्यं अस्मात्प्रयोजनमस्ती'त्येवंरूपा । प्रायश्चित्तं अन्तरालावासान्तरायपरिहारत्वेन यथोक्तफल-साधनं कर्म[5] । समर्पणं ब्रह्मणीति शेषः ॥ २६ ॥

---

१ गङ्गादिजलमिति छ ड पाठः । अन्यत्र - गङ्गादिगतम् । २ विंशल्लर्णाद् - ख ।

३ संबद्धाः - ठ ट ख ड । ४ भिन्नानि वेति ड पाठः । अन्यत्र - भिन्ना वा ।

५ यथोक्तकर्मफलसाधनं -कोषान्तरेषु सर्वत्र ।

इति सम्भृतसम्भारः पुरुषावयवैरहम् ।
तमेव पुरुषं यज्ञं तेनैवायजमीश्वरम् ॥ २७ ॥

ततस्ते भ्रातर इमे प्रजानां पतयो नव ।
अयजन्व्यक्तमव्यक्तं पुरुषं सुसमाहिताः ॥ २८ ॥

ततश्च मनवः काले ईजिरे ऋषयोऽपरे ।
पितरो विबुधा दैत्याः मनुष्याः क्रतुभिर्विभुम् ॥ २९ ॥

---

इतिशब्दः आदिवचनः । एवमादिसम्पादितयज्ञसाधनोऽहं पुरुषावयवैः कल्पितैः पश्वादिभिः तमेव यज्ञपुरुषं तेन मय्यनुविष्टेन प्रेरितः देशकालपश्वादिसाधनेषु चाहितेन मद्दृष्टिविषयेण च अयजमित्यन्वयः । ईश्वरमित्यनेन स्वेन यष्टव्यमाहात्म्यं सूचयति ॥ २७ ॥

स्वकृतयज्ञस्य व्याप्तिं कथयति- तत इति । अनेन स्वस्य सर्वस्मात् श्रैष्ठ्यं स्वकर्मणः प्रामाण्यञ्च दर्शितम् । ते तव भ्रातरो मरीच्यादयः न सनकादयः इति परिच्छिनत्ति- प्रजानां पतय इति । व्यक्तं गम्यम् । अव्यक्तमगम्यम् । अनेन साधनसाध्यसाधनसामग्रीभ्यां हरेः कश्चन स्वभावो दर्शितः । पुरुषं बहुफलप्रदम् । समाहिताः इदमेव श्रेयो नान्यदित्येकाग्रचित्तगुणाः ॥ २८ ॥

काले वसन्तादिसमये । अपरे मरीच्यादिव्यतिरिक्ताः । पितरोऽग्निष्वात्तादयः । विबुधाः इन्द्रादयः । दैत्याः प्रह्लादादयः । मनुष्याः प्रियव्रतप्रभृतयः । क्रतुभिः यागैः । अत्राहं भवानित्यारभ्य ततश्च मनवः इत्यन्तैः ग्रन्थैः पुरुषसूक्तार्थो विवृत इति ज्ञातव्यम् । तथाहि— सर्वं पुरुष इत्यनेन पुरुष एवेदं सर्वमित्यस्यार्थः प्रदर्शितः । तेनेदमित्यनेन सहस्रशीर्षेत्यस्य । सोऽमृतस्येत्यनेन उतामृतत्वस्येशान इत्यस्य । महिमैव इत्यनेन एतावानस्येत्यस्य । पादास्त्रय इत्यनेन त्रिपादूर्ध्व इत्यस्य । सृती इत्यनेन ततो विष्वङ् इत्यस्य । तस्मादण्डादित्यनेन तस्माद्विराळजायतेत्यस्य । तद्द्रव्यमित्यनेन स जात इत्यस्य । तेषु यज्ञा इत्यनेन ब्राह्मणोऽस्य मुखमासीदित्यस्य । इति संभृतेत्यनेन यत्पुरुषेणेत्यस्य । ततस्ते भ्रातर इत्यनेन यज्ञेन यज्ञं इत्यादेः ॥ २९ ॥

---

१ वा - क ग ङ ट ठ ज । २ एतत्पूर्वं साधारणासाधारणेति - ट । साधनासाधनसामग्रीभ्यां - ङ ।

नारायणे भगवति तदिदं विश्वमाहितम् ।
गृहीतमायोरुगुणे सर्गादावगुणे स्वतः ॥ ३० ॥

सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः ।
विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक् ॥ ३१ ॥

इति तेऽभिहितं तात यथेदमनुपृच्छसि ।
नान्यद्भगवतः किञ्चिद्भाव्यं सदसदात्मकम् ॥ ३२ ॥

---

तद्द्रव्यमत्यगादित्यनेन भक्त्यादिभिरेवोत्तमत्वमुच्यते । न तु स्वरूपत इत्युक्तमेवार्थं स्फुटयन्नुप-संहरति— नारायण इति । श्रीमत्पुण्डरीकाक्षकटाक्षप्रेक्षणप्राप्तसर्वप्रभावोऽहं तमेव नारायणं यज्ञादिभि-रयजमिति यस्मात्तस्मादिदमसदादिविश्वं तस्मिन्नारायण एवाहितं तदाधारतया तदधीनतया तद्व्याप्त-तयाऽवस्थितमित्यन्वयः । आहितत्वे हेतुमाह— गृहीतेति । सत्वादिगुणाधीनं सर्वम् । ते चानेन गृहीताः । अतः सर्वं तस्मिन्नाहितम् । ग्रह उपादान इति धातोः । सर्गादौ उपादानीकृतप्रकृत्युरुगुणे अन्यदा समीपावाप्तमायोरुगुणे । ननु हरेः जीवजडवत् गुणसंबन्धः किं न स्यादिति तत्राह— अगुण इति । जीवस्य स्वतो गुणराहित्येपि मिथ्याभिमानात् जडस्य तु तन्मयत्वाद्गुणित्वं युक्तम् । हरेस्तदुभयाभावा-दगुणत्वम् । गुणस्वातन्त्र्यात् बहिः समीप एव सदाऽवस्थानात् गृहीतगुणत्वं युक्तम् । उर्वित्यनेन हरेरतिशयितमाहात्म्यं सूचयति । 'नित्यं गृहीताः सत्वाद्याः जीववज्जडवन्न तु । मिथ्याभिमानात्स्वरूप-त्वात्स्वातन्त्र्याद्बहिरेव तु' इत्येतदत्र मानम् ॥ ३० ॥

येन स्वरोचिषा विश्वमित्याद्युक्तमुपसंहरन् हरस्य संहारस्वातन्त्र्यं मन्दमतीनां प्रतीयमानं परिहरति— सृजामीति । पुरुषरूपेण विष्णुरूपेण त्रिशक्तिधृक् सृष्टिपालनसंहारशक्तिधरः ज्ञानबल-क्रियाशक्तिधरो वा ॥ ३१ ॥

प्रश्नप्रतिवचनमुपसंहरति— इतीति । अथ कुत्रापि कदाचिदपि मे जगतः स्वातन्त्र्यबुद्धिं न कुरु इति भावेनाह— नान्यदिति । सदसदात्मकं व्यक्ताव्यक्तात्मकं [1]ज्ञेयाज्ञेयस्वरूपत्वात्तत्स्वभावं, भाव्यं उत्पाद्यं महदहङ्कारादि यत् जगत् किञ्चिदपि हरेः अन्यत् न, स्वतन्त्रं न भवति । किन्तु तद-धीनसत्ताकम् । अतो युज्यते तदनन्यदितीत्यर्थः । तदुक्तं— 'सदिति व्यक्तमुद्दिष्टमसदव्यक्तमुच्यते' इत्यादि ॥ ३२ ॥

---

१ एतत्पूर्वं 'न केवलम्' इति - अ ।

न भारती मेऽङ्ग मृषोपलक्ष्यते
न कर्हिचिन्मे मनसो मृषा गतिः ।
न मे हृषीकाणि पतन्त्यसत्पथे
यन्मे हृदौत्कण्ठ्यवता धृतो हरिः ॥ ३३ ॥

सोऽहं समाम्नायमयस्तपोमयः
प्रजापतीनामभिवन्दितः पतिः ।
आस्थाय योगं निपुणं समाहित-
स्तन्नाध्यगच्छं यत आत्मसंभवः ॥ ३४ ॥

---

एवंविधमाहात्म्यस्य हरेः प्रसादः कस्य स्यादित्याशङ्क्य भक्तिनदीस्नानेन निर्धूतमनोमलस्य सदा भगवदेकविषयेन्द्रियव्यापारस्य पुरुषस्य स्यादिति भावेनाह– नेति । हृषीकाणि इन्द्रियाणि । अत्र हेतुमाह– यन्म इति । औत्कण्ठ्यं प्रियवस्तुनि मनोवृत्तिविशेषः स्नेहलक्षणा भक्तिः । तद्वता हृदा मनसा धृत इति यत्तस्मादित्यर्थः । अनेन भगवत्प्रसादसामग्रीसंपादने भक्तिरङ्गमित्युक्तं भवति ॥ ३३ ॥

इतोपि पुंसां भक्तिरेव साध्या तत्प्रसादजननी । अन्यथाऽसौ दुर्ज्ञेय इति भावेनाह– सोऽहमिति । मद्भक्तिविषयः यः विष्णुः तस्यानुग्रहमन्तरेण[1]ाऽऽम्नायमयः वेदप्रतिपाद्येषु प्रधानः समीचीनज्ञानसंप्रदायप्राचुर्यो वा । तपोमयः तपस्विषु प्रधानः । दक्षादिप्रजापतीनां पतिः तैरभिवन्दितश्च । समाहित एकाग्रतया निश्चलमनाः भूत्वा निपुणं चतुरतमं योगं ध्यानलक्षणमुपायं आस्थाय यतः आत्मनो मम संभवः तं भगवन्तं नाध्यगच्छम् । अधीति विशेषणात् अनन्तत्वेनानधिगतविशेषस्याधिक्यात् नाज्ञासिषमित्यर्थः ॥ ३४ ॥

---

१ तस्यानुग्रहेण तमन्तरेण – मूलकोशे ख ग क ङ । अस्मिन् पाठे तस्यानुग्रहेण तमन्तरेण वेदप्रतिपाद्येषु प्रधान इत्यन्वयः । मूलधृतपाठे तस्यानुग्रहमन्तरेण नाध्यगच्छमिति श्लोकावतारिकानुगुणोऽन्वयः ।

नतोऽस्म्यहं तच्चरणं समीयुषां
भवच्छिदं स्वस्त्ययनं सुमङ्गलम् ।
यः स्वात्ममायाविभवं स्वयं गतो
नाहं नभस्वांस्तमथापरे कुतः ॥ ३५ ॥

नाहं न यूयं बत तद्गतिं विदुः
न वामदेवः किमुतापरे सुराः ।
यन्मायया मोहितबुद्धयस्त्विदं
विनिर्मितं चात्मसमं विचक्ष्महे ॥ ३६ ॥

---

नारदायैवंविधहरिमहिमानं व्याचक्षाणः तं[1] स्मारं स्मारं भक्तिप्रमरसिन्धुनिमग्नः तन्नतिं करोति—**नतोऽस्मीति** । यः विष्णुः स्वात्ममायायाः[2] स्वरूपभूतमहिम्नः विभवं विविधभवनं अनन्ततां स्वयं गतः स्वयमेव जानाति । विशिष्योक्तौ[3] निमित्तमाह— **नाहमिति** । नभस्वान् वायुः । अपरे वाणी-शेषाद्याः । अथशब्दात् साकल्यज्ञानमेव निषिध्यते । न तु तद्विषयज्ञानमात्रम् । 'सर्वजीवनिकायेषु ब्रह्मवायू हरेर्विदौ' इत्यादिवाक्यसूचकात् अयं विशेषो बोद्धव्यः प्रेक्षावतेति । 'मङ्गलानन्तरारम्भप्रश्न-कार्त्स्न्येष्वथो अथ' इत्यमरः । 'अथातोनन्तराप्यर्थविकल्पारम्भमङ्गल' इति च । समीयुषां शरणं प्राप्तानां स्वस्त्ययनं अलम्बुद्धिगोचरस्वानन्दानुभवप्रदम् । सुमङ्गलं मङ्गलानां मङ्गलम् । तच्चरणं तस्य हरेः चरणम् । नतोऽस्मीत्येतावदेव सुशकमिति भावः । मङ्गलानाञ्च मङ्गलमिति च ॥ ३५ ॥

इदानीं स्वात्मानं निदर्शनीकृत्य कस्यापि साकल्यज्ञानं नास्तीत्याह— **नाहमिति** । उत्सेपम-मिदम् । यथाहं साकल्येन तद्गतिं न वेद्मि तथा यूयं भवन्तोऽपि न विदुः । अत्रापि व्यत्ययात् साकल्य-ज्ञानमेव निषिध्यते । उत्तरखण्डे[4] स्वयोग्यज्ञानस्योक्तत्वादिति ज्ञातव्यम् । त्रिपुरान्तकः सर्वज्ञः इत्यप्यज्ञरूढिरेव । न विद्वद्रूढिरिति भावेनाह— **न वामदेव इति** । वामो निर्दोषो देवो नारायणो

---

१ 'तं' इति क कोशे नास्ति । २ आत्ममायायाः - श्लोके टीकायां च ख ज ठ पाठः ।
३ विशेषोक्तौ - ज छ ट ग क ठ । ४ उत्तरार्धे - ज ।

यस्यावतारकर्माणि गायन्ति ह्यस्मदादयः ।
न यं विदन्ति तत्त्वेन तस्मै भगवते नमः ॥ ३७ ॥

स एष आद्यः पुरुषः कल्पे कल्पे सृजत्यजः ।
आत्मात्मन्यात्मनात्मानं स संयच्छति पाति च ॥ ३८ ॥

---

यस्य मते स तथोक्तः । 'वामं शुभं पेशलमित्यभिधानम् । अनेनैवान्यस्यासद्भावं सिद्धमुद्भावयति– किमुतेति । अत्र हेतुमाह– यन्माययेति । यस्य हरेः मायया बन्धकशक्त्या मोहितबुद्धित्वादित्यर्थः । तत्फलमाह– इदमिति । विनिर्मितमिदं जगत् स्वात्मसमं परमात्मसदृशं विचक्षते । ननु भवन्तोऽप्येवंविधाः किमित्याशङ्क्य, सत्यं, विशेषोऽस्तीत्याह– त्विदमिति । वयन्तु येनेदं निर्मितं भगवन्तं स्वात्मसमं स्वयोग्यतानुसारं विचक्ष्महे । नातोऽधिकम् । तदपि तत्प्रसादायत्तम् अतो न विभ्रम इति ब्रूमः इत्ययं विशेषः तुशब्दादवगन्तव्य इति । 'तुः स्याद्भेदेऽवधारणे' इति । स्वात्मसममिति पाठे स्वात्मपदार्थवत् अनित्यं अस्वतन्त्रमिदम् । अत एतन्नियामकेन[1] स्वतन्त्रेण परमनित्येन भवितव्यमिति विचक्ष्मह इति भावः ॥ ३६ ॥

इतोऽपि तत्स्वरूपसाकल्यज्ञानमेव निषिध्यते । न तु तद्विषयज्ञानमात्रम् । अन्यथा वागिन्द्रियप्रवृत्तिः तद्विषया नोपपद्यते । सा चास्ति । तस्मादुक्तं युक्तमिति भावेनाह– यस्येति । एकदेशज्ञानमपि स्वातन्त्र्येणेत्यभिमाने तदपि न स्यादिति भयेन[2] पौनःपुन्येन नमनमिति भावः ॥ ३७ ॥

प्रपञ्चान्तस्थरूपबाहुल्यं तन्नियमनलक्षणं कर्म च अन्तरेण अन्यावताराणां तत्कर्मणाञ्च सद्भावे किंप्रमाणम् इत्याशङ्क्य संक्षिप्य तदाह– स एष इति । यो मदादिभिः सर्वैः साकल्येनाविज्ञातः स एष पुरुषः श्रीनारायणः आत्मा स्वयमेव कल्पे कल्पे आत्मना स्वेच्छया नियतमनसा आत्मनि स्वाधारतया आत्मानं मत्स्यादिरूपेण सृजति दीपाद्दीपान्तरवद्व्यक्तं करोति । देवदत्तवन्न जायत इत्यज इति । आद्यः उपजीव्य इति व्यक्तीकरणम् । उपजीव्यत्वमेवाह– स संयच्छतीति । तैरवतारैः देवादिस्वजनं पाति । हयग्रीवादिदैत्यान्संयच्छति । चशब्दः उक्तार्थसमुच्चये व्यासाद्यवतारान्तरसूचने च वर्तते । तथाच– व्यासाद्यवतारैः मणिमदादितामसजनवचनेन तिरोहितं स्वरूपं शास्त्रप्रवर्तनेन प्रकाशयतीति ज्ञायते । तथा चोक्तम्– 'स्वयमेव स्वरूपाणि मत्स्यकूर्मादिकान्यजः । स्वात्मन्येवेच्छया सृष्ट्वा तैर्दैत्यादीन् प्रपात्यसौ' इत्यादि ॥ ३८ ॥

---

१ अत एव तन्नियामकेन - ट क छ ग ण ज । २ भावेन - कोशान्तरेषु पाठः ।

विशुद्धं केवलं ज्ञानं प्रत्यक् सम्यगवस्थितम् ।
सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम् ॥ ३९ ॥

ऋतं विन्दन्ति मुनयः प्रशान्तात्मेन्द्रियाशयाः ।
यदा तदेवासत्तर्कैस्तिरोधीयेत विप्लुतम् ॥ ४० ॥

---

शास्त्रतः कीदृशं प्रकाशितमत्राह– विशुद्धमिति । विशुद्धं निर्दोषत्वात् । केवलं अद्वितीयम् । ज्ञानं विषयनिरपेक्षसंविद्रूपम् । प्रत्यक् सर्वेषामन्तरभिमुखत्वेन स्थितम् । स्वतः शुद्धस्यापि परतो दोषित्वं स्यादित्यतः सम्यगवस्थितं दूष्यांशरहितत्वात् । सत्यं निर्दुःखनित्यनिरतिशयानन्दानुभवरूपम् । पूर्णं देशतः कालतो गुणतश्चापरिच्छिन्नम् । अनाद्यन्तं आदिविनाशवर्जितम् । निर्गुणं सत्वादिगुणरहितम् । अत एव नित्यं परिणामस्वभाववर्जितम् । अद्वयं स्वगतभेदवर्जितम् ॥ ३९ ॥

स्वतो विकाराभावेऽपि निमित्तेन स्यादित्यतः– ऋतम् । शश्वदेकप्रकारम् । तदुक्तम् ऋतं तदात्मना ज्ञप्तेः सत्यं साधुत्वतः परमित्यादि । एतज्ज्ञानस्य मोक्षैकफलहेतुत्वादिदमेव शास्त्रेण प्रकाशितम् । नान्यदित्याशयेनाह– विन्दन्तीति । प्रकर्षेण शान्ताः निर्मलीभूता[1] आत्मा मनः श्रोत्रादीनीन्द्रियाणि आशयो बुद्धिर्येषामन्ते तथोक्ताः यदा भगवदेकनिष्ठया निर्मलीभूतमनआदीन्द्रियप्रवृत्तयो मुनयः सर्वज्ञाः ब्रह्मादय एवंविधगुणोपेतं ब्रह्मापरोक्षीकृत्य विन्दन्ति स्वानन्दं लभन्ते तदेवासत्तर्कैः विमतं मिथ्या दृश्यत्वादित्यादिलक्षणैः[2] विप्लुतमुपहतं अन्यथाभूतं च ह्यान्तःकरणं संसारबीजभूतं तिरोधीयेत दग्धबीजवद्भवतीत्यन्वयः । अनेन अवतारकर्मकीर्तनश्रवणादिना किम्फलमिति चोद्यमपि निरस्तम् । किञ्च मूलरूपस्य यादृशं रूपं यादृशं कर्म यादृशो गुणः तत्सर्वमवताराणामप्यस्तीति अतः तत्स्वरूपत्वं युक्तमिति च ज्ञापितम् । यद्वा असत्तर्कैः 'यदि गुणवान् तर्हि दोषवान्, यदि कर्ता तर्हि श्रान्तः स्यात् देवदत्तादौ दृष्टत्वादित्यादिरूपैः तिरोहितं विशुद्धत्वादिलक्षणं रूपं व्यासादिप्रणीतशास्त्रनिशितया बुध्या यदा सम्यग्विन्दन्ति मुनयः तदैव दोषित्वादिरूपं तिरोधीयेत । तद्विषया बुद्धिर्निवर्तत इति । कदा अवतारप्रसङ्गः इत्यतो वाह– स एष इति । यदा बौद्धाद्यसत्तर्कैः विप्लुतं धर्मशास्त्रं तिरोधीयेत । अधर्मशास्त्रमुज्जृम्भेत च तदात्मानं सृजतीत्यन्वयः । कीदृशमात्मानमित्यत उक्तम्– विशुद्धमित्यादि । तत्र किं प्रमाणमत्राह– विन्दन्तीति । मत्स्याद्यवताराः विष्णोः स्वरूपांशा इत्यत्र तेषां प्रत्यक्षं प्रमाणमवतारप्रसङ्गे चेत्यर्थः ॥ ४० ॥

---

१ निर्मलीभूता - ग ङ । २ दुस्तादिकैः - क ग ङ छ ट ।

आद्योऽवतारः पुरुषः परस्य
कालः स्वभावः सदसन्मनश्च
द्रव्यं विकारो गुण इन्द्रियाणि
विराड् स्वराट्स्थास्नु चरिष्णु भूम्नः ॥ ४१ ॥

---

तत्र प्रथमावतारः कः इत्याशङ्क्य तमाह– आद्य इति । परस्य परायणस्य[1] हरेः आद्योऽवतारः पुरुष इति वदन्तीति शेषः । प्रलयोदके शयानो महाकृतिर्नराणामाश्रयत्वेन नारायणः शून्यनामाभूत् । सिसृक्षोः तस्य दीपाद्दीपान्तरं यथा तथा द्वितीयं रूपमभूत् । तत्त्वविदो जनाः तद्रूपं नाम्ना पुरुष इति संवदन्ते । स पुरुषः प्रकृतिनाम्नि रमायाः द्वितीये रूपे स्ववीर्यमाधत्त । तस्मात् वीर्यात् नाम्ना महानभूत् । यः हिरण्यगर्भः स पुरुष इति भण्यते[2] । तत्पत्नी चोच्यते[3] श्रद्धेति । तौ प्रलये स्थूलशरीररहितत्वात् विश्लिष्टौ पुत्राद्देहं प्राप्य संयोगं कृत्वा जगदङ्कुरं महत्तत्वं पुनरुद्भावयताम् । स्वस्यैव पुत्रतां यातात् महत्तत्वात् अहंतत्वमजनीति[4] इतिहासं आचक्षते 'यः शेते प्रलये विष्णुः शून्यनामा महाकृति'रित्यादिवाक्यसिद्धम् । सन्निधानविशेषाधिष्ठानत्वात् अंशत्व ब्रह्मादीनां न साक्षादितीममर्थं स्पष्टमाह- काल इत्यादिना । यद्यत् कालाद्यनुक्रान्तं, तत्तत्परं विशिष्टं सर्वं नारायणस्य रूपवत् प्रतिमावदधिष्ठानं प्रीतिहेतुत्वात् । स्वतो अस्वरूपं प्राकृतत्वात् । 'पुरुषाद्याः हरे रूपं ब्रह्माद्यास्तत्प्रिया स्मृताः । प्रधानत्वेन सर्वस्मान्मत्स्यकूर्मादयो हरेः । अवतारा: श्रुतौ ख्याताः स एवैते तत स्मृताः' इत्यादेः । कालः परमाण्वादिपरममहदन्तः । स्वभावः वस्तुस्वभावः । सत् प्राणः असत् सूक्ष्मत्वान्मूलप्रकृतिः । मनः मनस्तत्वम् । 'कालो वस्तुस्वभावश्च प्रकृतिः प्राण एव च' इत्यादेः । 'सदिति प्राण' इति श्रुतेश्च । द्रव्यं पञ्चभूतानि । विकारोऽण्डम् । गुणः सत्वादिः । विराड् गरुडः । स्वराडिन्द्रः । 'द्रव्यन्तु पञ्चभूतानि विकारोऽण्डमुदाहृतम् । विराजं गरुडं प्राहुः स्वराडिन्द्र उदाहृत' इति च । स्थास्नु चरिष्णु स्थावरं जङ्गमञ्च ॥ ४१ ॥

---

१ नारायणस्य - ट । २ अयं ज पाठः । मूले - यः हिरण्यगर्भः स पुरुष इति भण्यते - ज । यं हिरण्यगर्भं पुरुष इति संगिरन्ते - ट । ३ अयं ज पाठः । अन्यत्र 'चोच्यत' इति नास्ति ।
४ अत्रीजनदिति - ग ट ण क ।

अहं भवो यज्ञ इमे प्रजेशाः दक्षादयो ये भवदादयश्च ।
स्वर्लोकपालाः खगलोकपालाः नृलोकपालास्तललोकपालाः ॥४२॥

गन्धर्वविद्याधरचारणेशाः ये यक्षरक्षोरगनागनाथाः ।
ये वा ऋषीणां ऋषभाः पितॄणां दैत्येन्द्रसिद्धेश्वरदानवेन्द्राः ॥४३॥

अन्ये च ये प्रेतपिशाचभूतकूष्माण्डयादोमृगपक्ष्यधीशाः ।
यत्किञ्च लोके भगवन्महस्वदोजः सहस्वद्बलवत्क्षमावत् ।
ह्री श्री विभूत्यात्मवदद्भुतार्णं तत्तत्परं रूपवदस्वरूपम् ॥ ४४ ॥

---

भूम्न इत्यनेन स्थावरादिव्यापित्वं युक्तमित्याह- अहमिति । अहं चतुर्मुखः । भवः शिवः । यज्ञः यज्ञाभिमानी रुद्रच्छिन्नः । 'यज्ञशब्दोदितौ द्वौ तु देवौ लोकपुरस्कृता'वित्यादेः । भवदादयः परमहंसाः । स्वर्लोकपाला इन्द्रादयः । खगलोकपालाः गरुडादयः । नृलोकपालाः प्रियव्रतादयः । तललोकपालाः अनन्तबल्यादयः ॥ ४२ ॥

गन्धर्वेशाः विश्वावस्वादयः । विद्याधरेशाः चित्रकेत्वादयः । चारणेशाः पुष्पदन्तादयः । यक्षनाथाः कुबेरादयः । रक्षोनाथाः निर्ऋत्यादयः । उरगनाथाः वासुक्यादयः । नागनाथाः अनन्तादयः । पूर्वोक्तोऽनन्तो एककुण्डलः । ऋषीणामृषभाः वसिष्ठादयः । पितॄणां ऋषभो यमः । दैत्येन्द्राः प्रह्लादादयः । सिद्धेशाः सनकादयः । दानवेन्द्राः वृषपर्वादयः ॥ ४३ ॥

प्रेतेशोऽपि यमः । रूपान्तरविवक्षया पुनर्वचनम् । व्यासवासुदेववत् । पिशाचेशाः घण्टाकर्णादयः । भूतेशाः भैरवादयः । कूष्माण्डेशाः भृङ्गिरिट्यादयः । यादसामीशाः तिमिङ्गिलादयः । मृगाणामीशाः सिंहादयः । पशूनामीशाः नन्दिकेश्वरादयः । भगवद्यशोज्ञानादिमत् महस्वत् स्वतो महत्ववत् । ओजस्वत् अवष्टम्भवत् । सहस्वत् सहनगुणवत् । बलवत् इच्छाकरणशक्तिमत् । क्षमावत् क्रोधासमुत्थितिमत् । ह्रीमत् योग्यलज्जावत् । श्रीमल्लक्षणोन्नद्धम् । विभूतिमत् विशेषप्राप्तियोग्यतावत् । 'स्वतो महत्वन्तु महो विशेषप्राप्तिशक्तिता । विभूतिर्लक्षणोन्नाहो लक्ष्मीशब्देन भण्यत' इति । आत्मवत् धृतिमत् मनोजयवद्वा । अद्भुतार्णं आश्चर्यसमुद्रम्[1] । स्वेच्छयैषां विशिष्टत्वं कुरुते तत्तथा स्मृत'मित्यतो मिथ्याविभूतित्वं प्रत्युक्तम् ॥ ४४ ॥

---

१ आश्चर्यसमुद्रः - ट ।

प्राधान्यतो यानृषय आमनन्ति
लीलावतारान्पुरुषस्य भूम्नः ।
आपीयतां कर्मकषायशोषा-
ननुक्रमिष्ये त इमान्सुपेशलान् ॥ ४५ ॥

॥ इति श्रीमद्भागवते द्वितीयस्कन्धे षष्ठोऽध्यायः ॥

---

पुरुषनामैक एव स्वरूपांशावतारः नान्यः इति शङ्कां परिहरन्निव तदवतारानुक्रमणं प्रतिजानीते- प्राधान्यत इति । ऋषयः ब्रह्मादिज्ञानिनः भूम्नः आनन्दादिगुणपूर्णस्य पुरुषस्य यान् लीलावतारान् आमनन्ति पठन्ति अभ्यासेनोपासते[1] च तान् ते तव प्राधान्यतो अनुक्रमिष्ये गणयिष्यामीत्यन्वयः । भवता तदनुक्रमणरसः कर्णवपुटेन आपीयताम् अभिगम्यताम् । यद्वा आपीयतां गायतां ध्यायतां पश्यतां पिबतां जनानां कर्मकषायः देहारम्भहेतुकर्माख्यरसः तस्य शोषो यैः ते तथोक्ताः तान् । पेयत्वे गुणमाह- सुपेशलानिति । मधुरेभ्योप्यतिमधुरान् । इमानिति मनसि प्रकाशितत्वेन कालक्षेपं क्षिपति ॥ ४५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
द्वितीयस्कन्धे षष्ठोऽध्यायः ॥

* * *

---

1 अत्यभ्यासेनोपासते - ज ।

## ॥ अथ सप्तमोऽध्यायः ॥

ब्रह्मोवाच—

यत्रोद्धतः[2] क्षितितलोद्धरणाय बिभ्रत्
क्रौडीं तनुं सकलयज्ञमयीमनन्तः ।
अन्तर्महार्णव उपागतमादिदैत्यं
तं दंष्ट्रयाद्रिमिव वज्रधरो ददार ॥ १ ॥

जातोरुचेरजनयत्सुयशाः सुयज्ञः
आकूतिसूनुरमरानथ दक्षिणायाम् ।
लोकत्रयस्य महतीं महरद्य आर्तिं
स्वायंभुवेन मनुना हरिरित्यनूक्तः ॥ २ ॥

---

## ॥ अथ सप्तमोऽध्यायः ॥

अस्मिन्नध्याये प्रतिज्ञातान् परमपुरुषस्यावतारान् तच्चरितानि च वक्ति[1] । तत्र प्रथमतो वाराहकल्पमनुसृत्य वराहावतारं तत्कर्म चाह- यत्रेति । अत्र दंष्ट्राशब्देन सुदर्शनं गदा चोपलक्ष्यते । सकलयज्ञमयीं स्रुक्स्रुवादिसर्वयज्ञोपकरणजननीं तदाधारां क्रौडीं क्रोडस्य वराहस्य विद्यमानां तनुं बिभ्रत् ब्रह्मादिभिः स्तुतोऽनन्तः यत्र यदा क्षितितलोद्धरणाय उद्धतः[2] समुद्रे निमज्ज्य[3] रसातलगतां महीं उद्धृत्य दंष्ट्राग्रे निधाय ऊर्ध्वं गतो भगवान् तदा अन्तर्महार्णवे तद्रोधाय उपागतं तं आदिदैत्यं हिरण्याक्षं वज्रधरः इन्द्रः वज्रेण अद्रिं यथा तथा दंष्ट्रया ददार । गदया विदीर्णगात्रं मुष्टिभिः कर्णमूले हत्वा गतासुमकरोदित्यर्थः । दॄ विदारण इति धातोः । येनान्तर्महार्णवे भूः नीता तमिति वा ॥ १ ॥

सु पूज्यं यशो यस्य स सुयशाः उत्तमश्लोकशिखामणिः । स्वार्पणबुध्या क्रियमाणः शोभनो[4] यज्ञो यस्य सः सुयज्ञः क्रियाभिमानी यज्ञनामा इन्द्रस्तु शोभनो यस्मात्स इति वा । सः नारायणः रुचेः प्रजापतेः सकाशात् यज्ञ इति नाम्ना आकूत्यां रुचिपत्न्यां जातोऽभूत् । अथेन्द्रपदस्थ आकूतिसूनुः यज्ञः दक्षिणायां रमावतारायां स्वपत्न्यां स्वायम्भुवमन्वन्तरे

---

१ 'वक्ति' इति क ज पाठः । मूलकोशे - वष्टि । विशिनष्टि - ग ङ ञ । २ उद्यतः - ख ट क ग छ ज ढ । (श्लोके टीकायां च) ३ निमज्जिता - ज । ४ शोभनानो - ग ट क छ ।

जज्ञे च कर्दमगृहे द्विजदेवहूत्यां
स्त्रीभिः समं नवभिरात्मगतिं स्वमात्रे ।
ऊचे य आत्मशमलं गुणसङ्गपङ्क-
मस्मिन्विधूय कपिलः स्वगतिं प्रपेदे ॥ ३ ॥

अत्रेरपत्यमभिकाङ्क्षत आह तुष्टो
दत्तो मयाहमिति यद्भगवान्स दत्तः ।
यत्पादपङ्कजपरागपवित्रदेहा-
योगर्धिमापुरुभयीं यदुहैहयाद्याः ॥ ४ ॥

---

तुषिताख्यान् अमरान् अजनयत् । यः राक्षसैः अत्तुं प्राप्तेन स्वायम्भुवेन मनुना संसारक्लेशहरणा-[1]द्धरिरिति ज्ञात्वा ईशावास्यमित्यादिना अनूक्तः वेदवचनेन स्तुतः । 'त्रयी श्रुतिर्नित्यवाक्यं वेदोनु-वचनं तथे'त्यभिधानम् । किञ्च यश्चासुरजनादुत्पन्नां लोकत्रयस्य महतीं आर्तिं अहरत् तत्स्यानेनेति शेषः । लोकत्रयस्य महतीं आर्तिं अहरदिति यस्मात् तस्मात् हरिरिति ज्ञात्वा अनूक्त इति वा । 'क्रियाभिमानो यज्ञोऽसौ इन्द्रः क्रतुः प्रकीर्तितः । यज्ञेशत्वात्स्वयं विष्णुः यज्ञो रुचिसुतः स्मृत'इत्यादेरयं यज्ञो हरिरेवेति ॥ २ ॥

चशब्दः आनन्तर्यार्थे । हे द्विज अथ स विष्णुः कर्दमगृहे कर्दमप्रजापतिपत्न्यां नाम्ना देवहूत्यां नवभिः स्त्रीभिः मरीच्यादिपत्नीभिस्समं सह कपिलनामा जज्ञे इत्यन्वयः । तच्चरितमाह— **आत्मगतिमिति** । यः कपिलः स्वमात्रे आत्मगतिं तत्वसङ्ख्यानरूपां आत्मविद्यां ऊचे । स कपिलोऽस्मिन्सात्विकप्रकृतिचेतनगणे विद्यमानं गुणसङ्गपङ्कं शब्दादिगुणानां सङ्गात् निरन्तरनिषेवणात् उत्पन्नं अविद्याकामकर्माख्यपङ्कं आत्मशमलं मनःकर्दमलं[2] साङ्ख्यशास्त्रश्रवणजातज्ञानवारिणा विधूय प्रक्षाल्य स्वगतिं दत्वा स्वलोकं प्रपेदे इत्यन्वयः ॥ ३ ॥

हरिणा समं अपत्यं अभिकाङ्क्षतः इच्छतः अत्रेः मुनेः तपसा तुष्टो भगवान् तपसा प्रसन्नेन मया अहं तव पुत्रत्वेन दत्त इति आहेति यत् यस्मात् तस्मात्स हरिः अत्रेः अनुसूयायां अवतीर्णो नाम्ना दत्त इति प्रसिद्धोऽभूत् । यस्य दत्तस्य पादपङ्कजपरागनिषेवया पवित्रदेहाः यदुः कार्तवीर्यस्य पूर्वजः

---

१ संहरणात् - ग क ज । २ कल्मषं - क । कल्कं - ख ।

तप्तं तपो विविधलोकसिसृक्षया मे
आदौ सनात्सुतपसस्तपतः सनोभूत् ।
प्राक्कल्पसम्प्लवविनष्टमिहात्मतत्त्वं
सम्यग्जगाद मुनयो यदचक्षतात्मन् ॥ ५ ॥

धर्मस्य दक्षदुहितर्यजनि स्वमूर्त्यां
नारायणो नर इति स्वतपः प्रभावः ।

---

हैहयः कार्तवीर्यार्जुनः तौ आद्यौ येषां ते तथा । अमर्यीं विष्णुप्रधानां योगर्धिं अणिमादियोगसिद्धिं आपुरित्यन्वयः । 'अः इति ब्रह्मे'ति श्रुतेः । मयटोऽपि प्राधान्ये प्रयोगदर्शनात् । उभयीमिति पाठः इहलोकपरलोकविषयां सगुणनिर्गुणविषयां चेत्यन्यव्याख्यानञ्च नाऽस्नायज्ञोनामिति ज्ञातव्यम् ॥ ४ ॥

आदावित्युभयत्र सम्बध्यते । यदा आदौ मया विविधलोकसिसृक्षया तपः तप्तं कृतं तदा मे मम तपतः तपः कुर्वतः सतः सुतपसः सर्वपूज्यतपस. सनात् आदौ सनोत्पत्तेः पूर्वं नः अस्माकमर्थे स विष्णुनामाभूदित्यन्वयः । अवतीर्य च यत्तत्त्वं मुनयः आत्मन् आत्मनि हृदयपद्मकर्णिकायां अचक्षत । प्राक्कल्पस्य सम्प्लवेन जलीभावेन प्रलयेन इह जगति विनष्टं तिरोहितं तत् आत्मतत्त्वं सम्यग्जगाद मम उपदिदेशेत्यन्वयः । 'ब्रह्मणस्तपतः पूर्वं विष्णुर्जात उत्क्रमः' इत्यादिवाक्यञ्चेममर्थमनुवदति । 'सनात् सम्भजनात् समाराधनलक्षणात् स्वतपसः स्वतपःसाधनात् ज्ञानभक्तिरूपात् कारणादिति यावत् । सः आराधितो देवः चतुःसनोऽभूत् सनकः सनन्दनः सनातनः सनत्कुमार इति चतुर्मूर्तिरभूदि'तीदं पूर्वोक्ततुल्यमिति[४] । अस्यावतारस्य मुख्यप्रयोजनं जगद्रक्षणम् । आत्मतत्ववचनं प्रासङ्गिकमिति ज्ञातव्यम् । तदभिप्रायेणोक्तमाचार्यैः सर्वज्ञैः- 'यश्च पाति सदा लोकानजितो जयतां वरः' इत्यादि ॥५॥

धर्मस्य भगवतः दक्षदुहितरि दक्षपुत्र्यां स्वमूर्त्या सच्चिदानन्दलक्षणस्वदेहेन नारायणः नरः इति नाम्नाऽजनि । कीदृशः स्वतपसः स्वज्ञानस्य प्रभावो माहात्म्यं यस्मिन् सः स्वतपःप्रभावः । प्रताप-

---

१ अयं ज पाठः । अन्यत्र उभयीमिति पाठे इहलोकपरलोकविषयां । सगुणनिर्गुणविषयां चेति व्याख्यानम् ।
२ अनामधेयानां - ज । ३ ज्ञानभक्तिपूर्वान् - ज । ४ पूर्ववदपव्याख्यानमित्यर्थः । स्वतपसः स चतुःसनोऽभूदिति पाठस्तत्पक्षे । ५ नारायण इति नर इति च नाम्ना भगवानजनीत्यर्थः ।

दृष्टात्मनो भगवतो नियमावलोपं
देव्यस्त्वनङ्गपृतना घटितुं न शेकुः ॥ ६ ॥

कामं दहंति कृतिनो ननु रोषदृष्ट्या
रोषं दहन्तमुतते न दहन्त्यसह्यम् ।
सोऽयं यदन्तरमलं निविशन्बिभेति
कामः कथं नु पुनरस्य मनः श्रयेत ॥ ७ ॥

---

माहात्म्ययोः प्रभावः स्यादित्यतः लोकशिक्षार्थं स्वतपः प्रतापवान्वा । अत्रेदं तात्पर्यं नारायणो हरिः कृष्ण इति त्रयः विष्णोः साक्षादवताराः नरनाम्नि अनन्ते अन्तर्यामितया नरनामावतीर्ण इति तत्र लोकशिक्षार्थं तपः कुर्वाणौ बदर्यां वसन्तौ सहैव तिष्ठत इति नारायणो नर इत्येतावेवोक्तौ इति ज्ञातव्यम् । 'नरो नारायणश्चैव हरिः कृष्णस्तथैव च' इत्यादिवचनात् । स्वतपःप्रभाव इत्युक्तं विवृणोति– दृष्टात्मन इति । दृष्टात्मनः नित्यमपरोक्षीभूतनिजस्वरूपस्य नरनारायणात्मनः भगवतः नियमावलोपं तप आदेर्भङ्गं अनङ्गस्य पृतनाः सेनास्थानीयाः देवस्त्रियः घटितुं कर्तुं न शेकुरित्यन्वयः । किञ्च स्वतोऽप्यधिकसौन्दर्यमन्दिराणां भगवता तत्क्षणमनुसृष्टानां स्त्रीणां दर्शनात् लज्जितास्ततो न्यवर्तन्ते-त्यस्मिन्नर्थे तुशब्दः । यद्यप्यनङ्गपृतनाः तथापीति यद्यर्थे वा ॥ ६ ॥

क्रोधवत एव मनसि कामः पदं लभते । हरेस्तु स एव पदं नाप्नोति । नितरां कामः । अतः तत्साधनं न कार्यक्षममभूदित्याह– काममिति । कृतिनः महात्मानः शङ्करादयः रोषाविष्ट-दृष्ट्या कामं दहन्ति ननु प्रसिद्धोयमर्थः । उत शब्दोप्यर्थे । तेऽपि दहन्तं रोषं न दहन्ति । अत्र हेतुगर्भं विशेषणमाह– असह्यमिति । सोऽयं रोषः यस्य हरेरन्तरं मनः । निविशन् निवेष्टु-मिच्छन् अलं बिभेति । अत्र हेतुरमलमिति वा । क्रोधनिवेशनसहकारिरागद्वेषलक्षणमलविधुरत्वा-दित्यर्थः । कामः अस्य हरेः मनः कथं नु श्रयेत । न कथमपि । सहकारिणः क्रोधस्य प्रवेश-सन्देहादित्यर्थः । कञ्चनान्तरमासाद्यापीत्यर्थे पुनरिति ॥ ७ ॥

---

१ अयं ट पाठः । मूलकोशे - 'मधुसूदने अन्तर्निविशन्' । अत्र 'हेतुरमलमिति वा' इत्यनेन अन्तरम् अलमिति अन्तः अमलमिति च द्वेधा पदच्छेदोऽभिमत इति ज्ञायते ।

विद्धः सपत्न्युदितपत्रिभिरन्ति राज्ञो
बालोऽपि सन्नुपगतस्तपसे वनाय ।
तस्मा अदाद्ध्रुवगतिं गृणते प्रसन्नो
दिव्याः स्तुवन्ति मुनयो यदुपर्यधस्तात् ॥ ८ ॥

यद्वेन मुत्पथगतं द्विजवाक्यवज्र-
निष्पिष्टपौरुषभगं निरये पतन्तम् ।
ज्ञात्वार्थितो जगति पुत्रपदञ्च लेभे
दुग्धा वसूनि वसुधा सकलानि येन ॥ ९ ॥

---

यः उत्तानपादनाम्नो राज्ञः अन्तिके सुनीत्याः सपत्न्याः उदितपत्रिभिः वाग्बाणैः विद्धः सन् बालोऽपि पुरात् अपगतः निर्गतः तपसे वनाय अगमदिति शेषः, तत्र नारदोपदिष्टविधिना तपश्चरते प्रत्यक्षं दृष्ट्वा गृणते स्तुवते तस्मै ध्रुवाय तपसा प्रसन्नो हरिः वासुदेवनामविग्रहविशेषं गृहीत्वा ध्रुवगतिं नित्यस्थानमदादित्यन्वयः । वैकुण्ठाद्यन्यतममदात्किं इत्याशङ्क्य तद्विशिनष्टि– दिव्या इति । यदुपर्यधस्तात् यस्याः ध्रुवगतेः उपरि अधस्तात् स्थिताः अन्तरचारिणः मुनयः यां स्तुवन्ति तामिति शेषः । 'अवतारो महाविष्णोर्वासुदेव इतीरित' इत्यादेः किन्नामायमवतारः ? इति शङ्का निरस्तेति ॥ ८ ॥

अथ उत्पथगतं मामेव यजध्वं मत्तोन्यद्दैवं नास्तीत्यद्वैतमार्गं वर्तिनं अत एव द्विजवाक्यवज्रेण निष्पिष्टपौरुषभगं विनाशितपुरुषकारभागधेयं मृत्वा निरये पतन्तं वेनं ज्ञात्वा परमर्षिभिः जगत्पालनायार्थितः जगति भूलोके पुत्रपदं मथितवेनदक्षिणभुजोत्पन्नपृथ्वाख्यमहाराजस्थानं लेभे इत्यन्वयः । स्वयञ्च पृथुनामा तत्राविष्टे इत्यर्थं चशब्देनानुवदति । 'पृथुर्नाम महाराजस्तत्र विष्णुः स्वयं प्रभुः' इत्यादेः । तत्कर्माह– दुग्धेति । येन पृथ्वाविष्टेन पृथुनाम्ना हरिणा वसुधा भूमिः सकलानि वसूनि अमृतादिद्रव्याणि दुग्धेत्यन्वयः ॥ ९ ॥

---

१ अयं प्रचलितपाठः । मूलकोशे - 'यन् यदा' इत्यस्ति ।

२ तत्र विष्णुः - क ट ग ण ठ छ ।

नाभेरसावृषभ आस सुदेविसूनुः
यो वै चचार समदृग् हृदि योगचर्याम् ।
यत्पारमहंस्यमृषयः पदमामनन्ति
स्वस्थः प्रशान्तकरणः परिमुक्तसङ्गः ॥ १० ॥

सत्रे ममास भगवान्हयशीर्ष एषः
साक्षात्सयज्ञपुरुषस्तपनीयवर्णः ।
छन्दोमयो मखमयोऽखिलदेवतात्मा
वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः ॥ ११ ॥

---

असौ नारायणः नाभे राज्ञः सकाशात् सुदेविसूनुः आसेत्यन्वयः । मेरुदेव्याः सुदेवीति नामान्तरं राजकृतम् । तदवतारकर्माह[1]- यो वा इति । ऋषभनामा यो वै हृदि समदृक् सर्वान्तर्हृदिस्थितं समं ब्रह्म पश्यतीति नित्यापरोक्षीकृतस्वरूप इत्यर्थः । योगचर्यां परमहंसधर्मं चचार । ऋषयः यद्रूपं पारमहंस्यं परमहंसप्राप्यं आमनन्ति । यश्च स्वस्थः स्वाधारः प्रशान्तकरणः प्रकृष्टसुखात्मकदेहेन्द्रियः अत एव परिमुक्तसङ्गः बाह्यसुखानपेक्षः । विधिनिषेधविनुक्तस्य योगचर्याचरणं किमर्थमित्याशङ्का वा इत्यनेन निरस्ता । लोकसंग्रहार्थत्वेन तदाचरणप्रसिद्धेरिति । स्वस्थ इत्यादि विशेषणबाहुल्याच्च प्राप्यप्रयोजनान्तरं नास्ति ॥ १० ॥

साक्षाच्चयः एष यज्ञपुरुषः मम सत्रे यज्ञे नाम्ना हयशीर्ष आसेत्यन्वयः । तिर्यग्योनित्वेप्यैश्वर्यादिगुणसामग्रीमानित्याह- भगवानिति । तपनीयं रूप्य हेम्नोरित्यभिधानात् मूलावताररूपापेक्षया उभयवर्णत्वं युक्तम् । अनेन साक्षान्नारायण एवेति निरणायि । हिरण्यश्मश्रुरित्यादिश्रुतेः । इतोप्ययं नारायण एवेत्याह- छन्दोमय इति । छन्द आदीनां आधारत्वात् विषयत्वादुद्देश्यत्वात् अन्तर्यामित्वात् तन्मयत्वम् । न तु तदात्मत्वम् । तत्कर्म चाह- वाच इति । अस्य हयग्रीवस्य श्वसतः श्वासं कुर्वतः नस्तः नासिकायाः उशतीः भगवद्गुणप्रतिपादकत्वेन शुद्धाः श्वासरूपाः वाचः वेदादिलक्षणाः बभूवुरित्यन्वयः । 'छन्दांसि च मखाश्चैव देवा लोकाश्च सर्वशः' इत्यादिना मयटो विकारार्थत्वं प्रत्युक्तम् ॥ ११ ॥

---

१ प्रयोजनमाह - क ।

मत्स्यो युगान्तसमये मनुनोपलब्धः
क्षोणीमयो निखिलजीवनिकायकेतः ।
विस्रंसितानुरुभये सलिले मुखान्म-
आदाय तत्र विजहार ह वेदमार्गान् ॥ १२ ॥

क्षीरोदधावमरदानवयूथपाना-
मुन्मथ्नताममृतलब्धय आदिदेवः ।
पृष्ठेन कच्छपवपुर्विदधार गोत्रं
निद्रेक्षणोऽद्रिपरिवर्तकषाणकण्डुः ॥ १३ ॥

त्रैविष्टपोरुभयहारिनृसिंहरूपं
कृत्वा भ्रमद्भ्रुकुटिदंष्ट्रकरालवक्त्रम् ।
दैत्येन्द्रमाशुगदयाभिपतन्तमारा
दूरौ निपात्य विददार नखैः स्फुरन्तम् ॥ १४ ॥

---

मे मुखात् विस्रंसितान् निर्गतान् वेदमार्गान् हयग्रीवदैत्येनापहृतान् दृष्ट्वा मत्स्योऽवतीर्य तं हत्वा तान् समादाय स्थितः पुनर्युगान्तसमये मन्वन्तरप्रलये सप्तर्षिभिः सह स्तुवता वैवस्वतमनुना उपलब्धः दृष्टः क्षोणीमयः क्षोणीमयनावाश्रयत्वात् अत एव निखिलजीवनिकायानां केतः आश्रयः । तत्र उरुभये महाभयङ्करे सलिले प्रळयसमुद्रजले विजहारेत्यन्वयः ॥ १२ ॥

अमृतलब्धये अमरदानवयूथपानां क्षीरसमुद्रमुन्मथ्नतां सतां अतिभारेण क्षीरोदधौ मज्जन्तं गोत्रं पर्वतम् । स आदिदेवः कच्छपवपुः भूत्वा पृष्ठेन विदधारेत्यन्वयः । 'उपर्यधश्चात्मनि नेत्रगोत्रयो'रित्यर्थ-द्योतको वीत्युपसर्गः । तज्जातिस्वभावमाह- निद्रेक्षण इति । निद्रयेषन्मीलितनेत्रः । निद्राहेतुमाह- अद्रीति । मन्दराद्रेः परिवर्तः परिभ्रमणं तेन कषाणं विलेखनं तेन जाता कण्डुः कण्डूयनं यस्य स तथा ॥ १३ ॥

त्रैविष्टपानां देवानां दैत्याद्गुरुभयं तद्धारितद्धननशीलम् । भ्रमन्त्या स्फुरन्त्या भ्रुकुट्या दंष्ट्राभ्याञ्च करालं भयङ्करं वक्त्रं यस्य तत्तथा । नृसिंहयोः नरस्य सिंहस्य च रूपमिव रूपं कृत्वा स हरिः आरात् दूरात् गदया अभिपतन्तं स्फुरन्तं दैत्येन्द्रं हिरण्यकशिपुं वेगेन ऊरौ निपात्य नखैः विददारेत्यन्वयः दृ विदारण इति धातोः ॥ १४ ॥

अन्तः सरस्युरुबलेन पदे गृहीतो
ग्राहेण यूथपतिरम्बुजहस्त आर्तः ।
आहेदमादिपुरुषाखिललोकनाथ-
तीर्थश्रवः श्रवणमङ्गलनामधेय ॥ १५ ॥

स्तुत्वा हरिस्तमरणार्थिनमप्रमेय-
श्चक्रायुधः पतगराजभुजाधिरूढः ।
चक्रेण नक्रवदनं विनिपाट्य तस्मा-
द्धस्ते प्रगृह्य भगवान्कृपयोज्जहार ॥ १६ ॥

ज्यायान्गुणैरवरजोऽप्यदितेः सुतानां
लोकान्विचक्रम इमान्यदथोऽधियज्ञः ।

---

यदा यूथपतिः गजेन्द्रः सरसि अन्तः ग्राहेण पदे गृहीतः आर्तः सन् अम्बुजहस्तः हे आदिपुरुष अखिललोकनाथ तीर्थश्रवः पावनकीर्ते श्रवणमात्रेण मङ्गलप्रदनारायणाद्यभिधान त्वं अस्मात्रक्ष इतीदमाह ॥ १५ ॥

तदा तापसनामा भगवान् अरणार्थिनं शरणार्थिनं तं स्तुत्वा तत्रागत्य कृपया तं हस्ते प्रगृह्य उज्जहार । भगवच्छब्दवाच्यत्वं ऋष्यादीनामप्यस्तीति ततो व्यावर्तयति– **अप्रमेय इत्यादिना ।** अप्रमेयः इयत्तारहितः । एतदाकाशस्याप्यस्तीत्यतः– **चक्रायुध इति ।** नन्दनेन योद्धाप्युच्यत इति तत्राह– **पतगेति ।** पतगराजो गरुडः तस्य भुजं अधिरूढः । भुजस्कन्धयोरतिसामीप्यादेवमुक्तम् । किङ्कृत्वा– चक्रेण सुदर्शनेन नक्रस्य ग्राहस्य वदनं विनिपाट्य छित्वा 'हरिस्तापसनामासौ जातस्तपसि वै मनुः' इत्यादेः कोयमवतारो नाम इति शङ्का निरस्ता ॥ १६ ॥

वामनत्रिविक्रमावतारौ तत्कर्म चाह– **ज्यायानित्यादिश्लोकद्वयेन ।** अत्र यच्छब्दावध्याहार्यौ । तथाहि– यः अधियज्ञः भगवान् गुणैः ज्यायानपि अदितेः सुतानां अवरजोऽभूत् तेन भगवता दैत्यानां गर्वं वामयति उद्गारयति इति वामनः तेन वामनरूपेण त्रिपदच्छलेन क्ष्मा जगृहे इति यत् अथो तस्मात् स एव वामनः इमान् त्रीन् लोकान् त्रिभिः पदैः विचक्रमे । तस्मात् त्रिविक्रम इति

क्ष्मा वामनेन जगृहे त्रिपदच्छलेन
याञ्चामृते पथिचरन्प्रभुभिर्न चाल्यः ॥ १७ ॥

नार्थोबलेरयमुरुक्रमपादशौच-
मम्भः शिवं धृतवतो विबुधाधिपत्यम् ।
यो वै प्रतिश्रुतमृतेऽपि च शीर्षमाण-
मात्मन्यमङ्गमनसा हरयेमिमेने ॥ १८ ॥

तुभ्यञ्च नारदभृशं भगवान्विवृद्ध-
भावेन साधु परितुष्ट उवाच योगम् ।
ज्ञानञ्च भागवतमात्मसुतत्वदीपं
यद्वासुदेवशरणा विदुरञ्जसैव ॥ १९ ॥

---

चाभूदिति वाक्यशेष इत्यर्थः । किमर्थमेवं हरिणा कृतं अत्राह– **याञ्चामिति** । मार्गवर्ती पुमान् प्रभुभिरप्युपायेन[1] विना न चाल्य इति न्यायदर्शनार्थमेवं कृतमिति भावः । यद्वा अक्लिष्टः क्ष्मायां उर्व्यां वामनेन ह्रस्वतरेण रूपेण जगृहे त्रिलोकीमिति शेषः । कथं ? त्रिपदच्छलेन । इमान् त्रीन् लोकान् विचक्रम इति यस्मात् तस्मात् अदितेः सुतानां जन्मना अवरजोऽपि गुणैः ज्यायान् । सम-मन्यत् ॥ १७ ॥

त्रिपदच्छलेन त्रैलोक्यं दत्तवतो बलेः दानफलमिन्द्रपदावाप्तिरिति सङ्गिरन्ते केचित् । तन्न । किन्तु हरितोषणद्वारा मुक्तौ आनन्दोद्रेकिता एव । 'ऐन्द्रं पदं नान्तरीयं फलन्तु हरितोषण'मित्यादे-रित्याशयेनाह– **नार्थ इति** । अङ्ग नारद यः प्रतिश्रुतं पदत्रयं ऋतेऽपि च आत्मन्यं स्वसम्बन्धिशीर्ष-माणं शीर्षाख्यं मानं मनसा मनःपूर्वकं हरये अभिमेने समर्पयामास तस्यास्य उरुक्रमपादशौचं अम्भः शिवं शिरसा धृतवतः बलेः यद्विबुधाधिपत्यलक्षणं फलं अयं अर्थो न साक्षात्फलं न भवति । तन्ना-न्तरीयकमेवेत्यन्वयः । वा इत्यनेनास्यार्थस्यानन्यथात्वं वक्ति ॥ १८ ॥

महिदासनाम्नो हरेरवतारचरितमाह– **तुभ्यमिति** । विवृद्धभावेन समुद्रिक्तभक्त्या साधुपरितुष्टः नाम्ना महिदासो भगवान् तुभ्यं अस्मदादिभ्यश्च भगवद्विषयं कर्मयोगं ज्ञानयोगञ्च उवाचेत्यन्वयः । आत्मेत्यनेन भागवतत्वं स्पष्टयति । अत्र प्रमाणमाह– **यदिति** । यत् ज्ञानं वासुदेवशरणाः ब्रह्मादयः । अवैष्णवनिषेधार्थ एवशब्दः । तदुक्तम्– 'ऐतरेयो हरिः प्राह नारदाय स्वकां तनुम् । यत्राप्युर्वैष्णवा नान्ये यद्गते न सुखं पर'मिति ॥ १९ ॥

---

१ उपायैः - क ट ग ठ ज ञ ।

चक्रञ्च दिक्ष्वविहतं दशसु स्वतेजो
मन्वन्तरेषु मनुवंशधरो बिभर्ति ।
दुष्टेषु राजसु दमं विदधत्स्वकीर्तिं
सत्ये निविष्ट उशतीं प्रथयंश्चरित्रैः ॥ २० ॥

धन्वन्तरिश्च भगवान्स्वयमास देवो
नाम्ना नृणां पुरुरुजां रुज आशु हन्ति ।
यज्ञे च भागममृतायुरवाप चाद्धा
आयुश्च वेदमनुशास्त्यवतीर्य लोके ॥ २१ ॥

क्षत्रं क्षयाय विधिनोपहृतं महात्मा
ब्रह्मध्रुगुज्झितपथं नरकार्तिलिप्सु ।
उद्धन्त्यसाववनिकण्टकमुग्रवीर्य-
स्त्रिःसप्तकृत्वउरुधारपरश्वधेन ॥ २२ ॥

---

राजराजेश्वरावतारं तच्चरितञ्चाह— चक्रञ्चेति । राजराजेश्वर इति नाम्नाऽवतीर्णो हरिः स्वायम्भुवादिमनुवंशधरः सन् दुष्टेषु राजसु दमं विदधत् सत्ये धर्मे सत्यसन्धाने वा निविष्टः उशतीं कमनीयां स्वकीर्तिं चरितैः प्रथयन् प्रख्यापयन् मन्वन्तरेषु प्रियव्रतादिचक्रवर्तिष्वप्यास्थितः दशसु दिक्षु अविहतं अप्रतिहतं स्वतेजः स्वरूपभूतप्रभावं चक्रं आज्ञालक्षणं बिभर्तीत्यन्वयः । मन्वन्तरेषु भगवांश्चक्रवर्तिषु संस्थितः' इत्यादिकमत्र मानम् ॥ २० ॥

देवो भगवान् स्वयमेव विशेषावेशमन्तरेण धन्वन्तरिश्च आस । अवतीर्णश्च पुरुरुजां बहुरोगाणां रुजः रोगान् नाम्ना उच्चारितेन हन्ति । स एव अमृतायुः नित्यमुक्तः सन् अद्धा यज्ञे भागञ्चावाप । आयुर्वेदञ्च वैद्यशास्त्रञ्चानुशास्ति । कृत्वा लोके प्रवर्तयति ॥ २१ ॥

भार्गवावतारं तत्कर्म च संक्षिप्याह— क्षत्रमिति । उं रुद्रं ग्रसतीति उग्रं वीर्यं यस्य स उग्रवीर्यः । आत्मभ्यः पुरुषेभ्यः महान् पुरुषोत्तमः असौ उर्वी धारा निशिताग्रं यस्य सः ऊरुधारः स चासौ परश्वधः परशुः तेन अवनिकण्टकं अत एव नरकार्तिलिप्सु नरकदुःखं लब्धुकामं उज्झितपथं त्यक्तसन्मार्गं ब्रह्मधृक् ब्राह्मणद्रोहि अतएव विधिना दैवेन क्षयाय उपहृतं समर्पितं क्षत्रं क्षत्रियकुलं उद्धन्ति उन्मूलयतीत्यन्वयः । त्रिःसप्तकृत्वः एकविंशतिवारम् ॥ २२ ॥

कृत्स्नप्रसादसुमुखः कलया कलेश
इक्ष्वाकुवंश अवतीर्य गुरोर्निदेशे ।
तिष्ठन्वनं सदयितानुज आविवेश
यस्मिन्विरुध्य दशकन्धर आर्तिमार्च्छत् ॥ २३ ॥

यस्मा[1] अदादुदधिरूढभयाङ्गवेपो
मार्गं सपद्यरिपुरं हरवद्दिधक्षोः ।
दूरेसुहृन्मथितरोषसुशोणदृष्ट्या
तातप्यमानमकरोरगनक्रचक्रः ॥ २४ ॥

---

रामावतारं तद्विक्रमञ्च श्लोकत्रयेणाह- कृत्स्नप्रसादेति । दशकन्धरो रावणः यस्मिन् विरुध्य आर्तिं मरणलक्षणां आर्च्छत् प्रापत् सः कलेशः 'प्राणः श्रद्धा खं वायु'रित्यादिश्रुत्युक्तानां कलानां स्वकार्यशक्तिप्रदः प्रभुः कृत्स्नः पूर्णः प्रसादः आनन्दो यस्य स तथा । कार्येण कारणोपलक्षणम् सु सुन्दरं मुखं यस्य सः तथा । कृत्स्नप्रसादश्चायं सुमुखश्चेति समासः । इक्ष्वाकुवंशे कलया स्वरूपांशेना-वतीर्य गुरोः दशरथस्य निदेशे नियोगे तिष्ठन् सदयितानुजः सीतालक्ष्मणाभ्यां सहितः रामः वनमावि-वेशेत्यन्वयः । इक्ष्वाकुवंश अवतीर्येति सन्धिकार्यस्यानाकाङ्क्षितत्वात् कस्यचित् विशेषस्य संभवात् पञ्चमवेदत्वाच्च ॥ २३ ॥

दूरे स्थिता सुहृत् सीता यस्य सः तथा तस्य रामस्य मथितः उज्ज्वलितः रोष एव सुशोणः अग्निः तेन युक्तया दृष्ट्या । 'अग्निः सुशोणः कक्षघ्नः तिमिरारिर्हिरण्यद' इति । मकराश्च उरगाश्च नक्राश्च मकरोरगनक्राः तातप्यमानानां पुनः पुनः पच्यमानानां मकरोरगनक्राणां चक्राणि यस्मिन् स तथा । ऊढं भयं येन स तथा । अङ्गे वेपः कम्पो यस्य स तथा । ऊढभयश्च अङ्गवेपश्च । एवंविधः उदधिः त्रिपुरं हरवत् अरिपुरं लङ्कां दिधक्षोः दग्धुकामाय यस्मै[2] रामाय सपदि मार्गं अदादित्यन्वयः ॥ ॥ २४ ॥

---

१ तस्मा इति कोशान्तरपाठः । ख कोशे यस्मा इत्येव ।
२ तस्मै कोशान्तरपाठः । ख कोशे यस्मै इत्येव ।

वक्षस्स्थलस्पर्शरुग्णमहेन्द्रवाह-
दन्तैर्विलम्बितककुब्जयरूढहासः ।
सद्योऽसुभिः सह विनेष्यति दारहर्तु-
र्विस्फूर्जितैर्धनुष उच्चरितैः ससैन्यः ॥ २५ ॥

भूमेः सुरेतरवरूथविमर्दितायाः
क्लेशव्ययाय कलयासितकृष्णकेशः ।
जातः करिष्यति जनानुपलक्ष्यमार्गः
कर्माणि चात्ममहिमोपनिबन्धनानि ॥ २६ ॥

---

वक्षःस्थलस्पर्शेन रुग्णाः भग्नाः महेन्द्रवाहस्य ऐरावतस्य दन्ताः वक्षःस्थलस्पर्शरुग्णमहेन्द्रवाहदन्ताः तैः विलम्बितः विलम्बं प्राप्तः ककुभां जयः विलम्बितककुब्जयः । तेन रूढः उत्पन्नः हासः अट्टहासो यस्य स तथा ससैन्यः सैन्येन सहितः रावणः दारहर्तुः दारान् सीतां आहर्तुकामस्य तस्य रामस्य धनुषः उच्चरितैः निर्गतैः विस्फूर्जितैः असुभिः सह विनेष्यति । पूर्वं विनयं मदविनाशनेष्यति पुनः सद्यः तत्क्षण एव रामनुक्तैः शरैः विनेष्यति विनाशं प्राप्नोतीत्यन्वयः । 'धनुर्विस्फूर्जितैर्दृष्टो रावणः पूर्वमेव तु । पुनः शरैं रामनुक्तैः सानुबन्धो विनेष्यती'त्यनेन धनुर्विस्फूर्जितैर्विनाशः कथमभूदितीयमाशङ्का निरस्तेति । ससैन्य इत्यस्य विवरणं सानुबन्ध इति ॥ २५ ॥

कृष्णावतारमनन्यसाध्यं तत्कर्म च सङ्गृह्य कथयति- **भूमेरित्यादिश्लोकदशकेन** । सः हरिः सितकृष्णकेश इति नामककलया जातः कर्माणि करिष्यतीत्यन्वयः । कर्मणा तत्वज्ञानं कस्मान्नोदेतीत्यत उक्तम्- **जनेति** । प्राकृताज्ञेयमार्गत्वादित्यर्थः । अवतारप्रयोजनमाह- **सुरेतरेति** । सुरेतरेषां असुराणां वरूथेन समूहेन गुप्तसेनया वा विमर्दितायाः पीडितायाः भूमेः क्लेशव्ययायेति । कीदृशानि कर्माणि आत्ममहिमोपनिबन्धनानि स्वमहिमनिमित्तानि पूतनावधादीनि हरेः कर्माणि परकर्मनिबन्धनानि न भवन्ति । अन्येषां कर्माणि तन्महिमनिबन्धनानीति चार्थः । तदुक्तम्- 'विष्णोर्नान्येन कर्माणि परेषां तन्निबन्धनमि'ति । अत्रानन्तांशे रौहिणेयरामे शुक्लकेशात्मकरामाभिधानो हरिस्तिष्ठन् जगद्रञ्जयतीत्येतत् 'राम एको ह्यनन्तांशः तत्र रामाभिधो हरि'रित्यादिनोक्तम् । अत एवमेव ग्राह्यमिति भावः ॥ २६ ॥

तोकेन जीवहरणं यदुलूपिकाया-
स्त्रैमासिकस्य च पदा शकटोपवृत्तः ।
यद्रिङ्गतान्तरगतेन दिवि स्पृशोर्वा
उन्मूलनन्त्वितरथार्जुनयोर्न भाव्यम् ॥ २७ ॥

यद्वै व्रजे व्रजपशून् विषतोयपीतान्
गोपांस्तु जीवयदनुग्रहदृष्टिवृष्ट्या ।
तच्छुद्धयेऽतिविषवीर्यविलोलजिह्व-
मुच्चाटयिष्यदुरगं विहरन् ह्रदिन्याम् ॥ २८ ॥

तत्कर्म दिव्यमिव यन्निशि निःशयानं
दावाग्निनाशुविपिने परिदह्यमाने ।

---

तोकेन अल्पेनाणुना बालेन अनिर्दिष्टेनेत्यर्थः[1] । शरीरोत्थानादिप्रवृत्तिहेतुत्वात् अवः प्राणाः तान् लुम्पतीति उलूपिका तस्याः पूतनायाः स्तनपानेन जीवहरणं यत्कर्म, त्रैमासिकस्य त्रयो मासाः वयोलक्षणाः निवृत्ता यस्य स तथा तस्य कृष्णस्य उत्क्षिप्तेन पादेन शकटः अपवृत्तः व्यत्यस्ताक्षेण शकटेन शकटास्यो हतः इति यच्च. उलूखलबद्धेन रिङ्गता क्रीडता अन्तरगतेन मध्यगतेन बालेन दिविस्पृशोः सहस्रधनुर्मात्रोर्ध्वदेशं स्पृशतोः तावदुच्छ्रययोरित्यर्थः । यमलार्जुनयोः उन्मूलनञ्च यत् तत्सर्वं कर्म इतरथा विष्णुः न चेत् स्वमहिनोऽनिबन्धनत्वेन न भाव्यम् । 'सहस्रधनुपस्तूर्ध्वं द्युशब्देनापि भण्यत' इति च ॥ २७ ॥

विषतोयपीतान् विषमिश्रजलं पीतवतः जीवयत् अजीवयत् । अनुग्रहलक्षणदृष्टिवृष्ट्या । तच्छुद्धये यमुनाह्रदजलशुद्धये ह्रदिन्यां यमुनानद्यां विहरत् क्रीडितवान् । कालीयनागमुच्चाटयिष्यन् उच्चाटितं करिष्यति च । विषजले विहरणं दुर्गस्थानात् ह्रदात् उच्चाटनञ्चानन्यसाध्यं तदनेन कृतमितरथा न भाव्यमित्यर्थः ॥ २८ ॥

आशु आशुना विष्वग्व्यापिना दावाग्निना विपिने परिदह्यमाने[3] सति निशि सर्वात्मनाऽज्ञाने । 'यत्तु सर्वात्मनाऽज्ञानं निशा सा परिकीर्तिते'ति वचनात् । निःशयानं नितरां शयानं कर्तव्यमूढम् ।

---

१ तोकेनेत्यणुना । कोशान्तरपाठः । मूलपाठः सर्वकोशेऽपि । २ दशादिनानधिकेनेत्यर्थः ।

३ परिदह्यमाने - ख । दंद ह्यमाने - क ग ङ छ ट ण ।

उन्नेष्यति व्रजमितोऽवसितान्तकालं
नेत्रे पिधाप्य सबलोऽनधिगम्य वीर्यः ॥ २९ ॥

गृह्णीत यद्यदुपबद्धुममुष्य माता
शुल्बं सुतस्य न तु तत्तदमुष्य माति ।
यज्जृम्भतोऽस्य वदने भुवनानि गोपी
संवीक्ष्य शङ्कितमनाः प्रतिबोधितस्य ॥ ३० ॥

नन्दश्च मोक्ष्यति भयाद्वरुणस्य पाशा-
द्गोपान्बिलेषु पिहितान्मयसूनुना च ।
जल्प्यावृतं निशि शयानमतिश्रमेण
लोकं विकुण्ठ उपधास्यति गोकुलं स्म ॥ ३१ ॥

---

तर्हि अचेतनं किं नेत्याह— अवसितान्तकालं निश्चितमरणकालं व्रजं तेषां नेत्रे पिधाप्य पिहिते कारयित्वा इतः दावाग्नेः उन्नेष्यतीति यत् तत्कर्म तदन्येषां दिव्यमिव स्तुत्यमेव । स्वस्य तु[1] स्तुत्यमिव । कुत इति तत्राह— अनधिगम्येति । नित्यसन्निहितैः ब्रह्मादिभिरपि अविज्ञेयमाहात्म्यत्वादित्यर्थः । सबल इत्यनेन बलस्याप्येतादृशी शक्तिर्नास्तीति लक्ष्यते ॥ २९ ॥

अमुष्य कृष्णस्य माता सुतं उपबद्धुं यद्यत् शुल्बं दाम गृह्णीत गृह्णाति । तत्तद्दाम अमुष्य सुतस्य न माति न पूर्यते । इत्यनेयत्वलक्षणं माहात्म्यम् । यत् गोपी प्रतिबोधितस्य निद्राया उत्थितस्य जृम्भतः मुखं व्यादायालस्यं परिहरतः अस्य कृष्णस्य वदने चतुर्दशभुवनानि सम्यग्वीक्ष्य शङ्कितमनाः भीतमनाः अभूदिति यच्च तदपि ॥ ३० ॥

पाशात् भयात् निशि अविद्यायां शयानं जल्प्या अन्यथाज्ञानहेतुवाचा आवृतम् । 'अन्यथा ज्ञानहेतुर्या वाक् सा जल्पिः प्रकीर्तिते'ति च । अत एवातिश्रमेण संसारक्लेशेन पीडितं गोकुलं विकुण्ठलोके उपधास्यतीति यत् तदपि ॥ ३१ ॥

---

१ तु इति ञ ख पाठः । अन्यत्र नास्ति ।

गोपैर्मखे प्रतिहते व्रजविप्लवाय
देवेऽभिवर्षति पशून्कृपया रिरक्षुः ।
धर्तोच्छिलीन्ध्रमिव सप्तदिनानि सप्त-
वर्षो महीध्रमनघैककरे सलीलम् ॥ ३२ ॥

क्रीडन्वने निशि निशाकररश्मिगौर्यां
रासोन्मुखः कलपदायतमूर्च्छितेन ।
उद्दीपितस्मररुजां व्रजभृद्वधूनां
हर्तुर्हरिष्यति शिरो धनदानुगस्य ॥ ३३ ॥

ये च प्रलम्बखरदर्दुरकेश्यरिष्ट-
मल्लेभकंसयवनाः कुजपौण्ड्रकाद्याः ।
अन्येऽपि शाल्वकपिबल्वलदन्तवक्त्र
सप्तोक्षशंबरविदूरथ रुक्मिमुख्याः ॥ ३४ ॥

---

मखे आत्मोद्देश्ये यज्ञे देवे इन्द्रे व्रजविप्लवाय जलौघेन गोष्ठनाशाय । 'गोष्ठाध्वनिवहाव्रजा' इति । रिरक्षुः रक्षितुकामः । महीध्रं गोवर्धनगिरिं सलीलं धर्ता धारयिष्यति । उच्छिलीन्ध्रं छत्राकम् ॥ ३२ ॥

निशाकरस्य रश्मिभिः गौर्यां धवलत्वं प्राप्तायां निशि रात्रौ रासक्रीडाभिमुखः श्रीकृष्णः वने क्रीडन् सन् कलपदञ्च आयतञ्च मूर्च्छितञ्च कलपदायतमूर्च्छितं तेन सप्तस्वरसमाहारवता गानेन । 'सप्तस्वरसमाहारो मूर्च्छनेति प्रकीर्तिते'ति । उद्दीपितः उज्ज्वलितः स्मराख्यो रुक् रोगो यासां ताः उद्दीपितस्मररुजः तासां व्रजसदां व्रजनिलयानां वधूनां स्त्रीणां हर्तुः नेतुः धनदानुगस्य शङ्खचूडाख्यस्य शिरो हरिष्यतीति इदमपि विष्णुत्वे घटते नान्यथेति ॥ ३३ ॥

ये प्रलम्बादयः कृष्णाख्येन हरिणा अदर्शनमिताः । ये चान्ये मैन्दादयः तथा जरासन्धादयः ये च कुरुपाण्डवसेनागताः काम्भोजादयः[1] बलपार्थभीमभीष्मद्रोणद्रौण्यादिव्याजाह्वयेन हरिणा नरणं प्रापिताः ते सर्वे तदीयं निलयं यान्तीत्यन्वयः । द्वेषिणः उदासीनाः भक्ताः इति त्रिविधाः

---

१ काम्बोज - क ग ट छ ।

ये वा मृधे समितिशालिन आत्तचापाः
काम्भोजमत्स्यकुरुसृञ्जयकैकयाणाः[1][2] ।
यास्यन्त्यदर्शनमितं बलपार्थभीम-
व्याजाह्वयेन हरिणा निलयं तदीयम्　　॥ ३५ ॥

कालेन मीलितदृशामवमृश्य नृणां
स्तोकायुषां स्वनिगमो बत दूरपारः ।
आविर्हितस्त्वनुयुगं स हि सत्यवत्यां
वेदद्रुमं विटपशो विभजिष्यति स्म　　॥ ३६ ॥

---

जीवाः । तत्र द्वेषिणः नितरां क्षीयते सुखं यस्मिन् तदन्धन्तमः यान्ति । उदासीनाः निरयं नरकम् । भक्ताः निकामस्य अभीष्टस्य आनन्दस्य प्राप्तिः यस्मिन् तं वैकुण्ठादिलोकं यान्तीत्यर्थः । सर्वञ्च स्थानं हरेर्विद्यमानम् । तदुक्तम्– 'विद्वेषिणोप्युदासीना भक्ता अपि न संशयः । हरेर्हि सदनं यान्ति व्यक्तं भक्तैस्तु गम्यते । आरभ्य तम आमुक्तेः कृष्णस्य सदनं यतः । अव्यक्तहरिलोकत्वादन्येषामन्यलोकते'ति । रामभीमादिनामानि हरेरेव मुख्यानि । रमणशक्त्यै[3]भयवर्णादीनां शब्दवृत्तिहेतूनां हरौ[4] मुख्यत्वात् अन्यत्रामुख्यत्वात् व्यवहारार्थं सङ्केतितत्वात् व्याजानि । तदप्युक्तम्– 'रामभीमार्जुनादीनि विष्णोर्नामानि सर्वशः । रमणाभयवर्णाद्याः शब्दवृत्तेर्हि हेतवः' इत्यादि । रयगताविति धातुः । रलयोरभेदः । न्यग्भावरयं नीचगतिं तम इति वा । 'निर्न्दर्भे[6] दनिकामयोः इति' ॥ ३४ ॥ ३५ ॥

कालबलेन मीलितदृशां उत्सन्नज्ञानानां स्तोकायुषां अल्पायुषां नृणां स्वनिगमः स्वविषयो वेदः दूरपारः इत्यवमृश्य स विष्णुः बत कृपया सत्यवत्यां आविर्हितः अवतीर्णः वेदद्रुमं विटपशः शाखोपशाखाभेदेन विभजिष्यतीत्यन्वयः । कस्मिन्[7]युगे इत्यत उक्तम्– अनुयुगमिति । एतदुक्तं भवति । तृतीये सप्तमे षोडशे पञ्चविंशे अष्टाविंशे च द्वापरे पूर्वेषु चान्यैर्व्यासनामभिः विभाजयिष्यति । अष्टाविंशे स्वयमेव विभजिष्यतीति । 'तृतीये सप्तमे चैव षोडशे' इत्यादिवचनञ्च विशेषवाचिना तुशब्देन गृहीतम् । कृष्णावतारादुपरि व्यासावतारकथनं तदुपरितनमन्वन्तरेष्वपि व्यासावतारसद्भावादविरुद्धमित्यस्मिन्नर्थे हिशब्दः । पुराणप्रसिद्धेरिति ॥ ३६ ॥

---

१ काम्बोज - क ग ट छ ।　२ कैकयाद्याः - क ठ ।
३ भरणशक्त्यभय - ख ।　४ अयं ख ठ ङ पाठः । अन्यत्र - हरेः ।
५ नरणाभय - ख ।　६ निन्यग्भाव - ङ ग ।　७ कस्मिन्निन् युगे - ग ।

देवद्विषां निगमवर्त्मनि विष्ठितानां
पूर्भिर्मयेन विहिताभिरदृश्यमूर्तिः ।
लोकान्घ्नतां मतिविमोहमतिप्रलोभं
वेषं विधाय यदभाषत औपधर्म्यम् ॥ ३७ ॥

यर्ह्यालयेष्वपि सतां न कथा हरेः स्युः
पाषण्डिनो द्विजजना वृषला नृदेवाः ।
स्वाहा स्वधा वषडिति स्म गिरो न यत्र
शास्ता भविष्यति कलेर्भगवान्युगान्ते ॥ ३८ ॥

---

देवद्विषां मतिविमोहं बुद्धिमोहजनकं अतिप्रलोभं अतिवञ्चकं बालवेषं विधाय यत् औपधर्म्यं उपधर्माणां पाषण्डधर्माणां[1] प्रतिपादकं शास्त्रं तदभाषतेत्यन्वयः । नारायण इति शेषः । एतेऽसुराः के इत्याशङ्क्य पूर्वजन्मकर्मपूर्वकं तान्विशिनष्टि– निगमेत्यादिना । प्राग्जन्मनि मयेन विहिताभिः तिसृभिः पूर्भिः पुरीभिः लोकान् सतां नाशयतां रुद्रेण [2]रणे हतानां पुनर्विप्रजन्म लब्ध्वा निगमेन विहिताभिः क्रियाभिः निगमवर्त्मनि विष्ठितानां वेदमार्गे प्रतिष्ठाय यज्ञादिविशिष्टकर्मानुष्ठाने स्थिराणां अदृश्या मूर्तिः यस्य स तथा दैत्यैरज्ञेयस्वरूप इत्यनेन ततो वेदमार्गाच्चालनाद् देवैः प्रत्यर्थीकृत्य प्रार्थित इति ज्ञातव्यम् । बुद्धोक्तशास्त्रस्य वेदबाह्यधर्मप्रतिपादकत्वश्च ज्ञजनदृष्ट्या । वेदोऽप्रमाणमित्यादिरूपस्य तस्यैव विष्णौ प्रमाणमित्यादिवेदप्रतिपाद्यार्थत्वेन देवेभ्यः प्रशान्तसंहितायां हरिणा उक्तत्वात् इति द्योतनाय अभाषतेत्युक्तम् । स्वसूत्राणां भाष्यञ्च कृतवानित्यर्थः ॥ ३७ ॥

यर्हि यस्मिन्युगे सतां आलयेष्वपि हरेः कथा न स्युः । द्विजजनाश्च पाषण्डिनः पाषण्डवर्तिनः स्युः । नृदेवाः वृषलाः धर्मविनाशकाः । यत्र यस्मिंश्च युगे स्वाहादिगिरो न सन्ति स्म । वचनाभावे स्मरणमपि नास्ति । इतिशब्दः आद्यर्थे । तदा तस्य कलेः युगस्योपान्ते अवसाने भगवान् शास्ता भविष्यति । दुष्टानामिति शेषः । इत्यन्वयः । इति शब्दः स्वरूपावतारकथनसमाप्तिवचनो वेति ॥ ॥ ३८ ॥

---

१ पाखण्ड - ग छ ।  २ अयं ग ट पाठः । अन्यत्र नास्ति ।

सर्गे तु योऽहमृषयो नव ये प्रजेशाः
स्थानेऽथ धर्ममखमन्वमरावनीशाः ।
अन्ते त्वधर्महरमन्युवशासुराद्याः
मायाविभूतय इमाः पुरुशक्तिभाजः ॥ ३९ ॥

विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह
यः पार्थिवान्यपि कविर्विममे रजांसि ।
चस्कम्भ यः स्वरभसा स्खलितं त्रिपृष्ठं
यस्मां निशाम्य सदनादुरुकम्पमानम् ॥ ४० ॥

---

मायाविभूतीराह– सर्ग इति । योऽहं चतुर्मुखः ये च कर्दमाद्याः ऋषयः ये च मरीच्याद्याः नवप्रजापतयः ते सर्वे सर्गे सृष्टिसमये प्राप्ते पुरुशक्तिभाजः पूर्णशक्तिभाजः हरेर्मायाविभूतयः । अथ यः धर्मः ये मखाः ये चतुर्दशमनवः ये चामरेशाः चतुर्दशेन्द्राः ये चावनीशाः प्रियव्रतादयः ते सर्वे स्थाने स्थितिकाले प्राप्ते पालनाय विष्णोर्मायाविभूतयः । यः अधर्मः यश्च हरो रुद्रः ये च मन्युवशासुराद्याः क्रोधवशासुरपुरःसराः ते सर्वे अन्ते तु संहारकाले च प्राप्ते संहाराय हरेर्मायाविभूतयः इत्यन्वयः । सृष्टिपालनसंहारकालेषु मायया स्वेच्छया विविधो भूत्वा अजरुद्रादिषु स्थित्वा सृष्टिपालनसंहारान्करोति । यद्वा मायया भगवदिच्छया अजरुद्रादीनां सदा विभूतयः भवन्तीत्यतो अजरुद्रादयो हरेः मायाविभूतयः । न तु स्वरूपविभूतयः इत्ययं विशेषः तुशब्दसूचितया 'हरीच्छया विभूतिर्यद्ब्रह्मादीनां सदा भवेत् । इच्छया वा बहुविधस्तेषु विष्णुः स्वयं स्थितः । अतो मायाविभूतित्वं तेषां मत्स्यादयः स्वयम्' इति स्मृत्या गृहीत इति ॥ ३९ ॥

ननु स्वरूपमायाविभूतीनां एतावत्त्वं चेत् इदं सर्वसुलभज्ञानमित्याशङ्क्य अनन्तायुषापि विभूतीनां गणनं न सुशकमित्याह– विष्णोर्न्विति । यः त्रिपृष्ठस्य सदनाद्विशरणान्नाशादुरुकम्पनानं मां निशाम्य स्वरभसा त्रिविक्रमक्रमणवेगेन स्खलितं[1] चलितं आसन्नपतनं त्रिपृष्ठं सत्यलोकं चस्कम्भ-स्तम्भितवान् । तस्य विष्णोः वीर्यगणनां विभूतिलक्षणमाहात्म्यप्रसङ्ख्यानं प्रति कवीनां कतमोऽर्हति नु न कोपीत्यन्वयः । आदिकविरपि न समर्थ इत्याह– पार्थिवानीति । यः कविः प्रतिभाविशेष-संपन्नोऽपि ब्रह्मा पार्थिवानि रजांसि भूमिपरमाणून् विममे गणितवान् सोऽपि न शक्नोतीति शेषान्वयः । यदिति हेत्वर्थे[2] । अनन्तानि यत् यस्मात् तस्मादिति ॥ ४० ॥

---

१ आस्खलितं - ट । २ यत्र हेतुः - ठ ।

नान्तं विदाम्यहममी मुनयः अग्रेजा
मायाबलस्य पुरुषस्य कुतो परे ये ।
गायन्गुणान्दशशतानन आदिदेवः
शेषोऽधुनाऽपि समवस्यति नास्य पारम् ॥ ४१ ॥

येषां स एव भगवान्दययेदनन्तः
सर्वात्मनाश्रितपदो यदि निर्व्यलीकम् ।
ते वै विदन्त्यतितरन्ति च देवमायां
नैषां ममाहमिति धीः श्वसृगालभक्ष्ये ॥ ४२ ॥

---

अनन्तत्वमुपपादयति- नान्तमिति । विदामीति विकरणव्यत्ययेन चतुर्मुखात् ब्रह्मणः शेषस्य सहस्रमुखत्वकथनात् ज्ञानाधिक्यमनन्तत्यज्ञशङ्कां निवारयति । न समवस्यति न निश्चिनोति 'नाल्याक्षता-दिदानेऽस्त्री शेष' इति वैजयन्तीकोशात् अक्षतार्थवचनवान् शेषः कश्चित् पुमानिति संशयं निरस्यति- दशशतानन इत्यनेन । अयमपि नागेष्वन्यतमः कश्चिदित्यत आह- आदिदेवः इति । अपरे अर्वाचीनाः । अनेन श्लोकद्वयेन 'विष्णोर्नुकं वीर्याणि प्रवोचम् । न ते विष्णोर्जायमान' इत्यृगर्थत उदाहारि ॥ ४१ ॥

नन्वेवं चेत् न कस्यापि ज्ञानाभावेन पुरुषार्थप्राप्तिरित्याशङ्क्य तत्प्रसादेन सर्वं सुलभमित्याह- येषामिति ।

सोऽनन्तो भगवान् स्वयमेव येषां दययेत् दयां करोति ते देवस्य मायां स्वरूपशक्तिं विदन्ति । संसारहेतुं शैवलीं मायां अतितरन्ति च ॥ तत्साधनमन्तरेण दययेच्चेत् तस्य वैषम्यं नैर्घृण्यञ्च स्याता-मित्यत्राह सर्वात्मनेति । तत्रेत्थंभावमाह- नैषामिति । एषां सेवकानां श्वसृगालभक्षणयोग्ये देहे ममाहमिति धीः नास्ति । देहाद्यभिमानशून्यत्वेन भाव्यमिति भावः । तत्तद्योग्यतानुसारेण तत्प्रसादोऽपि बहुविध इत्यस्मिन्नर्थे वै शब्दः ॥ ४२ ॥

---

१ अक्षतं नाशरहितं आशीर्वचनं तद्वान् - इत्यादौ पठ्यते ङ ज ट ग ।
२ ऋगर्थमुदाहरति - ग क ठ ङ च । ३ शैवलिनीं - ख ।

वेदाहमङ्ग परमस्य हि योगमायां
यूयं भवश्च भगवानथ दैत्यवर्यः ।
पत्नी मनोः स च मनुः तदपत्यभूताः
प्राचीनबर्हिऋभुरङ्ग उत ध्रुवश्च ॥ ४३ ॥

इक्ष्वाकुरैलमुचुकुन्दविदेहगाधि-
रघ्वम्बरीपसगरागयनाहुषाद्याः ।
मान्धात्रलर्कशतधन्वनरन्तिदेव-
देवव्रता बलिरमूर्तरयो दिलीपः ॥ ४४ ॥

सौभर्युदङ्कशिबिदेवलपिप्पलादाः
सारस्वतोद्धवपराशरभूरिषेणाः ।
येऽन्ये विभीषणहनूमदुपेन्द्रदत्त-
पार्थार्ष्टिषेण विदुरश्रुतदेवमुख्याः ॥ ४५ ॥

ते वै विदन्त्यतितरन्ति च देवमायां
स्त्रीशूद्रहूणशबरा अपि पापजीवाः ।

---

ननु तर्हि तत्प्रसादयोग्याः के इति तानाह- वेदाहमिति । 'ऋतस्य तन्तुं विततं विवृत्य तदपश्यत्तदभवत्प्रजासु' इति श्रुतिद्योतको हिशब्दः । प्रथमप्रक्रान्तत्वाच्चतुर्मुखः सर्वाधिकं वेत्ति । तदन्ये यथायोग्यं वेत्तार इत्यर्थस्मारको वा । भगवानिति विशेषणात् भवस्य नारदादेर्ज्ञानातिशयोऽस्तीति सूचयति । अथेत्यनेन दैत्येषु प्रह्लादस्य ज्ञाननैर्मल्यं सूचयति ॥ ४३ ॥

अङ्गो वेनस्य पिता । ऐलः इलायाः पुत्रः पुरूरवाः । नाहुषो ययातिः ॥ ४४ ॥

हरेः स्वरूपांशानां उपेन्द्रदत्तादीनां नित्यबद्धगुणेषु सहपाठो दुष्टजनमोहनार्थः ॥ ४५ ॥

अत्र कैमुत्यन्यायमाह– त इति । ये स्त्रीशूद्रहूणशबराः पापजीवाः तेऽपि देवस्य मायां विदन्ति । संसारमतितरन्ति च । किमुतास्मदादय इत्यन्वयः । तर्हि किमिति सर्वे निस्तीर्णसंसाराः

---

१ सर्वस्मादधिकं - ज क ग छ ज ञ ।

यद्यद्भुतक्रमपरायणशीलशिक्षाः
तिर्यग्जना अपि किमु श्रुतधारणा ये ॥ ४६ ॥

शश्वत्प्रशान्तमभयं प्रतिबोधमात्रं
शुद्धं समं सदसतः परमात्मतत्त्वम् ।
शब्दो न यत्र पुरुकारकवान्क्रियार्थो
माया परैत्यभिमुखे च विलज्जमाना ॥ ४७ ॥

---

नाभूवन् तत्राह– यदीति । अद्भुतक्रमो विष्णुः स एव परायणं तस्य शीलं तस्य शिक्षा च येषां ते तथोक्ताः अद्भुतं जगत् क्रामतीति अद्भुतक्रमः । अत्रापि कैमुत्यन्यायमाह– तिर्यगिति । वृन्दा-वनगताः पशुपक्ष्यादयः तिर्यञ्जनाः अपि देवमायां विदन्ति । अतितरन्ति च ये श्रुतधारणाः ते विदन्तीति किमु वक्तव्यमित्यन्वयः ॥ ४६ ॥

अद्भुतक्रमः किंलक्षणकः[1] इति तत्राह– शश्वदिति । यत् शश्वत् सदैकप्रकारम् । प्रशान्तं प्रकृष्टपूर्णसुखम् । अद्वितीयत्वादभयम् । 'द्वितीयाद्वै भयं भवतीति' श्रुतेः । यच्च प्रतिबोधमात्रं निर्दोष-ज्ञानस्वरूपम् । मात्रशब्दोऽवधारणार्थः । प्रतिशब्दो मुख्यार्थः । अत एव शुद्धं रागादिदोषरहितम् । यच्च समं परमाण्वादिपरममहदन्तेषु पदार्थेषु नातिरेकगुणविधुरम्[2] । वैषम्यादिरहितं वा । सदसतः परं व्यक्ताव्यक्तजगतो विलक्षणम् । आत्मतत्त्वं अव्यक्तादिसर्वप्रपञ्चेऽहंभाव[3]रहितम् । पुरूणि बहूनि कारकपदानि कर्तृकर्मक्रियावाचीनि यस्मिन् सन्ति स तथा । अग्निष्टोमाद्यनेकक्रियार्थःशब्दः वाक्य-लक्षणोऽनन्तवेदाख्यः शब्दः यत्र यस्मिन् साकल्येन वाचकत्वेन न वर्तते । तदुक्तम्– 'अव्यक्ताद्यनहं मानादात्मतत्त्वं हरिः स्मृतः । अशब्दश्चाप्रसिद्धत्वाच्छान्तः पूर्णसुखत्वतः' इति । हरिः स्वयं माया-धीनश्चेत् तदुपासकाः कथं तां तरन्ति इति तत्राह– मायेति । माया संसारकारणं प्रकृतिः यस्य अभिमुखे स्थातुं विलज्जमाना यस्मात् यदुपासकेभ्यश्च परैति अपसरति दृष्टिमार्गं विहाय वर्तत इति ॥ ४७ ॥

---

१ किंलक्षणः कः - ग ण । २ नातिरेकेण गुणविधुरम् - क । ३ प्रपञ्चभाव - छ ।

तद्वै पदं भगवतः परमस्य पुंसो
ब्रह्मेति यद्विदुरजस्रसुखं विशोकम् ।
सम्यङ् निशाम्य यतयो यमलोकहेतुं
जहुः सुधामिव निपानखनित्रमिन्द्रः ॥ ४८ ॥

न श्रेयसामपि विभुर्भगवान्यतोऽस्य
भावस्वभावविहितस्य सतः प्रसिद्धः ।
देहे स्वधातुविगमे तु विशीर्यमाणे
व्योमेव तत्र पुरुषो न विशीर्यतेऽजः ॥ ४९ ॥

---

यच्च सर्वगुणपूर्णत्वाद्ब्रह्मेति अजस्रसुखं निरन्तरसुखमिति च विदुः, अतीतानागतवर्तमाना ब्रह्मादयः श्रवणादिभिर्यतमानत्वाद्यतयः साक्षात्परिपाकेन यत् सम्यक् निशाम्य इन्द्रः सुधां प्राप्य निपानखनित्रं कूपखननसाधनं कुद्दालादीव यमेनाधिकृतो लोको नरकाख्यः तस्य हेतुं संसारं जहुः त्यजन्ति, परमस्य पुंसो नारायणस्य पदं स्वरूपं तद्वै तादृक् लक्षणकं हीत्यन्वयः । इन्द्रः ईश्वरः धनवान् सुधां अमृतं जलं प्राप्येति वा ॥ ४८ ॥

इदानीं एवंविधभगवज्ज्ञानाधिकारी सत्पुरुष इत्याह– न इति । न केवलं धर्मादिसर्वश्रेयसां विभुः स्वामी । अपि तु फलदाता च । श्रवणादिसर्वश्रेयसामर्पाति वा । भगवान् अनादिकालमारभ्य हरिप्रसादेन परिवृद्धेन भावस्वभावेन भक्तिस्वभावेन विहितस्य निर्मितस्य अस्य सतः जीवराशेः प्रसिद्धः करतलामलकवत् प्रत्यक्षः स्यादिति यतः अतोऽयं सात्विकप्रकृतिजीवराशिः तादृशज्ञानाधिकारी । एतेनोक्तार्थे ज्ञानिप्रत्यक्षं प्रमाणमुक्तं भवति । भावो भक्तिः प्रणामश्च प्रावण्यमपि चादर इति । उत्पत्तिमतोऽस्यानित्यत्वेन[1] कथं तस्य परमात्मा प्रत्यक्षेण इति तत्राह– देह इति । स्वारम्भकाणां पृथिव्यादिधातूनां विगमे विनाशलक्षणविश्लेषे सति देहे तु विशीर्यमाणे स्वकारणेषु विलीयमाने सति तत्र देहे स्थितः पुरुषः स्वकर्मानुसारेण पुराणि सरन् स्वतोऽजः जननविधुरोऽपि केवलं देहाभिमानेन जायमानः यथा देहे स्थितं व्योम न विशीर्यते तथा न विशीर्यते । अतो देहस्यैवोत्पत्तिमरणधर्मवत्वात् चेतनस्य

---

१ उत्पत्तिमतस्यानित्यत्वेन - ख ।

सोऽयं तेऽभिहितस्तात भगवान्विश्वभावनः ।
समासेन हरेर्नान्यमन्यस्मात्सदसच्च यत् ॥ ५० ॥

इदं भागवतं नाम यन्मे भगवतोदितम् ।
संग्रहोऽयं विभूतीनां तदेतद्विपुलीकुरु ॥ ५१ ॥

---

नित्यत्वात् उचितः तस्य प्रसिद्धः परम इति । अनेन परमत्मापि व्याख्यातः तत्र जीववत् अभिमाननिमित्तजन्मादिमानपि न भवतीति विशेषः । अत एव दृष्टान्तेन हरेः शश्वत्प्रतिबोधादिरूपत्वं न विघटनीयमिति भावः ॥ ४९ ॥

देव देव नमस्तुभ्यमित्यारभ्य प्रश्नप्रतिवचनाभ्यामुक्तमर्थमुपसंहरति- **सोऽयमिति** । समासेन सङ्क्षेपेण । एतावज्ज्ञानं सर्वथा न विस्मर्तव्यमिति भावेनाह- **हरेरिति** । चशब्द एवार्थे । यत् सदसत् कार्यकारणात्मकं जगत् तत्सर्वस्मादन्यस्माद्विलक्षणाद्धरेः नान्यत भिन्नं न । एतदुक्तं भवति । स्वतो हरेः भिन्नमपि तदधीनसत्तादिमत्वेन[1] स्वातन्त्र्याभावेन[2] अभिन्नमिवोच्यते । न तु स्वतो भेदाभावात् । तस्मात् स हरिः स्वतन्त्रोऽन्यदस्मदादिकं सर्वं तदधीनमिति विजानीहीति । तदधीनसत्तादिमत्वात्तदित्युच्यते । तत्र किं नाननित्येतच्चोद्यं 'सत्तादिर्यत्स्वतो विष्णोस्तस्मादन्यः स सर्वतः' इत्यादिना परिहर्तव्यम् ॥ ५० ॥

भगवद्विभूतिसंग्रहरूपमिदं भागवतं पुराणं नृलोके प्रवर्तनाय त्वया व्यासाय विज्ञापनीयमित्यभिप्रायवानाह- **इदमिति** । सर्गादौ यद्भगवता मे मम उदितं तदिदं भागवतं नाम प्रकाशयन् । उपदिश्येति शेषः । कस्मात् भागवतमिति प्रकाश्यमिति तत्राह- **संग्रह इति** । यत्रोद्यत इत्याद्युक्तविभूतीनां 'सर्गे तु योऽङ्गनि'त्याद्युक्तमायाविभूतीनाञ्च संग्रहः क्रोडीकार इति हेतुगर्भः[3] । सङ्क्षिप्योक्तमिति न श्रद्धेयमिति तत्राह- **तदेतदिति** । तदेतन्नृलोके ज्ञानप्रवर्तनायावतीर्णव्यासरूपनारायणाय[4] विज्ञाप्य विपुली कुरु । एतदर्थविस्ताररूपं भागवतपुराणं कुर्वीति विज्ञापयेत्यर्थः । 'नाम प्रकाश्यसंभाव्यक्रोधापगमकुत्सन' इति ॥ ५१ ॥

---

१ एतत्पूर्वं 'अतः' इत्यधिकः पाठः - ग ख ज ट । २ तदात्मत्वेन - क ।
३ हेतुगर्भं - ग । ४ ज्ञानप्रदानाय - क ग छ ट ठ ।

यथा हरौ भगवति नृणां भक्तिर्भविष्यति ।
सर्वात्मन्यखिलाधार इति सङ्कल्प्य वर्णय ॥ ५२ ॥

नृजन्मनि न तुष्येत किम्फलं यमनश्वरे ।
कृष्णे यद्यपवर्गेशे भक्तिः स्यान्नानपायिनी[3] ॥ ५३ ॥

किं स्याद्वर्णाश्रमाचारैः किं दानैः किं तपःश्रुतैः ।
सर्वावन्नोत्तमश्लोके न चेद्भक्तिरधोक्षजे ॥ ५४ ॥

मायां वर्णयतोऽमुष्य ईश्वरस्यानुमोदतः ।
शृण्वतः श्रद्धया नित्यं माययात्मा न मुह्यति ॥ ५५ ॥

॥ इति श्रीमद्भागवते द्वितीयस्कन्धे सप्तमोऽध्यायः ॥

---

एतदेव विशदयति- यथेति । यथा सात्त्विकप्रकृतीनां नृणां सर्वात्मनि सर्वस्वा[1]मिनि अत एवा-खिलाधारे भगवति सर्वोत्तमत्वज्ञानपूर्वकप्रेमलक्षणा भक्तिर्भविष्यति इत्येवं हेतुपूर्वकं सङ्कल्प्य समर्थ्य समाधिभाषया सम्यक् कृत्वा शुकादिशिष्येभ्यो वर्णयेति विज्ञापयेत्यन्वयः ॥ ५२ ॥

इतोऽपि हरिभक्तिजनकपुराणर[2]चनमेव तवावतारप्रयोजनं नान्यदित्यभिप्रेत्याह- नृजन्मनीति । भक्तिविषयोऽन्यः तत्फलदोऽन्य इत्यत उक्तम्- अपवर्गेश इति । कृष्णे पूर्णबलप्राणात्मनि हरौ यद्यन पायिनी नित्या भक्तिः न चेत् न जायते चेत् नृजन्मा पुमान् यमनश्वरे यमात् अन्तकात् नाशं गच्छति नृजन्मनि न तुष्येत अङ्ग पुरुषार्थसाधनां बुद्धिं नाप्नुयात् । धर्मादिफलमस्तीत्याह- किम्फलमिति । धर्मादेः अनित्यस्वर्गादिफलं किं ? नैव फलम् । अत्यल्पफलत्वादित्यर्थः । तस्मात् कृष्णभक्तेरेव नृजन्म-फलत्वात् तत्प्रतिपादकपुराणकरणे विज्ञापनं युक्तमिति भावः ॥ ५३ ॥

किं फलमित्युक्तं विवृणोति- किं स्यादिति । किं स्यादित्याक्षेपः । तदुक्तम् - 'आक्षिप्यते किमित्येतद्यत्राल्पफलता भवेत्' इति । 'प्रश्ने क्षेपे[4] विकल्पे किमिति' यादवः ॥ ५४ ॥

भागवतपुराणोक्तप्रकारेण भगवति भक्तिं कुर्वतः पुंसः पुत्रकलत्रादिलक्षणा माया संसारहेतुः न स्यात् । अत एतत्पुराणकरणं विज्ञापनीयमिति भावेनाह- मायामिति ।

---

१ सर्वस्वात्मनि - क । २ पुराणवररचन ज । ३ स्यादनपायिनी - क । ४ प्रश्नाक्षेपे - ज ।

## ।। अथ अष्टमोऽध्यायः ।।

राजोवाच—

ब्रह्मणा चोदितो ब्रह्मन्गुणाख्यानेऽगुणस्य च ।
यस्मै यस्मै यथा प्राह नारदो देवदर्शनः ।। १ ।।

एतद्वेदितुमिच्छामि तत्त्वं वेदविदां वर ।
हरेरद्भुतवीर्यस्य कथा लोकसुमङ्गलाः ।। २ ।।

प्रथयस्व महाभाग यथाऽहमखिलात्मनि ।
कृष्णे निवेश्य निःसङ्गं मनस्त्यक्ष्ये कलेवरम् ।। ३ ।।

---

अमुष्य ईश्वरस्य जगत्स्रष्टृत्वादिलक्षणां मायां माहात्म्यं सद्गुरुमुखाच्छ्रुत्वा मननपूर्वकं सच्छिष्येभ्यो वर्णयतः तथा तां मायां श्रद्धया अनुमोदतः अनुमोदमानस्य तथा व्याख्यानाद्यशक्त्या शृण्वतः यावज्जीवं श्रवणैकपरायणस्य पुंस आत्मा मनः मायया बन्धकशक्त्या न मुह्यति । अहङ्कारममकाराभ्यां न भ्रमतीत्यतः सर्वसज्जनपुरुषार्थकारणं भागवतकरणविज्ञापनमिति भावः । अमुष्य ईश्वरस्येति सन्व्यकरणेनास्य भागवतस्य वेदसाम्यं सूचयति । यद्वा ईश्वरशब्देन शिवो नोच्यते । तद्विलक्षणशील: ईः लक्ष्मीः तस्याः ईश्वरो नारायण इति द्योतयति । अत्र सवर्णदीर्घत्वं अनुसन्धेयमिति ।। ५५ ।।

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
द्वितीयस्कन्धे सप्तमोऽध्यायः ।।

* * *

## ।। अथ अष्टमोऽध्यायः ।।

अस्मिन्नध्याये परीक्षित् भागवतपुराणप्रतिपाद्यं शुकं पृच्छति । तत्र प्रथमं नारदेन विरिञ्चाज्ञापालनं कथमकारि इति भावेन पृच्छति– ब्रह्मणेति । अगुणस्य नित्यनिर्मुक्तसत्वादिगुणस्य सर्वत्र प्रधानस्येति वा । गुणाख्याने इति तादर्थ्ये सप्तमी । व्यासादन्यस्मै यस्मै ।। १ ।।

नारदव्याससंवादानन्तरं व्यासमुखविगलितभागवतोक्तहरिकथाप्रथनमेव मदभीष्टमितीदमेव तत्त्वं वेदितुमिच्छामीत्युक्तमिति भावेनाह– हरेरिति । यथा प्रथित[2]श्रुतगुणोपसंहारपूर्वकं निःसङ्गं मनः कृष्णे निवेश्य अहं इदं कलेवरं त्यक्ष्ये तथा प्रथयस्वेत्यन्वयः ।। २ ।। ३ ।।

---

१ एतत्पूर्वं तत्रेति अधिकः पाठः - ट । २ श्रुतिशतप्रतिपाद्य - ज ।

शृण्वतः श्रद्धया नित्यं गृणतश्च स्वचेष्टितम् ।
कालेनानतिदीर्घेण[1] भगवान्विशते हृदि ॥ ४ ॥

प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम् ।
धुनोति शमलं कृष्णः सलिलस्य[2] यथा शरत् ॥ ५ ॥

धौतात्मा पुरुषः कृष्णपादमूलं न मुञ्चति ।
मुक्तसर्वपरिक्लेशः[3] पान्थः स्वशरणं यथा ॥ ६ ॥

यदधातुमतो ब्रह्मन्देहारम्भोऽस्य धातुभिः ।
यदृच्छया हेतुना वा भवन्तो जानते यथा ॥ ७ ॥

---

श्रवणादिनेदं फलं स्यादित्याह– शृण्वत इति ॥ ४ ॥

ततः किं तत्राह– प्रविष्ट इति ॥ ५ ॥

तत्फलमाह– धौतात्मेति । पान्थः पथिकः स्वशरणं स्वगृहम् । शरणं गृहरक्षित्रोरित्यभिधानम् ॥ ६ ॥

इत्थं भागवतार्थकथन[4]श्रवणादेः पुरुषार्थहेतुत्वमुक्त्वा स्वतश्चिद्रूपस्य अदेहस्य देहसम्बन्धहेतुं पृच्छति– यदिति । अधातुमतः स्वतः प्रकृत्यादिधातुसम्बन्धरहितस्य नित्यस्य जीवस्यास्य धातुभिः प्रकृत्यादिभिः उपादानकारणैः देहारम्भोऽस्तीति यत् तत् किं यदृच्छया केवलेश्वरेच्छया निमित्तभूतया उतान्येन हेतुना कर्मणा ? अत्र हरीच्छैव हेतुः । तां विना हेत्वन्तरमप्यस्तीति प्रश्नतात्पर्यम् । भवन्तः तदेतत् यथा यथावत्[5] जानते तदस्माकं वदन्त्विति शेषः । धातुभिः नित्ययोगो नास्तीति अधातुमत इत्युक्तम् । 'धातुर्वातादिशब्दादिगैरिकादित्वगादिषु । महाभूतेष्विन्द्रियेषु शब्दयोनिस्वभावयो'रित्यभिधानम् ॥ ७ ॥

---

१ कालेन नातिदीर्घेण - ज । २ सलिलस्य - कोशान्तरेषु सर्वत्र ।
३ मुक्तः सर्वं परिक्लेशैः - ण ग छ । ४ भागवतकथन - ज । ५ यथावस्तु - ण ।

आसीद्यदुदरात्पद्मं लोकसंस्थानलक्षणम् ।
यावानयं वै पुरुष इयत्तावयवैः पृथक् ।
तावानसाविति प्रोक्तस्तथावयववानिव ॥ ८ ॥

अजः सृजति भूतानि भूतात्मा यदनुग्रहात् ।
ददृशे येन तद्रूपं नाभिपद्मसमुद्भवः ॥ ९ ॥

---

पुराणविस्तारिलब्धये[1] जीवानां बन्धहेतुं पृष्ट्वा श्रुतार्थमनुवदति– आसीदिति । आदौ महाप्रलये श्रीसहायतया शयानस्य नारायणस्य सिसृक्षोः परमपुरुषतयावतीर्य तत्वसृष्टिपूर्वकमण्डं सृष्ट्वा तैस्तत्वैः सह अण्डं[2] प्रविश्य अण्डोदेऽपि शेषपर्यङ्के शयानस्य यस्योदराल्लोकसंस्थानलक्षणं चतुर्दशभुवनसन्निवेशरूपं पद्ममासीत् स एवाण्डान्तर्वैराजाख्यो अवतीर्ण इति यावत । अयं पुरुषः अण्डकोशः पुरुषाकारभगवद्रूपेणाधिष्ठितत्वात् पुरुष इत्युच्यते पातालादिभिः इयत्तावयवैः इयत्तावच्छिन्नावयवैः यावान् यावत्परिमाणः असावपि वैरा[3]जाख्यः तावान् तावत्परिमाण इति प्रोक्तः तथावयववानिव तदन्तःस्थितत्वात् तद्भिन्नत्वेऽपि तथा तादृशावयववानिव प्रोक्त इत्यन्वयः । वा इत्यनेन प्रोक्तार्थस्य प्रमाणप्रसिद्धिं 'अयमाध्यात्मिकः शिरःपाण्यादिमान् अस्मदादिदेहः पृथगियत्तावयवैः यावत् परिमाणः असौ आधिदैविको[4] विराड्देहोऽपि तावत्परिमाण' इत्यपव्याख्यानस्य पापहेतुत्वञ्च सूचयति । 'समुच्चये च वै पापे वाक्यारम्भप्रसिद्धयो'रिति ॥ ८ ॥

आसीद्यदुदरादित्युक्तभगवद्रूपदर्शनप्रकारं तदवस्थितिप्रदेशञ्च पृच्छति– अज इति । भूतात्मा स्वसृष्टतत्तत्कार्यव्यापी सर्वविलक्षणात् आत् विष्णोर्जातत्वात् अजो ब्रह्मा तानि अहङ्कारादिजीवान् तदभिमन्यमानानि च तत्वानि सृजति । सृष्टिरपि न स्वातन्त्र्यादित्युक्तम्– यदनुग्रहादिति । पाद्मकल्पे च नाभिपद्मसमुद्भवो विरिञ्चः स्वकारणं पद्मनाभं दिदृक्षुः येन प्रकारेण तद्रूपं ददृशे । तैस्योत्तरत्रान्वयः ॥९॥

---

१ पुराणाधिकार - ण ज ग ट । २ अण्डोद - क । ३ वैराजो विष्ण्वाख्यः - क ट ।
४ आधिदैविक इति ख पाठस्थः । अन्यत्र - अधिदैविकः । ५ अयं पाठः ट क ग छ ज कोशस्थः । मूलकोशे तु तस्योत्तरं वदेत्यन्वय इति पाठः । पक्षद्वयेपि अस्य उत्तरत्र २४ तमश्लोके उदाहर्तुमर्हसीत्यनेनान्वय इत्यर्थः । वदेत्यर्थकाठेन उत्तरमन्वयः इति मूलकोशपाठाक्षरार्थः ।

स चापि यत्र पुरुषो विश्वस्थित्युद्भवाप्ययः ।
मुक्त्वात्ममायां मायेशः शेते सर्वगुणाश्रयः ॥ १० ॥
पुरुषावयवैर्लोकाः सपालाः पूर्वकल्पिताः ।
लोकैरमुष्यावयवाः सपालैरिति शुश्रुमः ॥ ११ ॥
यावान्कल्पो विकल्पो वा यथा कालोऽनुमीयते ।
भूतभव्यभवच्छब्द आयुर्मानञ्च यत्कृतम् ॥ १२ ॥
कालस्यानुगतिर्या तु लक्ष्यतेऽण्वी महत्यपि ।
यावतीः कर्मगतयो यादृशीर्द्विजसत्तम ॥ १३ ॥

---

विश्वस्य स्थित्युद्भवाप्ययाः यस्मात्स तथोक्तः । मायायाः बन्धकशक्तेः लक्ष्म्या वा ईशः । ज्ञानानन्दादिसर्वगुणानां आश्रयः सृष्ट्यादौ गुणभूतानां ब्रह्मादीनां आश्रयो वा । पुरुषः पुरुषाकारवान् सः पद्मनाभः आत्ममायां स्वेच्छाधीनां बन्धकशक्तिं मुक्त्वा तत्प्रवर्तकत्वं विरम्य मुक्तप्रवर्तकत्वेन यत्र यस्मिन् लोके शेते ॥ १० ॥

अधुना पुनरपि श्रुतार्थमनुवदति— पुरुषेति । अण्डस्थितस्य वैराजाख्यस्य पुरुषस्य हरेर्निजावयवैः सपालाः इन्द्रादिलोकपालैः सहिताः पातालादयो लोकाः पूर्वकल्पिताः प्रथमं सृष्टाः[१] । सपालैः पातालादिलोकैः अमुष्य वैराजाख्यस्य हरेः बाह्यावयवाः कल्पिताः । प्रतिमात्मकब्रह्माण्डावयवैः[२] कल्पमा इत्यन्वयः । सपालैः लोकैः अमुष्यावयवाः प्रतिमावत् सङ्कल्पिता इति वा ॥ ११ ॥

श्रुतार्थमनूद्याधुना प्रस्तुतपुराणार्थं पृच्छति— यावानित्यादिना । कल्पः ब्रह्मकल्पः[३] द्विपरार्धाख्यः । ब्रह्मणो दिनं वा । यावान् यावत्परिमितः । विकल्पः मन्वादिकालः । वाराहादिर्वा । भूतो भव्यो भवन्निति शब्दो यस्मिन् स तथोक्तः । अतीतानागतवर्तमानाख्य इत्यर्थः । यथा यथार्थतया अनुमीयते ज्ञायते । कथं[४] वा । आयुषो[५] मानं प्रमाणञ्च येन कालेन कृतं स कालः ॥ १२ ॥

अण्वी परमाणुलक्षणा महती परममहत्परिमिता कालस्य गतिः सापि कथं लक्ष्यते । कर्मगतयः कर्मफलानि । यावतीः कतिसङ्ख्याकानि यादृशीः कीदृशानि ॥ १३ ॥

---

१ प्रथमसंसृष्टाः - ग । २ ब्रह्माण्डावयवाः - ज । ३ ब्रह्मकालः - ख ठ ग छ झ ।
४ तत् कथयेति ठ । तं कथयेति - ट । कथं च ज । ५ आयुषां - ख ज ट ।

यस्मिन्कर्मसमावापो[1] यथा येनोपगृह्यते ।
गुणानां गुणिनां चैव परिमाणं सुविस्तरम् ॥ १४ ॥

भूपातालककुब्व्योम ग्रहनक्षत्रभूभृताम् ।
सरित्समुद्रद्वीपानां संभवश्चैतदोकसाम् ॥ १५ ॥

प्रमाणमण्डकोशस्य बाह्याभ्यन्तरवस्तुनः ।
महताश्चानुचरितं वर्णाश्रमविनिर्णयम् ॥ १६ ॥

अवतारानुचरितं यदाश्चर्यतमं हरेः ।
युगानि युगमानश्च धर्मो यश्च युगे युगे ॥ १७ ॥

नृणां साधारणो धर्मः सविशेषश्च यादृशः ।
श्रेणीनां राजर्षीणाञ्च धर्मः कृच्छ्रेषु जीवताम् ॥ १८ ॥

---

यस्मिन् कस्मिन् ? जीवे किंकर्मसमावापः ? यथा कथं ? येन केन, स कर्मसमावापः उपगृह्यते ? कर्मसमावापकर्ता कः ? सत्वादिगुणानां परिमाणं गुणिनां महदादिजीवानां सामर्थ्यपरिमाणम । 'गुणानां शब्दादीनां गुणिनां आकाशादीनां इति व्याख्यानमयुक्तम् । परिमाणानुक्तेः । 'देवासुरेभ्यो मघवानि'त्यादिनोक्तेश्चान्यत्र ॥ १४ ॥

भूपातालादीनां च परिमाणम्[2] । एतानि भून्यादीनि ओकांसि येषां ते तथा तेषां संभवं उत्पत्तिञ्च ॥ १५ ॥

बाह्याभ्यन्तरे च वर्तमानस्य वस्तुनः हरेः परमाण्वादिपरममहदन्तानां रूपाणाञ्च परिमाणम्[2] । सत[3] एवेत्यादिना वक्ष्यमाणत्वात् । महतां मरीचिकर्दमादीनां अनुचरितम् । वर्णानां आश्रमाणां विशेषतो निर्णयम् ॥ १६ ॥

यत् आश्चर्यतमम् । अन्येषामिति शेषः । हरेरवतारानुचरितं तच्च । कति युगानि । युगमानं वर्षैरियत्ताया परिच्छेदः । अनुयुगं यो यो धर्मः तं तञ्च ॥ १७ ॥

साधारणो धर्मः जातिमात्रप्रयुक्तः अहिंसादिलक्षणः यः धर्मः विशेषसहितः यादृशः कीदृशः । श्रेणीनां अङ्गरक्षकाणां धर्मो युद्धेषूच्यते । राजर्षीणां प्रियव्रतादीनां कृच्छ्रेषु आपत्सु जीवताम् ॥ १८ ॥

---

१ अत्र श्लोके टीकायां च 'समावाय इति ग ट पाठः समवाय इति ज छ ठ क पाठः ।

२ एतदनन्तरं 'सत एवेत्यादिना वक्ष्यमाणत्वात्' इत्यधिकः पाठः - ट । ३ स एवे - ट ज ।

तत्वानां परिसङ्ख्यानं लक्षणं हेतुलक्षणम् ।
पुरुषाराधनविधिं[1] योगस्याऽध्यात्मिकस्य च ॥ १९ ॥

योगेश्वरैश्वर्यगतिं लिङ्गभङ्गञ्च योगिनाम् ।
वेदोपवेदधर्माणामितिहासपुराणयोः ॥ २० ॥

सम्भवः सर्वभूतानां विक्रमः प्रतिसंक्रमः ।
इष्टापूर्तस्य काम्यानां त्रिवर्गस्य च यो विधिः ॥ २१ ॥

यो वानुशयिनां सर्गः पाखण्डस्य च सम्भवः ।
आत्मनो बन्धमोक्षौ च व्यवस्थानं स्वरूपतः ॥ २२ ॥

---

तत्वानां महदादीनां परिसङ्ख्यानं सामान्यविशेषसङ्ख्या तेषां लक्षणं व्यावर्तकधर्मम् । हेतोः कारणस्य ब्रह्मणः लक्षणं स्वरूपम् । पुरुषस्य विष्णोः आध्यात्मिकस्य परमात्मसंबन्धिनः यमादियोगस्य भक्तियोगस्य च विधिः तञ्च ॥ १९ ॥

योगेश्वरैश्वर्यगतिं योगेश्वराणामणिमाद्यष्टैश्वर्यप्राप्तिं तेषां स्वरूपञ्च । योगिनां यमादियोगाभ्याससिद्धानां वेदान्तादिशास्त्राभ्याससिद्धानाञ्च योगतो लिङ्गभङ्गं सूक्ष्मशरीरनाशप्रकारञ्च । 'स्थिरं सुखञ्चे'त्यादिनोक्तोऽयम् । 'पानेन ते देवकथासुधाया' इत्यादि पश्चाच्च । ऋगादिवेदानां आयुर्वेदाद्युपवेदानां वेदादिविहितवर्णाश्रमधर्माणाञ्च यः सम्भवः उद्धारादिस्तञ्च । इतिहासपुराणयोः सम्भवः उत्पत्तिः ॥२०॥

विक्रमः विविधचरित्रलक्षणः । प्रतिसंक्रमः संहारः । इष्टस्य यागादेः । पूर्तस्य वापीकूपादेः । काम्यानां कारीर्यादीनाम् । त्रिवर्गस्य च धर्मार्थकामलक्षणस्य ॥ २१ ॥

प्रकृतावनुशयनात् अनुशयिनः संसारिणः तेषाम् । स्वर्गादेः परिभ्रष्टानां संभवः[2] । आत्मनो जीवस्य । मोक्षं विशिनष्टि– व्यवस्थानमिति । यद्वा-तारतम्येनावस्थानम् ॥ २२ ॥

---

१ विधिः - क ट ग ङ छ ण । २ अयं ङ पाठः । अन्यत्र - तत्रभावत ।

यथात्मतन्त्रो भगवान्विक्रीडत्यात्ममायया ।
विसृज्य च[1] यथा मायामुदास्ते साक्षिवद्विभुः ॥ २३ ॥

सर्वमेतच्च भगवान् पृच्छतो मेऽनुपूर्वशः ।
तत्त्वतोऽर्हस्युदाहर्तुं प्रपन्नाय महामुने ॥ २४ ॥

अत्र प्रमाणं हि भवान्परमेष्ठी यथात्मभूः ।
अपरे ह्यनुतिष्ठन्ति पूर्वेषां पूर्वजैः कृतम् ॥ २५ ॥

---

आत्मतन्त्रो भगवान् आत्ममायया स्वेच्छया चित्प्रकृत्या च जगत्सृष्ट्यादिना यथा येन प्रकारेण विक्रीडति । द्विविधा आत्ममाया अस्ति स्वरूपभूता तद्वशा चेति । तत्र तद्वशया जीवं संसारयन् स्वरूपभूतया भक्त्यादिसाधनसम्पत्तिं साधयन् संसाराद्विमोचयन् मुक्तेन रमयन् पुनस्तद्वशां बन्धकशक्तिं विसृज्य साक्षिरूपपुरुषवन्निर्लेपो यथोदास्ते प्रवृत्तिं[2] मुक्त्वा तिष्ठति । 'द्वेधा वा वात्ममाया तद्रूपा तद्वशेति । तद्वशया संसारयति । स्वरूपया विमोचयत्युदास्ते' इत्यादिश्रुतेः नानिर्वाच्या मायात्रोच्यते ॥ २३ ॥

प्रश्नराशिमुपसंहरति– **सर्वमिति** । चशब्दादन्यदपृष्टञ्च । यदनुपूर्वशः पूर्वं वक्तव्यमिति प्रतीयते तत्क्रमेण उदाहर्तुमर्हसि । इतिहासं पुरस्कृत्य । प्रपन्नायेत्यनेन 'आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् । रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा । आत्मतर्पणकार्पण्ये षड्विधा शरणागतिः' रित्युक्तमर्थमात्मनः सूचयति । महामुने इत्यनेन शुकस्य स्वप्रश्नप्रतिवचनसामर्थ्यसद्भावं सूचयति ॥ २४ ॥

सर्वज्ञस्यापि केनचिन्निमित्तेनान्यथावचनं सम्भाव्यत इति मन्दमत्याशङ्कां परिहरति **अत्रेति** । यथा आत्मभूः परमात्मन उत्पन्नः परमेष्ठी सर्वजीवोत्तमो ब्रह्मा सर्वजनानां सर्वशास्त्रार्थेषु प्रमाणं सम्यग्वक्तृत्वेनाप्ततमः तथा व्यासपुत्रो भवानपि अत्र अस्मदर्थे प्रमाणं हि यस्मात्तस्मादुक्तं युक्तमिति । एतदेवोपपादयति– अपर इति । अपरे अन्ये पूर्वेषां मरीच्यादीनामपि पूर्वजैः ब्रह्मभवादिभिः कृतं शास्त्रं[3] अनुतिष्ठन्ति । हि प्रसिद्धम् । 'यद्यदाचरति श्रेष्ठ' इत्यादौ । अनेन अपरे अनुतिष्ठन्तीत्यादि यस्मात् तस्मात् परमेष्ठी प्रमाणम् । अतो भवानप्यत्र प्रमाणमिति वाक्यार्थ उक्तो भवतीति ॥ २५ ॥

---

१ वा - ज । २ प्रकृतिं मुक्त्वा - ज ग क ड ट छ । ख पाठेऽपि - प्रवृत्तिं ।

३ शास्त्रार्थं - ड ट ख ग ज छ ण ।

न मेऽसवः परायन्ति ब्रह्मन्ननशनादमी ।
पिबतोऽच्युतपीयूषं त्वद्वाक्याब्धि विनिःसृतम् ॥ २६ ॥

सूत उवाच—

स उपामन्त्रितो राज्ञा कथायामिति सत्पतेः ।
ब्रह्मरातो भृशं प्रीतो विष्णुरातेन संसदि ॥ २७ ॥

आह भागवतं नाम पुराणं ब्रह्मसम्मितम् ।
ब्रह्मणे भगवत्प्रोक्तं ब्रह्मकल्प उपागते ॥ २८ ॥

यद्यत्परीक्षिदृषभः पाण्डूनामनुपृच्छति ।
आनुपूर्व्येण तत्सर्वमाख्यातुमुपचक्रमे ॥ २९ ॥

॥ इति श्रीमद्भागवते द्वितीयस्कन्धे अष्टमोऽध्यायः ॥

---

अनशनतस्तव मनआदीन्द्रियदौर्बल्यादस्मदुक्तावधारणाऽशक्तेररण्यरोदनवद्व्यर्थमापद्यते इति तत्राह— न म इति । न परायन्ति मृतप्राया न भवन्ति । अशनादप्यतिबलहेतुरसायनपानादित्याह— पिबत इति । अच्युतकथापीयूषम् ॥ २६ ॥

सूतस्तावत् मुनिसंसदि राज्ञा पृष्टः शुकः किं प्रत्यवोचदिति शौनकादिमुनीनां मानसीं शङ्कां परिहरति— स इति । मुनिसंसदि विष्णुरातेन विष्णुदत्तेन परीक्षिता सतां ब्रह्मादीनां पत्युः हरेः कथायामित्युपामन्त्रितः सत्कृत्य व्याख्यातुं व्यापारितोऽत एव भृशं प्रीतः ब्रह्मरातः शुकः । 'बालोऽपि स गुरुत्वेन मुनिभ्यो ब्रह्मणा यतः । दत्तोऽतो ब्रह्मरातेति नाम वैयासकेरभूत्' इति वचनात् शुकस्य ब्रह्मरातत्वं नान्यस्येति ॥ २७ ॥ २८ ॥

भागवतं नाम पुराणं तत्प्रश्नोत्तरत्वेनाहेत्यन्वयः । आतिमूलत्वमाह— ब्रह्मण इति । अतीत-ब्रह्मप्रलयानन्तरं ब्रह्मकल्पे ब्रह्मान्तरोत्पत्तिनिमित्ते प्राप्ते सति स्वपुत्राय ब्रह्मणे भगवता नारायणेन प्रोक्तमाहेति शेषः । परीक्षित्प्रश्नप्रतिवचनतया शुकेनोक्तं उत अन्यत् यत्किञ्चिदिति शङ्कां परिहर्तुमाह— यद्यदिति ॥ २९ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
द्वितीयस्कन्धे अष्टमोध्यायः ॥

* * *

---

१ पानदार्ढ्यमित्याह - ज ।   २ भगवता प्रोक्तं - ज ग छ ठ ट झ ।

## ॥ अथ नवमोऽध्यायः ॥

श्रीशुक उवाच —

आत्ममायामृते राजन्परस्यानुभवात्मनः ।
न घटेतार्थसम्बन्धः स्वप्ने द्रष्टुरिवाञ्जसा ॥ १ ॥

बहुरूप इवाभाति मायया बहुरूपया ।
रममाणो गुणेष्वस्या ममाहमिति मन्यते ॥ २ ॥

---

## ॥ अथ नवमोऽध्यायः ॥

चतुर्मुखस्य भगवदनुग्रहेण तल्लोकदर्शनं तेन अविनाभूतं तत्स्वरूपदर्शनं प्रकृतिजीवयोस्तदधीनत्वनित्यादिमाहात्म्यवर्णनेन हरेर्हृदयद्रवीभावहेतुर्भक्तिरेवेत्यतः सा हरौ कर्तव्येत्यस्मिन्नध्याये प्रतिपाद्यते । तत्रादौ यदधातुमत इत्यस्योत्तरं वक्ति आत्ममायामिति । परस्य धातुशब्दवाच्यार्थेभ्यः प्रकृत्यादिभ्यो व्यतिरिक्तस्य अनुभवात्मनः ज्ञानात्मनः अत एव स्वतोऽशरीरस्य जीवस्य आत्ममायां हरेः इच्छां तथा तदधीनां सत्वादिगुणरूपां प्रकृतिं च ऋते विना अर्थसम्बन्धो देहातिसम्बन्धो न घटेत । यथा स्वप्ने करितुरगादिपदार्थानां द्रष्टुर्जीवस्य भगवदिच्छानियतैः वासनोद्बोधकैः रजस्तमोभावैः ऋते स्वात्मनःऽर्थसम्बन्धः करितुरगादिदर्शनं न युज्यते । तस्माददेहस्य जीवस्य देहसम्बन्धे भगवदिच्छा प्रथमा । द्वितीया स्वगुणैः सह प्रकृतिरित्युत्तरम् । अञ्जसेत्यनेन 'अशरीरस्य जीवस्य शरीरोत्पत्तिकारणम् । ईश्वरेच्छा प्राथमिकी तां विना न हि किञ्चने'त्यादिप्रमाणं सूचयति । यद्वाऽञ्जसेदमेव तत्वम् । स्वप्नस्यार्थक्रियाकारित्वेन सत्यत्वात् असत्यस्य तदयोगात् । नात्राघटितघटनपटीयसी अनिर्वाच्यलक्षणा मायोच्यते । किन्त्वीश्वरेच्छैव : 'सूचकश्च हि श्रुतेराचक्षते च तद्विद' इति सूत्राच्चेति । 'अञ्जसा त्वरिते तत्वे' इति यादवः ॥ १ ॥

नन्वशरीरस्य जीवस्य भगवदिच्छानियतैः प्रकृतेर्गुणैः देहारम्भः कथमत्राह— **बहुरूप इति ।** ईशेच्छयानादित एवास्याः प्रकृतेः गुणेषु मृद्घट इतिवत् गुणकार्येषु देहेन्द्रियेषु रममाणः सत्वादिगुणात्मकलिङ्गशरीरबद्धतया वर्तमानः सृष्टिकाले महदहङ्कारादिपञ्चभूतोपादानकत्वेन मानुषदेवासुर

---

१ अयं न पाठः । अन्यत्र - प्रथम हेतुः । २ प्राथमिका ख ।

यर्हि चायं महित्वे स्वे परस्मिन्कालमाययोः ।
रमते गतसंमोहस्त्यक्त्वोदास्ते तदोभयम् ॥ ३ ॥

आत्मतत्त्वविशुध्यर्थं यदाह भगवानृतम् ।
ब्रह्मणेऽदर्शयद्रूपमव्यलीकव्रतादृतः ॥ ४ ॥

---

शरीरादिबहुरूपत्वेन बहुरूपया विकृतया प्रकृत्या सह स्वयमविकृतोऽपि तदभिमानात् विकृतत्वेनात्मानञ्च मन्यमानो बहुरूप इव मानुषादिरूप इवाभाति । अहं मनुष्योऽहं देव इति आत्मानं मन्यते । देहदैहिकेषु त्रिगुणसम्पातजया अहंमत्या अहं ममेति च मन्यते चेत्यर्थः । तदुक्तं 'तेषां सम्पातजो भावो ममाहमिति या मतिरि'ति । 'तस्मात् प्रकृत्यैव पुमान् मानुषादिविकारया । मानुषादिरिवाभाति नित्यचैतन्यरूपवानि'ति च । तस्मादीशेच्छा नियतत्रिगुणात्मकलिङ्गशरीरे अहंमानात्तन्मूलतया धातुभिः देहारम्भो युक्त इति भावः ॥ २ ॥

एवं बन्धप्रकारमुक्त्वाऽधुना जीवस्य ततो मुक्तिप्रकारमाह– यर्हीति । चशब्द एवार्थे । यर्हि यदा अयं जीवः वैराग्यादिसाधनसामग्र्या समुत्पन्नभगवज्ज्ञानेन अपरोक्षीकृतस्वरूपः[1] कालमाययोः कालप्रकृत्योः परस्मिन् विलक्षणे तच्छक्तिसंसर्गरहिते स्वे महित्वे सच्चिदानन्दलक्षणस्वरूपे रमते च अव्यवधानेनानुभवत्येव स्वस्वरूपम् । तदा गतसम्मोहो निरस्ताविद्यातत्कार्यः उभयं बाधकत्वाद्यापादकं कालं मायां देहारम्भहेतुभूतां तन्मूलं संसारं त्यक्त्वेति यावत् । उदास्ते उत्कृष्टो वर्तते नीचत्वापादकात् संसारान्मुक्तो भवतीत्यर्थः । तदुक्तम्– 'यदा स्वरूपं जानाति कालप्रकृतिवर्जितम् । वासुदेवप्रसादेन तदा मुक्तो भवत्यलावि'ति । अनेन सागुण्यं त्यक्त्वा नैर्गुण्यमाप्नोतीति अपव्याख्यानमपास्तम् । तत्र प्रमाणाभावादिति ॥ ३ ॥

अत्रापि किं प्रमाणमित्याशङ्क्य भगवदुक्तं भागवतमेवैतादृशमोक्षे प्रमाणमित्याह– आत्मेति । आत्मनः परमात्मनः जीवस्य वा यत्तत्त्वं अनारोपितं सच्चिदानन्दलक्षणं रूपं तस्य विशुध्यर्थं निर्दोषत्वेन निश्चयार्थं अनुभवार्थं वा व्यासो भगवान् यद्भागवतपुराणमाह तत ऋतं यथोक्तमुक्तिसाधनज्ञानसाधनं शास्त्रम् । न व्यामोहकम् । अतो भगवदुक्तत्वेनोक्तमुक्तौ प्रमाणत्वात त्वत्प्रश्नानां उत्तरत्वेन वदिष्यामीति शेष इत्यर्थः । प्रथमं तावत्पाद्मकल्पं विवक्षुः 'ददृशे येन तद्रूपमि'ति प्रश्नं प्रतिवक्ति– ब्रह्मण इति । अव्यलीकेन प्रियत्वेन प्रसन्नताहेतुना व्रतेन भक्तिलक्षणेनादृतोऽर्चितः स हरिः स्वनाभिपद्मादुत्पन्नाय ब्रह्मणे चतुर्मुखाय रूपमदर्शयत् निजमिति शेष इत्यन्वयः ॥ ४ ॥

---

1 अपरोक्षितनिजस्वरूपः – ज ग ।

स आदिदेवो भजतां परो गुरुः स्वधिष्ण्यमास्थाय सिसृक्षयैक्षत ।
तान्नाध्यगच्छद्दृशमत्र सम्मतां प्रपञ्चनिर्माणविधिर्यया भवेत् ॥५॥

सञ्चिन्तयन्द्व्यक्षरमेकदाम्भस्युपाश‍ृणोद्द्विर्गदितं वचो विभुः ।
स्पर्शेषु यत्षोडशमेकविंशं निष्किञ्चनानां नृप यद्धनं विदुः ॥६॥

निशम्य तद्वक्तृदिदृक्षया दिशो विलोक्य तत्रान्यदपश्यमानः ।
स्वधिष्ण्यमास्थाय विमृश्य तद्धितं तपस्युपादिष्ट इवादधे मनः ॥७॥

दिव्यं सहस्राब्दममोघदर्शनो जितानिलात्मा विजितोभयेन्द्रियः ।
अतप्यत स्माखिललोकतापनं तपस्तपीयांस्तपतां समाहितः ॥ ८ ॥

---

एतदेव विवृणोति– स इति । भजतां सनकादीनाम् । स्वधिष्ण्यं नाभिपद्मकर्णिकास्थानम् । ऐक्षत अचिन्तयत् । यया दृशा । अत्र प्रपञ्चनिर्माणे ॥ ५ ॥

ततः किमत्राह– सञ्चिन्तयन्निति । कथं नु सृष्टिविषया दृष्टिस्स्यात् इति सञ्चिन्तयन् विभुः ब्रह्मा द्वे अक्षरे यस्मिन् तत् द्व्यक्षरं वचः । अक्षरयोः स्वरूपं लक्षयति– स्पर्शेष्विति । ककारादिमकारान्तेषु स्पर्शेषु यत् षोडशमक्षरं तकारः एकविंशं पकारः तद्रूपं वच इति यावत् । तद्वाच्यं स्पष्टं लक्षयति– निष्किञ्चनानामिति । निष्किञ्चनानां परमहंसानां यद्धनं विदुः तद्वाच्यं वचनं तपोलक्षणमित्यर्थः । कादयो मावसानाः स्पर्शाः ॥ ६ ॥

किमनेन निरणायीति तत्राह– निशम्येति । ब्रह्मा तद्वचो निशम्य श्रुत्वा येनैतद्वचनमुक्तं तद्वक्तृदिदृक्षया दशदिशः विलोक्य तत्र तासु दिक्षु अन्यदपश्यमानः पद्मनालनाडीभिराविश्य अन्विष्य अदृष्ट्वा स्वधिष्ण्यं पद्ममेवास्थाय अध्यास्य तद्वचः तच्छ्रुतं वचः आत्मनो हितं हितसाधनं विमृश्य अहं मज्जनकेन प्रपञ्चनिर्माणोपाये तव तपो न पूर्यते तस्मात्पुनस्त्वया तपः कर्तव्यम्, तपेति तपस्युपादिष्टः आज्ञप्तोऽस्मीति चालोच्य तपसीव तपस्येव मनः आदधे इत्यन्वयः ॥ ७ ॥

विमर्शफलमाह– दिव्यमिति । अखिललोकतापनं अखिललोकप्रकाशनं तपः ज्ञानरूपं ब्रह्मातप्यत आलोचयामास दध्याविति यावत् । 'तपो रूपं परं ब्रह्म ब्रह्माचिन्तयदञ्जसे'ति । जितमनस्कत्वादिसर्वसाधारणमित्यतो विशिनष्टि– तपीयानिति । तपतां तपीयान् अत्युत्तमोत्तमः । 'द्विवचन-

तस्मै स्वलोकं भगवान्सभाजितः सन्दर्शयामास परं न यत्पदम् ।
व्यपेत संक्लेशविमोहसाध्वसं सन्दृष्टवद्भिर्विबुधैरभिष्टुतम् ॥ ९ ॥
न वर्तते यत्र रजस्तमस्तयोः सत्वञ्च मिश्रं न च कालविक्रमः ।
न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ॥१०॥

---

विभज्योपपदे तरबीयसुनावि'त्युक्तार्थत्वे ईयसुन् । ननु ईयसुनोऽप्युक्तमार्थत्वे किम्प्रमाणमित्यत उक्तं-स्मेति । 'स्मृतौ वृत्तौ निषेधे स्मे'त्यभिधानात् । अनेन 'महान् महीयसा मादि ब्रूयादि'त्युत्तमोत्तममि'त्येतत्सूचयति । विजितोभयेन्द्रियत्वाद्यपि तपद्भ्यः इतरेभ्यः आधिक्यसूचनायोक्तमिति ज्ञातव्यम् । 'यत्राधिकं वदेत्किञ्चित् ज्ञेयोऽर्थस्तत्र चाधिक' इति वचनात् । अन्यथा तपोऽतप्यतेत्येतावदेवालम् । अत उभयेन्द्रियजयोऽपि ब्रह्मण औत्पत्तिको गुणः । 'पराञ्चि खानि व्यतृणात्स्वयम्भू'रिति श्रुतेः । हरिमन्तरेणानोपदर्शनत्वं चास्यैवाधिकम् । 'प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूवे'ति श्रुतेः ॥ ८ ॥

इदानीं स चापि यत्र पुरुष इति प्रश्नं परिहरति- तस्मा इति । प्रीतिजनकतपसा सभाजितः पूजितः । यस्तो लोकात् परमधिकं पदं स्थानं न । तस्मात् सन्दृष्टवद्भिः सम्यगपरोक्षज्ञानवद्भिः विबुधैः अभिष्टुतं अभितो मुख्यत्वेन स्तुतम् । अविद्याऽस्मितारागद्वेषादिनिवेशाः संक्लेशाः । मौढ्यं विमोहः । व्याकुलत्वं साध्वसम् । व्यपेताः संक्लेशादयो यस्मात्स तथा तम् ॥ ९ ॥

संक्लेशाद्यभावे कारणमाह- नेति । तयोः रजस्तमसोः विमिश्रं सत्वम् । सत्वरजसो विमिश्रं तमः । सत्वतमसोर्विमिश्रञ्च रजः । केवलं चित्प्रकृतिमय एव । कालविक्रमः कालकृतोत्पत्तिविनाशवृद्धिक्षयादिलक्षणः । सत्वाद्यभावे कारणमाह- नेति । माया त्रिगुणात्मिका जडप्रकृतिः । अपरे मायाविकाराः । तस्य लोकस्य मायातीतत्वात् । तर्ह्ययं शून्यागारतुल्य इति तत्राह हरेरिति । असनादसुर्हरिः । तस्मिन् रमन्त इति असुराः । असुरत्वगुणोपेतैः सुरैः अर्चिताः । 'महद्देवानामसुरत्वमेकमि'ति श्रुतेः तं लोकमित्यन्वयः ॥ १० ॥

---

१ तरबीयसुनोः - ख ।

श्यामावदाताः शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुपेशसः ।
सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेकनिष्काभरणाः सुवर्चसः ॥११॥

प्रवालवैदूर्यमृणालवर्चसां परिस्फुरत्कुण्डलमौलिमालिनाम् ।
भ्राजिष्णुभिर्यः परितो विराजते लसद्विमानावलिभिर्महात्मनाम् ।
विद्योतमानप्रमदोत्तमाभिः स विद्युदभ्रावलिभिर्यथा नभः ॥१२॥

श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः ।
प्रेङ्खं[2] श्रिताः याः कुसुमाकरानुगैर्विगीयमाना प्रियकर्म गायती ॥

---

श्यामवर्णाः अवदाताः निर्मलाश्च । 'अवदातः सिते गौरे शुद्धे' इति यादवः । अत्रन्तेन्द्र-नीलवन्निर्मलाः 'दशदोषविनिर्मुक्तः श्याम इन्द्रमणिः स्मृत' इति वा । शतपत्रं पद्मम् । सुष्ठु रुक् प्रभा येषां ते सुरुचः । सुष्ठु पेशः सौन्दर्यं येषां ते सुपेशसः । 'मृदुपिण्डश्च पेशस्स्यात्' इति वचनात् सुकुमारतरशरीरा इति वा । उन्मिषन्त चक्षुष्मन्तः मणिप्रवेकाः रत्नश्रेष्ठाः येषु ते तथा । ते च निष्काः हेमनिर्मितवक्षोलङ्काराः येषां ते तथा । 'निष्कोऽस्त्री हेम्नि कर्षशते पले । वक्षोविभूषणे कर्ष' इति । सुवर्चसः सुतेजसः । अनेन सारूप्यादिभाजो मुक्ताः अपि सन्तीत्युक्तं भवति ॥ ११ ॥

पुनरपि तं लोकं विशिनष्टि- प्रवालेति । यो लोको महात्मनां भ्राजिष्णुभिः लसद्विमानावलिभिः सर्वतो विराजत इत्यन्वयः । प्रवालवत् वैदूर्यवत् मृणालवत् वर्चः प्रभा येषां ते तथा तेषाम्[1] । परिस्फुरन्तः कुण्डलमौलयः कुण्डलानि मौलयश्च कुण्डलमौलयः तेषां मालाः पङ्क्तयः एषां सन्तीति परिस्फुरत्कुण्डलमौलिमालिनः तेषाम् । परिस्फुरन्ति कुण्डलानि मौलयः किरीटाः मालाः स्रजश्च एषां सन्तीति ते तथा तेषामिति वा । तत्र दृष्टान्तमाह- स विद्युदिति ॥ १२ ॥

प्रेङ्खं[2] श्रिताः याः रत्नदोलामाश्रिताः याः विभूतयः ताभिः विभूतिभिः स्वमूर्तिभिः सह । कुसुमाकरो वसन्तः तस्य अनुगाः भृङ्गकोकिलादयः तदाकार[3]मिताः ब्रह्मादयः तैः विगीयमाना प्रियस्य भर्तुः कर्माणि गायन्ती[4] ॥ १३ ॥

---

१ 'तेषां' इति छ ख ग पाठः । अन्यत्र नास्ति । २ श्रिता - ग क छ ट ड ।
३ तदाकारनिभा। - ज । ४ गायन्तीति - झ । गायतीति - क ।

ददर्श तत्राखिलसात्वतां पतिं श्रियःपतिं यज्ञपतिं जगत्पतिम् ।
सुनन्दनन्दप्रबलार्हणादिभिः स्वपार्षदमुख्यैः परिसेवितं विभुम् ॥
भृत्यप्रसादाभिमुखं दृगासवैः प्रसन्नहासारुणलोचनाननम् ।
किरीटिनं कुण्डलिनं चतुर्भुजं पीतांशुकं वक्षसि लक्षितं श्रिया ॥
अध्यर्हणीयासनमास्थितं विभुं वृतं चतुष्षोडशपञ्चशक्तिभिः ।
युक्तं भगैः स्वैरितरत्र चाध्रुवैः स एव धामन्नममाणमीश्वरम् ॥१६॥

प्रयोजकपुरुषदर्शनं विना लोकमात्रदर्शनेन किमस्य प्रयोजनमत्राह- ददर्शेति । तत्र एवंविधे श्वेतद्वीपाभिधे लोके मुक्तसभामध्ये मुक्तैः सेव्यमानं आत्मनो बन्धकशक्तिप्रवर्तनं विरमय्य मुक्तप्रवर्तकत्वेन शयानं लक्ष्मीकान्तं ददर्शेत्यन्वयः । अनेन 'मुक्तवात्मनाया नित्यस्य परिहारोप्युक्तो भवति । 'मुक्तैः पार्षदैः पूर्वैः ब्रह्माद्यैश्चैव संवृतम् । ब्रह्मा ददर्श तपसा भगवन्तं हरिं प्रभुमि'त्यनेन ब्रह्मा सगुणं ब्रह्म ददर्शेत्येतन्निरस्तम् । सतः शोभनस्य भावः सत्वं तेन युक्ताः सात्वन्तः तेषां सात्वतां सात्वतानां पतिम् । तदुक्तं- 'सत्वन्तु शोभनत्वं स्यात्तद्युक्ताः सात्वता मताः' इति । विभुं सर्वगतमित्यनेन परिच्छिन्नत्वमत्रोच्यत इति निरस्तम् । 'विभुः सर्वगते पत्यौ चन्द्रे रविकुबेरयोरि'ति ॥ १४ ॥

दृगासवैः नेत्राभ्यां यानि दर्शनानि तान्येवामृतानि तैः । 'दृक् स्त्री स्याद्दर्शने बुद्धौ नेत्रे द्रष्टरि च त्रिष्वि'ति । प्रसन्नेन हासेन अरुणाभ्यां लोचनाभ्यां सहितं आननं यस्य स तथा तम् । किरीटिनं कुण्डलिनमित्यत्र इन् प्रत्ययस्य मतुबादित्वादयमिन् नित्ययोगार्थः । 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः' इति वचनात् । वक्षसि स्थितया श्रिया लक्ष्म्या लक्षितमित्येतल्लक्षणं हरेरेवेत्यभिप्रायेणोक्तम् ॥ १५ ॥

नारायणत्वनिर्णयाय लक्षणान्तरञ्चाह- वृतमिति । चतुःषोडशपञ्चशक्तिभिर्वृतम् । इच्छाज्ञानक्रियाबलाख्याभिः, प्रह्वीसत्येशानानुग्रहाख्याभिः, आत्मान्तरात्मपरमात्मज्ञानात्माख्याभिः, इति चतुःशक्तिभिर्वृतम् । मोचिका सूक्ष्मा सूक्ष्मामृता ज्ञानामृताऽप्यायिनी व्यापिनी । व्योमरूपिण्यनन्तानिम-

१ अयं छ ग पाठः । अन्यत्र विरम्य ।
चकाररहित पाठे पारषदैरिति विशेषोऽस्ति ।

२ मुक्तैश्चेति चकारः ग ड ठ क ट कोशेष्वस्ति । नान्यत्र ।

३ इत्यय - ग ट ठ ड क ।

तद्दर्शनाह्लादपरिप्लुतान्तरो हृष्यत्तनुः प्रेमभराश्रुलोचनः ।
ननाम पादाम्बुजमस्य विश्वसृक् यत्पारमहंस्येन[5] पथाधिगम्यते ॥

तं प्रीयमाणं समुपस्थितं कविं प्रजाविसर्गे निजशासनार्हणम् ।
बभाष ईषत्स्मितशोचिषा गिरा प्रियः प्रियं प्रीतमनाः करे स्पृशन् ॥

---

महिमगरिमलघिम[1]प्राप्तिप्रा[2]काशेशित्वप्राकाम्याख्याभिः षोडशशक्तिभिश्च वृतम् । वासुदेवादिदामोदरा-न्ताभिः षोडशशक्तिभिश्च तथा पञ्चाङ्गामिताभिः विमलोत्कर्षिणी ज्ञानक्रियायोगाख्या[3]भिः पञ्चशक्तिभिश्च परिवृतं[4]मिति । 'मोचिका चैव सूक्ष्मा च तथा सूक्ष्मामृता परा । ज्ञानामृताप्यायिनी च व्यापिनी व्योमरूपिणी । अनन्ता चैव सम्प्रोक्ता मोचिकाद्याश्च शक्तयः' इति वायुप्रोक्ते । 'इच्छाद्या मोचिकाद्याश्च अणिमाद्याश्च शक्तय' इत्यादेः । युक्तमित्यनेन स्वरूपभूता न भवन्तीति नाशङ्कनीयम् । योगशब्दस्य सन्नहने वृत्तेः । 'तत्स्वरूपाश्च शक्तय' इति च । इतरत्र पुरुषान्तरेषु अध्रुवैरनित्यैः स्वैः स्वरूपैः भगैरैश्वर्यादिभिश्च युक्तम् । स्व एव धामन् स्वरूपानन्द एव रममाणं, नान्यत्रेत्येवशब्दार्थः । ब्रह्मा एवंविधं ईश्वरं ददर्शेति पूर्वत्रान्वयः ॥ १६ ॥

तस्य हरेः दर्शनादुद्भूतेन आह्लादेन परिप्लुतं आर्द्रीभूतं अन्तरं यस्य स तथा हृष्यन्ती रोमाञ्चं कुर्वन्ती तनुर्यस्य स तथा। प्रेमभरेण जातेन अश्रुणा पूर्णे लोचने यस्य सः तथा यत्पादाम्बुजं पारमहंस्येन परमहंससंबन्धिना पथा ज्ञानमार्गेण अहिंसादिधर्मजन्येन अधिगम्यते ज्ञायते ॥ १७ ॥

प्रीयमाणं हृष्यन्तं कविं ब्रह्माणम् । 'आदिकवय' इत्युक्तेः । 'कविर्यः पुत्रः स इमां चिकेते'ति श्रुतेश्च । ईषद्बभाष इत्यनेन शब्दतोऽल्पत्वं, अर्थतो गुरुत्वं द्योत्यते । 'प्रकृत्या मितभाषिण' इति वचनात् । करे स्पृशन्नित्यनेन प्रीतमनस्कत्वं प्रकाशयति । मनसि प्रसन्ने तदितरेन्द्रियाणां प्रसन्नत्वं किं वक्तव्यमित्यर्थः ॥ १८ ॥

---

१ अणिमादिशब्दानामाकारान्तपाठः - ग क ङ ट ठ छ । २ प्राकाद्येशित्व - ख छ । प्रकाम्यवशित्व - ङ । प्रकाद्येशित्व - ग । प्रकाशेशित्व - क । प्रकाशेशित्ववशित्व - ट ।

३ अयं छ ज पाठः । अन्यत्र योगवशित्वाख्याभिरिति पाठः । ४ इतीति ज पाठः । अन्यत्र नास्ति ।

५ यत्पारहंस्येन - ज ।

भगवानुवाच—

त्वयाहं तोषितः सम्यग्वेदगर्भसिसृक्षया
चिरं भृतेन तपसा दुस्तोषः कूटयोगिनाम् ॥ १९ ॥
वरं वरय भद्रन्ते वरेशं माभिवाञ्छितम् ।
सर्वश्रेयःपरिश्रामः पुंसां मद्दर्शनावधिः ॥ २० ॥
मनीषितानुभावोऽयं मम लोकावलोकनम् ।
यदुपश्रुत्य रहसि चकर्थ परमं तपः ॥ २१ ॥
प्रत्यादिष्टं मया तत्र त्वयि कर्मविमोहिते ।
तपो मे हृदयं साक्षादात्माहं तपसोऽनघ ॥ २२ ॥

---

आन्तरीं अन्तःकरणप्रीतिं वाचा उद्गलयति त्वयेति । किं धनादिनेत्यत उक्तं- तपसेति । किमर्थेनेत्यत उक्तं- सिसृक्षयेति । अनुपचिताङ्गोपाङ्गेनेत्यत उक्तं- चिरमिति । अहं न तपोमात्रेण तुष्यामि । किन्तु त्वादृशानामविकारिणामेवेति भावेनोक्तं- दुस्तोष इति ॥ १९ ॥

स्वतुष्टिफलमाह- वरमिति । पुंसां सर्वश्रेयःपरिश्रामः तपआदिसर्वकल्याणानां परिश्रामः परिपाकः मद्दर्शनावधिः मद्विषयावलोकनावधिः पर्यवसानं यस्य स तथा । मद्दर्शनमेव सर्वश्रेयसां फलमिति यतोऽतो मद्दर्शनात्त्वमसर्वश्रेयःफलवांस्त्वं[1], दृष्टं मा मां अपादानीकृत्य वाञ्छितं वरं वरयेत्यन्वयः । ते तुभ्यं भद्रमस्त्विति । वरेशमित्यनेन याचितं दातुं समर्थ इति द्योतयति ॥ २० ॥

तपसः कर्तव्यत्वं श्रद्धापयति- मनीषितेति । यद्द्व्यक्षरं तप इति वचः उपश्रुत्य रहसि मद्गुणालोचनरूपं परमं तपः त्वं चकर्थ कृतवान्, यन्मम लोकावलोकनं ममावलोकनञ्च, अयं मम मनीषितस्य अभिप्रेतस्य तपसोऽनुभावो महिमेत्यन्वयः ॥ २१ ॥

तपसः स्वमनीषितत्वं कथयति- प्रत्यादिष्टमिति । तत्र तदा त्वयि कर्मविमोहिते इदं कर्तव्यमित्यजानति सति मया तपः कुर्विति प्रत्यादिष्टं त्वां उद्दिश्योक्तम् । तस्मात् मनीषितं तप इत्यन्वयः । त्वत्प्रसादजनकं तप एवेति कुतः ? अन्येत्किञ्चन[2] स्यादिति तत्राह- तप इति । हृदयं प्रियम् । तदुक्तं-

---

१ फलवत्त्वं दृष्टं - ट । फलवांस्त्वं दृष्टं - क । फलवांस्त्वमिदानीं - ज । फलवान् त्वद्दृष्टं - ड । फलवांस्त्वं - ग ।
२ अन्यत्किञ्च - ज ट क ग ।

सृजामि तपसैवेदं ग्रसामि तपसा पुनः ।
बिभर्मि तपसा विश्वं वीर्यं मे दुस्तरं तपः ॥ २३ ॥

ब्रह्मोवाच–

भगवन्सर्वभूतानामध्यक्षोऽवस्थितो गुहाम् ।
वेद ह्यप्रतिरुद्धेन प्रज्ञानेन चिकीर्षितम् ॥ २४ ॥

अथापि नाथमानाय नाथनाथाय नाथितम् ।
परावरे यथा रूपे जानीयां ते त्वरूपिणः ॥ २५ ॥

---

हृदयं प्रियमुच्चिरकं कान्तमित्यभिधीयते[1] इति । तदुपपादयति– साक्षादिति । अहं साक्षात्तपसः आत्मा ज्ञानात्मेति यस्मात् ॥ २२ ॥

तस्मादिदं तपसैव सृजामि । पदार्थविषयाशेषविशेषज्ञानाभावे तदनुपपत्तेः । उपसंहरति– वीर्यमिति । वीर्यं माहात्म्यम् । जडोपचितज्ञानत्वात्सुतरमितरेषाम् । इदं तु न तादृशमतो दुस्तरमित्यर्थः । काय-क्लेशसाध्येन तपसा सृष्ट्यादिकञ्चेद्धरेरपि क्लेशात्वमापद्यत इत्याशङ्क्य 'तपः प्रियं सदा विष्णोः तपसैवाप्यते हरि'रित्यादिना परिहृतेति ज्ञातव्यम् । साक्षादात्मेति, वीर्यमिति[2] कथनाच्च । न हि पूर्णानन्दस्य हरेः क्लेशात्मकत्वं युज्यते । तस्मात् तपःशब्देन ज्ञानमेवोच्यत इत्यर्थः ॥ २३ ॥

वरमादास्यतो ब्रह्मणो हरिं प्रति विज्ञापनप्रकारमाह– भगवन्निति । भवता[3] वरं वरयेति मां प्रति यदादिष्टं तद्विडम्बनं मन्ये तथाहि– सर्वभूतानां हृदयगुहां अध्यक्षः सन्[4] अध्यवस्थितो भवान् अप्रतिरुद्धेन अप्रतिहतेन ज्ञानेन सर्वेषां चिकीर्षितं वेद[5] वेद । हि यस्मात्तस्मान्मचिकीर्षितमपि वेद ॥ २४ ॥

तथापि वरं वरयेति भवदाज्ञा[6]कर्तव्यतया वरं याचे इति विज्ञापयति– अथापीति । नाथमानाय याचमानाय नाथितं याचितं वरं नाथय समर्थय । 'नाथृनाधृयाच्ञोपतापैश्वर्याशीःष्वि'ति धातुः । कोऽसौ चिन्तीकृतो वर इति तत्राह– परावरे इति । अरूपिणः प्राकृतरूपरहितस्य तव चिदानन्दाद्या-

---

१ तदुक्तमिति - ट पाठः । अन्यत्र नास्ति । उच्चिरकं - ख ग पाठः । अन्यत्र उच्चिरन्ति । ज कोशे तु - प्रियं हृदयमित्युक्तत्वात् । २ इतिशब्दः जकोशस्थः । अन्यत्र नास्ति । ३ भगवता - क । ४ अध्यक्षः सन्नवस्थितः-ट । अध्यक्षोऽवस्थितः ख छ क । अध्यवस्थित इति मूलकोशपाठः । मध्येऽवस्थितः-ज । ५ वेत्त्येव - ख क । वेत्थैव - ग ट । ६ भगवन् त्वदाज्ञाया: - ज ।

यथात्ममायायोगेन नानाशक्त्युपबृंहितः ।
विलुम्पन् विसृजन् गृह्णन् बिभ्रदात्मानमात्मना ॥२६॥

क्रीडस्यमोघसङ्कल्प ऊर्णनाभिर्यथोर्णुते ।
तथा तद्विषयां धेहि मनीषां मयि माधव ॥ २७ ॥

भगवच्छिक्षितमहं करवाणि ह्यतन्द्रितः ।
नेहमानः प्रजासर्गं बध्येयं यदनुग्रहात् ॥ २८ ॥

यावत्सखा सख्युरिवेश ते कृतः प्रजाविसर्गे विभजामि भो जनम् ।
अविक्लवस्ते परिकर्मणि स्थितो मा मे समुन्नद्धमदोऽजमानिनः ॥

---

त्मकवैराजाख्यं परं रूपं सनवावरणाण्डाख्यं अवरं अपरं रूपमिति द्वे परावरे रूपे यथा येन प्रकारेण जानीयां तथा तद्विषयां मनीषां मयि धेहि आधेहि इत्यन्वयः । तुशब्देन ते च रूपे सत्ये इत्यवधारयति । 'द्वे वाव ब्रह्मणो रूपे' इत्यादिश्रुतिसिद्धत्वात्[1] । अनेन कार्यकारणरूपे व्यवार्तयति ।

किञ्च यथा ऊर्णनाभिः लूताकीटः ऊर्णां ऊर्णुते सृजते बिभर्ति च, ऊर्णामण्डलमध्ये क्रीडति । अथ च आत्मन्येव लुम्पति तथा आत्ममायायोगेन स्वरूपेच्छायोगेन अवियोगिन्या श्रिया च जगत् सृजन्, आत्मना स्वभावेन आत्मानं अवतारं गृह्णन्, बिभ्रत् पालयन्, विलुम्पन् क्रीडसि च यथा तथा तद्विषयां मनीषां धेहीति । 'नानाशक्त्युपबृंहितः' 'अमोघसङ्कल्प'इत्याभ्यां ऊर्णनाभेः हरेर्वैशिष्ट्यं दर्शयति ॥ २५ ॥ २६ ॥ २७ ॥

तादृशमनीषाप्रयोजनमाह– भगवच्छिक्षितमिति । यदनुग्रहात् यस्याः मनीषायाः आनुकूल्येन ग्रहणात् अतन्द्रितोऽहं भगवता शिक्षितं करवाणि, अथ यदनुग्रहाच्च प्रजासर्गमीहमानः कुर्वाणो न बध्येयम् तादृशीं मनीषाम् । यस्य भगवतो अनुग्रहाच्च न बध्येयं तेन भगवता शिक्षितमेव करवाणीति वरान्तरप्रार्थनं वा ॥ २८ ॥

इदानीं बन्धमूलाहङ्कारनाशं प्रार्थयत इत्याह– यावदिति । ईश, यथा सखा राजादिः स्वोक्तकारिणः सख्युः जनपदाद्यधिकारं ददाति, तथा ते त्वया प्रजाविसर्गे कृतः अधिकृतः अविक्लवः त्वत्प्रसादात् दैन्यहीनः ते तव परिकर्मणि जगत्सृष्ट्यादिशुश्रूषाकर्मणि स्थितः अहं यावत् रुद्रादिप्रजानां

---

१ इति श्रुति - कोशान्तरेषु सर्वत्र ।

भगवानुवाच—

ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् ।
सरहस्यं तदङ्गं च गृहाण गदितं मया ॥ ३० ॥

यावानहं यथा भावो यद्रूपगुणकर्मकः ।
तथैव तत्वविज्ञानमस्तु ते मदनुग्रहात् ॥ ३१ ॥

---

त्वदाज्ञया 'तवेदं पदं तवायं भोग' इत्यादिरूपं भोजनं विभजामि विभज्य विभज्य ददामि तावत् नच्छतायुःपर्यन्तं अजनानिनः आत् सर्वविलक्षणात् त्वज्जातोऽहमित्यमिभानिनो[1] मे समुन्नद्धमदः समुन्नतो[2]ऽहङ्कारः जगतः स्रष्टाऽहमित्यादिलक्षणः मा भूदित्यन्वयः । भोः स्वामिन्, यथा सख्युः व्यापारेऽधिकृतः सखा तात्पर्यात् तत्कार्यं करोति तथाऽहमपि त्वत्प्रजासर्गेऽधिकृतः यावत् जन्यते इति जनः जन्यपदार्थः तं विभजामि, सुरनरतिर्यगादिरूपेणोत्पादयामि तावत्समुन्नद्धमदो मा भूदिति वा ॥ २९ ॥

यत्किञ्चित् पृष्टं यः कश्चित् परिहारः इत्यतः परावरे इति प्रार्थितवरदानप्रकारं वक्ति— **ज्ञानमिति** । नियतमुक्तिप्रापकेण स्वबिम्बविषयेण विज्ञानेन समन्वितं मे स्वरूपविषयं सरहस्यं उपनिषत्संवादसहितं यज्ज्ञानं तस्य ज्ञानस्य यदङ्गञ्च तत् मया गदितं गृहाण इत्यन्वयः । उपनिषदो बाह्यार्थरूपत्वेदिदमनुपादेयं स्यादित्यत उक्तं— **परमेति** । ज्ञानं शास्त्रार्थविषयं विज्ञानं स्वानुभव इत्यपव्याख्यानं गदितमित्यनेन सूचितया 'येन येन यथा ज्ञात्वा नियतं मुक्तिराप्यते । तद्विज्ञानमिति प्रोक्तं ज्ञानं साधारणं स्मृत'मिति स्मृत्या निरस्तम् ॥ ३० ॥

'यथाऽहमनायायोगेने'ति याचितवरप्रदानप्रकारमाह— **यावानिति** । देशकालव्याप्त्या यावान् यावत्परिमाणो[3]ऽहं यथा भावः यादृशसत्तावान् निरुपाधिकसत्वोपेतः यद्रूपगुणकर्मकः यादृशावतारः यादृशगुणः यादृशकर्मा चाहं, मदनुग्रहात् ते तव तथैव तत्वविज्ञानमस्त्वित्यन्वयः । एवंशब्देन सोपाधिकरूपं व्यावर्तयति ॥ ३१ ॥

---

१ अभिमानवतो - कोशान्तरेषु सर्वत्र । २ समुत्पन्नो - क ग कोशयोः, मूलस्थेऽपि चायं पाठः ।
३ अनन्तपरिमाणोपेतोऽहं - क ट ग ।

अहमेवासमग्रे च नान्यद्यत्सदसत्परम् ।
पश्चादहं त्वमेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥ ३२ ॥

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ।
तद्विद्यादात्मनो मायां यथा भासो यथा तमः ॥ ३३ ॥

---

ज्ञानोपदेशप्रकारमाह– अहमिति । अग्रे सृष्टेः प्रागहमेवासम् । चशब्दात् सदसदासीत्[1] कालप्रकृत्यादिकमभूत् । तथा प्रलये यत् कालकर्मादिकं अन्यत् हरेः भिन्नमभूत्, तत्परं स्वतन्त्रं नास । किन्तु मयाऽऽवृतत्वेन[2] मदधीनमेवाभूत् । पश्चात् सृष्ट्यनन्तरं स्थितिकाले त्वं अहं एतज्जगच्च आसाः आसं आसीत् । फलितमाह–य इति । स्थितिकाले भोक्ताहं कर्ताहमिति स्वातन्त्र्यप्रतीतेः सृष्टेः प्राक् लयानन्तरं चास्य जगतः स्वातन्त्र्यं स्यादिति चेन्न तत्प्रतीतेः बुद्धिमोहमूलत्वात् । तदुक्तं 'विष्णोरधीनं प्राक्सृष्टेः तथैव च लयादनु । अस्य सत्त्वप्रवृत्यादिविशेषेणाधिगम्यते । स्वातन्त्र्यं स्थितिकाले तु कथञ्चिद्बुद्धिमोहतः। प्रतीयमानमपि तु तस्यात्रैवेति गम्यता'मित्यादि । अनेन कालत्रयेऽपि स्वतन्त्रोऽहं, त्वदादिकं सर्वं मदधीनमेवेत्युक्तं भवति ॥ ३२ ॥

अस्वतन्त्रस्य प्रकृत्यादेः स्वरूपमुपदिशतीत्याह– ऋतेऽर्थमिति । यद्वस्तु आसकामस्य ममार्थं प्रयोजनमृते सर्वत्र वेदादिषु प्रतीयेत, यच्चात्मनि मयि बाधकं न प्रतीयेत, न हीश्वरस्य जीवप्रकृतिभ्यां अर्थो बाधश्च स्तः, तद्वस्तु[3] आत्मनः परमात्मनः मायां विद्यादित्यन्वयः । मायेति नेन्द्रजालमुच्यते । किन्तु जीवप्रकृती एवेत्याह– यथेति । यथा यथार्थत्वेनैव सत्यत्वेनैव प्रतीयमानः आभासः मम प्रतिबिम्बभूतो जीवः यथा यथार्थत्वेनैव तमः अज्ञानहेतुः[4] मूलप्रकृतिश्च मायेत्युच्यते । 'मुख्यतो विष्णुशक्तिर्हि माया-शब्देन भण्यते । उपचारतस्तु प्रकृतिः जीवश्चैव हि भण्यते' इति वचनात् । एतदुक्तं भवति– यथा छत्रधराद्याः रथस्था अपि रथिनो नोच्यन्ते तथा जीवप्रकृतिकर्मकालाः सदा मयि वर्तमाना अपि जीवेन जीवनाभावात् प्रकृत्या बन्धाभावात् कर्मणा फलाभावात् कालतः परिणामाभावाच्च मयि स्थिता इति नोच्यन्ते । 'सर्वं परे स्थितमपि नैव तत्रेति भण्यत' इत्यादेरिति ॥ ३३ ॥

---

१ सदसच्चासीत् - ट ज ख । २ मायावृतत्वेन - क ट ज ख ङ
३ तत् प्रकृत्यादिवस्तु - क । ४ ग्लानिहेतुः - क ग ङ ज ट ।

यथा महान्ति भूतानि भूतेषूच्चावचेषु च ।
प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥ ३४ ॥

एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः ।
अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा ॥ ३५ ॥

एतन्मतं समातिष्ठ परमेण समाधिना ।
भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥ ३६ ॥

शुक उवाच

सम्प्रदर्श्यैवमजनो जनानां परमेष्ठिनः ।
पश्यतस्तस्य तद्रूपमात्मनो न्यरुणद्धरिः ॥ ३७ ॥

---

भगवान् स्वव्याप्तिं सोदाहरणमुपदिशतीत्याह– यथा महान्तीति । यथा महान्ति पञ्चभूतानि उच्चावचेषु भूतेषु स्वकार्यशरीरेषु प्रविष्टानि वर्तन्ते, ततोऽप्यधिकव्याप्तिसद्भावात् तेषु अप्रविष्टानि च, तथाहमपि अनन्तदेशकालव्यापी तेषु भूतेषु प्रविष्टः, तेभ्यो बहिरपि स्थितत्वात् तेषु न प्रविष्टश्च । 'यथा महान्ति भूतानि शरीरेषु बहिस्तथे'त्यादेः ॥ ३४ ॥

उक्तव्याप्तिस्फुटीकरणपूर्वकं उपदेशमुपसंहरति– एतावदिति । यद्वस्तु सर्वत्र सर्वदेशे सर्वदा सर्वस्मिन् काले च अन्वयव्यतिरेकाभ्यां अन्यवस्त्वन्वितानन्वितदेशकालस्वरूपाभ्यां व्याप्तं स्यात् एतावदेव मत्स्वरूपमात्मनः परमात्मनः तत्त्वजिज्ञासुना त्वया जिज्ञास्यं विचार्यं स्यादित्यन्वयः । अनेन वस्त्वन्तरसद्भावासद्भावरूपाभ्यामन्वयव्यतिरेकाभ्यां सर्वदेशकालयोरेकप्रकारेण गुणक्रियाभिर्व्याप्तमिति विचार्यमित्युक्तं भवति ॥ ३५ ॥

'नेहमान' इति प्रार्थितं वरं ददातीत्याह– एतन्मतमिति । तिरोधानातिरोधाने अपि स्वेच्छाधीने इति ज्ञापयन् हरिः स्वस्वरूपं तिरोधत्त इत्याशयेनाह– सम्प्रदर्श्येति । अजनः जननरहितः जनविरुद्धलक्षणो वा हरिः जनानां रुद्रादीनां सकाशात् परमेष्ठिनः उत्तमस्य हिरण्यगर्भस्य यद्रूपं प्रादर्शयत् आत्मनः तद्रूपं तस्य विरिञ्चस्य पश्यतः सतः न्यरुणदित्यन्वयः ॥ ३६ ॥ ३७ ॥

अन्तर्हितेन्द्रियार्थाय हरयेऽवहिताञ्जलिः ।
सर्वभूतमयो विश्वं ससर्जेदं स पूर्ववत् ॥ ३८ ॥

प्रजापतिर्धर्मपतिरेकदा नियमान्यमान् ।
भद्रं प्रजानामन्विच्छन्नातिष्ठत्स्वार्थकाम्यया ॥ ३९ ॥

तं नारदः प्रियतमो रिक्थादानामनुव्रतः ।
शुश्रूषमाणः शीलेन प्रश्रयेण दमेन च ॥ ४० ॥

मायां विविदिषुर्विष्णोः मायेशस्य महामुनिः ।
महाभागवतो राजन् पितरं पर्यतोषयत् ॥ ४१ ॥

---

भगवति इन्द्रियविषयान्तर्हिते सति विरिञ्चेन किं कृतमत्राह– अन्तर्हितेति[1] । इन्द्रियार्थः इन्द्रियविषयः तस्मात् अन्तर्हिताय बाह्येन्द्रियग्राह्यरूपरहितायेत्यर्थः । सर्वभूतमयः सर्वभूतप्रधानः । 'सर्वस्यापि प्रधानत्वात्स सर्वमय ईर्यते' इति ॥ ३८ ॥

सदा स्वेष्टदेवतां सेवमानोऽपि पुमान् विशेषप्रयोजनप्राप्तौ विशेषतस्तदुपास्तिं कुर्यादिति न्यायं दर्शयितुं विरिञ्चस्यापि विशेषोपायमाह– प्रजापतिरिति । धर्मपतिः सम्पदि विपदि वा तत्तद्विशेष-कार्यप्राप्तौ तत्तद्योग्यानुष्ठानं कर्तव्यमिति धर्मस्य पालकः । प्रजानां भद्रान्वेषणं न स्वार्थ इत्यत उक्तं-स्वार्थेति । तदपि स्वप्रयोजनमिति मनीषया. मुक्तौ सुखोद्रेकार्थत्वादित्यर्थः । 'अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् । क्षमा धृतिर्मिताहारः शौचञ्चेते यमा दश । तपः सन्तोष आस्तिक्यं दानमीश्वर-पूजनम् । सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च जपो व्रतम् । एते तु नियमाः प्रोक्ताः तांश्च सर्वान्पृथक् शृणु' इत्यादि योगशास्त्रे ॥ ३९ ॥

रिक्थं पित्र्यं धनं आददत इति रिक्थादाः पुत्राः तेषां मध्ये नारदोऽतिशयेन प्रियः । मायां जगत्सृष्ट्यादिमाहात्म्यं विविदिषुः ज्ञातुकामः । मायेशस्य अन्येषां माहात्म्यानां पतेः । 'मुख्यतो विष्णुमाहात्म्यं मायाशब्दोदितं भवेत् । प्रधानत्वाच्च मातृत्वान्मेयत्वं तस्य चैव हि' ॥ ४० ॥ ४१ ॥

---

१ अयं च पाठः । अन्यत्र - अन्तर्हित इति ।

तुष्टं निशाम्य पितरं लोकानां प्रपितामहम् ।
देवर्षिः परिपप्रच्छ भवान्यन्मानुपृच्छति ॥ ४२ ॥

तस्मा इदं भागवतं पुराणं दशलक्षणम् ।
प्रोक्तं भगवता प्राह प्रीतः पुत्राय भूतकृत् ॥ ४३ ॥

नारदः प्राह मुनये सरस्वत्यास्तटे नृप ।
ध्यायते ब्रह्म परमं व्यासायामिततेजसे ॥ ४४ ॥

यदुताहं त्वया पृष्टो वैराजात्पुरुषादिदम् ।
यथासीत्तदुपाख्यास्ये प्रश्नानन्यांश्च कृत्स्नशः ॥ ४६ ॥

॥ इति श्रीमद्भागवते द्वितीयस्कन्धे नवमोऽध्यायः ॥

---

पितृतोषणप्रयोजनमाह– तुष्टमिति । भगवता स्वस्य प्रोक्तम् । भूतं तत्त्वावत् सत्यं जगत्करोतीति भूतकृत् ॥ ४३ ॥ ४२ ॥

नारदस्य 'इति सङ्कल्प्य वर्णये'ति स्वपित्राज्ञापालनप्रकारमाह– नारद इति । मुनय इत्यादि विशेषणेभ्यो व्यासस्य सार्वज्ञ्यादिप्रतीतेः नारदादिभ्यः श्रवणं मोहनार्थमिति ज्ञातव्यम् । तदुक्तम्– 'हरिर्व्यासादिरूपेण सर्वज्ञोऽपि स्वयं प्रभुः । शृणोति नारदादिभ्यो मोहायैषां प्रसिद्धये' इत्यादि ॥ ४४ ॥

अधुना परीक्षित्प्रश्नपरिहाराय श्रीभागवतव्याख्यानं पृथक् पृथक् प्रश्नप्रतिवचनञ्च प्रतिजानीते– यदुतेति । यत्पुराणपरिज्ञानं प्रति अहं त्वया पृष्टः तद्व्यासकृतं भागवतपुराणं तवोपाख्यास्ये । तत्पुराणं व्याकुर्वन्प्रथमतः सर्वेशत्वात् विराडाख्यविरिञ्चस्थितत्वात् वैराजपुरुषाख्यहरेरिदं विश्वं यथासीत्तथोपाख्यास्ये । उत अथान्यान्प्रश्नांश्च कृत्स्नशो व्याख्यास्ये इत्यन्वयः । श्रीभागवतप्रथनकथा नारायणोद्भूतविराडभिधविरिञ्चस्थहरेरभिदैवादिसर्वजगत्सृष्टिः उत अपीति वा । 'उताप्यर्थविकल्पयोः' इत्यभिधानम् ॥ ४६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
द्वितीयस्कन्धे नवमोऽध्यायः ॥

## ॥ अथ दशमोऽध्यायः ॥

श्रीशुक उवाच—

अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ॥ १ ॥

दशमस्य विशुध्यर्थं नवानामिह लक्षणम् ।
वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसा ॥ २ ॥

भूतमात्रेन्द्रियधियां जन्मसर्ग उदाहृतः ।
ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषः स्मृतः ॥ ३ ॥

---

## ॥ अथ दशमोऽध्यायः ॥

अस्मिन्नध्याये वैराजस्य हरेः सकलजगत्सृष्टिः प्रपञ्च्यते । तत्रादौ भागवतपुराणं दशलक्षण-मित्युक्तम् । दशलक्षणानि कथयतीत्याह- अत्रेति । अत्र श्रीभागवते सर्गादिदशलक्षणानि प्रतिपाद्यन्त इति शेषः ॥ १ ॥

मुक्तामुक्तप्रपञ्चाधारस्य दशमस्य हरेः माहात्म्यवर्णनस्यावश्यापेक्षितत्वात्सर्गादिनवानां वर्णनं क्वोपयुज्यत इति तत्राह- दशमस्येति । महात्मानो ब्रह्मादयः इह पुराणे दशमस्य आश्रयस्य विशुध्यर्थं सर्गादिनवानां लक्षणं वर्णयन्तीत्यन्वयः । अनेनार्थात् ब्रह्मज्ञानलब्ध्यर्थत्वमुक्तं भवति । अत्र किं प्रमाण-मत्राह- श्रुतेनेति । अञ्जसा मुख्यया वृत्या । अनन्तवेदार्थसंवादेनेत्यर्थः । ब्रह्मणः सर्वगुणपूर्णत्व-सर्वोत्तमत्वादिज्ञानार्थत्वेन तदुपयोगात्तल्लक्षणकथनं युक्तमिति भावः ॥ २ ॥

तत्र प्रथमं सर्गं लक्षयति- भूतेति । सृष्टिकाले ब्रह्मणः परब्रह्मणः सकाशाज्जातात् गुणवैषम्यात् तन्नामकात् महत्तत्वात् अहङ्कारद्वारा भूतमात्रेन्द्रियधियां पञ्चमहाभूतानां शब्दादितन्मात्राणां श्रोत्रादिदशे-न्द्रियाणां धियो बुद्धेश्च अण्डपर्यन्तं यज्जन्म स सर्ग उदाहृत इत्यन्वयः । विसर्गं लक्षयति- विसर्ग इति । पौरुषो विसर्गः स्मृत इत्यन्वयः । अण्डान्तर्गतपुरुषनाम्नो हरेः भूतानां यद्विविधं जन्म स

स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः ।
मन्वन्तराणि सद्धर्मा ऊतयः कर्मवासनाः ॥ ४ ॥

अवतारानुचरितं हरेश्चास्यानुवर्तिनाम् ।
पुंसामीशकथा प्रोक्ता नानाख्यानोपबृंहिता ॥ ५ ॥

निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः ।
मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः ॥ ६ ॥

---

विसर्गः स्मृतः शास्त्रान्तरोक्त इति शेषः । तदुक्तम्— 'महदाद्यण्डपर्यन्तः सर्गोऽण्डे[1] ब्रह्मणस्तु यः । अनुसर्ग इति प्रोक्तः पौरुषश्चेति कथ्यते ।' किञ्च पञ्चभूतसमूहेन जातः पुरुषः जीवः तद्विषयः सर्गः पौरुषः विसर्ग[2] इत्युच्यते । अत्रापि उक्तैव स्मृतिः प्रमाणम् । पञ्चभूतसमूहेन जातः पुरुष उच्यते । अण्डान्तर्हितजातानां नानाजीवानां[3] सात्त्विकादिस्वभावानां व्यक्तिः तेषु जीवेषु तैजसाप्यादिकार्यापेक्षया भूतानां बहुत्वात् भूयस्त्वात् । तथाच भूतानां काठिन्यादिस्वभावव्यञ्जकत्वेन कृतार्थत्वात् जीवतत्त्वमेकस्माद्भूतसमूहाज्जातत्वात् एकजमित्युच्यते । 'पञ्चभूतसमूहेन जातः पुरुष उच्यते । बहुत्वाच्चत्र भूतानां तावत्त्वाच्चत्त्वमेकजमि'ति च ॥ ३ ॥

स्थानं लक्षयति— स्थितिरिति । वैकुण्ठस्य हरेः दुष्टशिष्टनिग्रहानुग्रहलक्षणो विजयः स्थितिरित्युच्यत इत्यन्वयः । तस्य वैकुण्ठस्यानुग्रहोऽनुकम्पिता प्रसादविशेषः पोषणमित्युच्यते । तद्भक्तैकविषयत्वात्पूर्वस्माद्विशेषः । मन्वन्तरं लक्षयति— मन्वन्तराणीति । सद्धर्माः मन्वन्तरेषु सतां धारकाः धर्माः मन्वन्तराणीत्युच्यन्ते । ऊतीराह— ऊतय इति । नानाजीवानामनादिकर्माणि तत्संस्काराश्च नानासृष्टिहेतुभूताः ऊतय इत्युच्यन्ते ॥ ४ ॥

ईशानुकथामाह— अवतारेति । हरेः मत्स्याद्यवताराणामनुचरितमस्य हरेः अनुवर्तिनां ब्रह्मादीनां पुंसामनुचरितञ्च नानाख्यानोपबृंहिता विविधेतिहासपूर्णा ईशकथेत्युच्यते ॥ ५ ॥

निरोधं लक्षयति— निरोध इति । आत्मन इति जातावेकवचनम् । अस्यात्मनः जीवसमुदायस्य अनभिव्यक्तस्वरूपेच्छादिशक्तिभिः सह श्रीविष्णुमनुप्रविश्यानुशयनं स्वापः निरोध इत्युच्यते । 'अनु-

---

१ सर्गोण्डात् - स । २ विसर्गः ।
३ अण्डान्तर्हितजीवानां - ज । अण्डान्तर्हितजातानां - क ट ङ ट ग छ ।

आभासश्च निरोधश्च यतस्तत्त्रयमीयते ।
स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते ॥ ७ ॥

आध्यात्मिको यः पुरुषः सोऽसावेवाधिदैविकः ।
यस्तत्रोभयविच्छेदः स स्मृतो ह्याधिभौतिकः ॥ ८ ॥

एतदेकतमाभावे यदा नोपलभामहे ।
त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः ॥ ९ ॥

---

प्रविश्य परमं जीवस्य शयनं तु यत् । सहैव शक्तिभिः स्वीयैरिच्छाद्यैरप्रकाशितै'रित्यादेः । मुक्तिं लक्षयति– मुक्तिरिति । अन्यथा रूपं प्राकृतसूक्ष्मस्थूलेन्द्रियादिकं हित्वा केवलचिदानन्दात्मकेन स्वरूपेण व्यवस्थितिः विशेषेणावस्थानं मुक्तिरित्युच्यते ॥ ६ ॥

आश्रयरूपं लक्षयति– आभास इति । यतो यस्मात् जगतः आभासो मुख्यगौणवृत्त्या सृष्टिः चशब्दात् स्थितिर्निरोधश्च भवति, तत् त्रयमपि यत्र यदाधारतया ईयते वेदादिषु ज्ञायते स आश्रय इत्युच्यते । किन्नामधेयोऽयमिति तत्राह– परं ब्रह्मेति । मुक्तव्यावृत्त्यर्थं परमात्मेति । 'सृष्टिस्थित्यप्यया-भासा यद्बलाद्यत्र च स्थिता' इत्यादिना लक्ष्यत इत्यर्थः ॥ ७ ॥

प्रकारान्तरेणाश्रयं लक्षयिष्यन्नाध्यात्मिकादिभगवद्रूपैक्यकथनपूर्वकं जीवानामीशतन्त्रतामाह– आध्यात्मिक इति । आध्यात्मिकः शरीरसम्बन्धिषु चक्षुरादिषु तत्प्रेरकत्वेन स्थितः पुरुषो विष्णुः सोऽसावेवाधिदैविकः अधिदैवेष्वादित्यादिषु स्थितः यः तत्र अधिभूतेषु घटादिपदार्थेषु स्थित्वा तयोः उभयोः आध्यात्मिकाधिदैविकयोः चक्षुःप्रकाशयोः विच्छेदः सम्यग्ज्ञनिश्चायकः विष्णुः आधिभौतिको हि स्मृतः इत्यन्वयः ॥ ८ ॥

हेत्वर्थवाचिना हिशब्देन सूचितहेतुं व्यनक्ति– एतदिति । एतेषां त्रयाणां मध्ये एकतमाभावे चक्षुराद्यभावे प्रकाशाभावे वा तद्विषयघटादिपदार्थाभावे वा नोपलभामहे घटादिविषयामुपलब्धिं ज्ञानं न प्राप्नुमः इति यदा यस्मात् तस्मात् ज्ञानस्वातन्त्र्याभावात् सर्वे वयमस्वतन्त्रा इत्यर्थः । ननु कोऽसौ ज्ञाने स्वतन्त्र इति तत्राह– त्रितयमिति । तत्र तेषां अस्वतन्त्राणां जीवानां मध्ये यो अध्यात्मादित्रितयं वेद स आत्मा विष्णुः आश्रय इत्यन्वयः । नन्वन्यदा एवंविधं ज्ञानमस्तु, न सुषुप्त्यादावित्यस्येदमे-

---

१ ज्ञानतः - ट ।

पुरुषोऽण्डं विनिर्भिद्य यदासौ स विनिर्गतः ।
आत्मनोऽयनमन्विच्छन्नपोऽस्राक्षीच्छुचिः शुचीः ॥१०॥

तास्ववात्सीत्स्वसृष्टासु सहस्रपरिवत्सरान् ।
तेन नारायणो नाम यदापः पुरुषोद्भवाः ॥ ११ ॥

द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥ १२ ॥

---

वोत्तरम् ! तत्र सुप्त्यादावपि इन्द्रियप्रकाशविषयाननपेक्ष्यैव यो जीवानां सर्वं स्वरूपज्ञानेनैव वेत्ति स आत्माश्रयः । ननु प्राणस्याप्येतत्त्रयापेक्षभावेन ज्ञानसम्भवात् 'प्राणा वा एवैतस्मिन् पुरे जाग्रती'ति श्रुतेः, श्रियोऽपि नित्यमुक्तत्वात्, मुक्तानां निर्देहत्वाच्च कथमेतल्लक्षणं लक्ष्यं व्यावर्तयतीति तत्राह– स्वाश्रयाश्रय इति । सुष्ठु आश्रयाणां रमामुक्तप्राणानां आश्रयः आधारः । अनेन स्वातन्त्र्येण प्रतीयमानं सर्वज्ञत्वं लक्षयन्[२] लक्ष्म्यादिभ्यो लक्ष्यं व्यावर्तयतीत्युक्तं भवति । सुप्त्यादावीश्वरस्य सर्ववेत्तृत्वञ्च 'स्वप्नेन शारीरमभिप्रहत्या सुप्तः सुप्तानभिचाकशीति' इति श्रुतिसिद्धम् ॥ ९ ॥

एवं पुराणलक्षणमभिधाय अधुना विराडाख्यविरिञ्चोत्पत्तिं वक्ष्यन् प्रथमतः तत्स्रष्टृपुरुषाख्यहरेरवतारकथनपूर्वकं अस्य अप्सृष्टिमाह– पुरुष इति । यदा स पुरुषः सृष्टैः तत्त्वैः सह अण्डं प्रविश्य विनिर्भिद्य विभज्य विनिर्गतः प्रकाशितः पुरुषाभिध एव प्रादुर्भूतः तदा आत्मनः स्वस्य दीपाद्दीपान्तरवत् रूपान्तरेण शेषपर्यङ्के शयनाय अयनमाश्रयं अन्विच्छन् नित्यशुचिः स भगवान् आत्मनोऽयनभूताः शुचीः स्वपूजासाधनयोग्याः आपः अस्राक्षीदित्यन्वयः । 'अण्डं प्रविष्टो यो विष्णुः सोऽण्डं भित्वा प्रकाशित' इत्यादेः ॥ १० ॥

ततः किं तत्राह– तास्विति । स्वसृष्टासु तासु अप्सु सहस्रपरिवत्सरान् अवात्सीदिति यत् तेन नारायणो नामाभूदित्यन्वयः । ननु अनेन अयनः अप्स्वास इति वा अन्तरेण नारायण इति नाम कथं अत्राह– यदिति । अनाशात्पुरुषो नरः तदुद्भवा आपो नाराः इति यत् तस्मात् ताः नाराः अयनं यस्य स नारायण इति । 'सोऽपोसृजत्ततो नाराः नरोऽनाशात्परो मतः' इति च ॥ ११ ॥

हरेरियं सृष्टिः स्वाधीनसाधनान्तरसहकृतेत्याशयेनाह– द्रव्यमिति । द्रव्यं पृथिव्यादि ॥१२॥

---

१ मुक्ताश्रयाणां रमादिप्राणादीनां स्वाश्रयाणामाश्रयः । २ लक्षणं - ट ।

एको नानात्वमन्विच्छन्योगतल्पात्समुत्थितः ।
वीर्यं हिरण्मयं देवो मायया व्यसृजत्त्रिधा ॥ १३ ॥
अधिदैवमथाध्यात्ममधिभूतमिति प्रभुः ।
पुनस्तत्पौरुषं वीर्यं त्रिधा भिद्यत तच्छृणु ॥ १४ ॥
अन्तः शरीर आकाशे पुरुषस्य विचेष्टतः ।
ओजः सहो बलं जज्ञे ततः प्राणो महानभूत् ॥ १५ ॥

---

ब्रह्माण्डस्यान्तर्त्रैविध्यमपि श्रीनारायणेनैव कृतमित्याह— एक इति । जले शेषपर्यङ्के शयानः एको नारायण एव स्वसृष्टतत्तद्वस्तुनियामकतया अन्तर्यामिरूपैः नानात्वं बहुत्वसङ्ख्यागोचरत्वमाप्तुमन्विच्छन् योगतल्पात्समुत्थितः देवः लीलालोलः हिरण्मयं स्ववीर्यं अण्डं मायया स्वेच्छया अन्तः त्रिधा व्यधात् । 'तत्तन्नियामकत्वेन बहुत्वं प्राप्तुमीश्वर' इत्यादेः । किञ्च हिरण्मयं पूर्णसुखं शतानन्दं वीर्यं स्वरेतोरूपं त्रिधा व्यसृजदित्यन्वयः । 'अन्तःस्थितहरेः कामादण्डे ब्रह्मतनोर्जनिरि'त्यादेः ॥ १३ ॥

अण्डान्तस्त्रैविध्यप्रकारं कथयति— अधिदैवमिति । प्रभुः इति, त्रिधा व्यभजदिति शेषः । हरिवीर्यरूपस्य विराजोऽपि त्रैविध्यमस्तीति कथयति— पुनरिति । पुनर्यथा तत्पौरुषं पुरुषाख्यस्य हरेः वीर्यं विराण्नाम ब्रह्मात्मकं जातं त्रिधा भिद्यत इति त्रिविधमभवत् तथा शृण्वित्यन्वयः ॥ १४ ॥

तत्त्रैविध्यं विवृणोति— अन्तरिति । विराडाख्यब्रह्मशरीरे अन्तराकाशे विचेष्टतः पुरुषस्य हरेः ओजः सहो बलं पराभिभवसहनस्वेच्छाकरणशक्तयः जज्ञिरे । ततः तेभ्यः ओजआदिभ्यो महान् प्राणो मुख्यप्राणः जज्ञ इत्यन्वयः । ब्रह्मान्तर्यामिहर्योजःसहोबलानुविद्धहिरण्यगर्भौजःसहोबलेभ्यः सर्वेन्द्रियनायकः[1] । ओजःसहोबलात्मको मुख्यप्राणो जात इत्युक्तं भवति । एतेन च पूर्वप्रकृताध्यात्माधिभूताधिदैवानां ब्रह्मान्तःस्थनारायणब्रह्मप्राणेभ्यः सृष्टिरिति ज्ञातव्यम् । 'प्राणेन क्षिपते'त्यादि वक्ष्यमाणत्वात् ॥ १५ ॥

---

१ सर्वेन्द्रियनियामकः - ज ।

अनुप्राणन्ति यं प्राणाः प्राणन्तं सर्वजन्तुषु ।
अपानन्तमपानन्ति नरदेवमिवानुगाः ॥ १६ ॥

प्राणेन क्षिपता क्षुत्तृडन्तरा जायते विभोः ।
पिपासतो जक्षतश्च प्राङ्मुखं निरभिद्यत ॥ १७ ॥

मुखतस्तालु निर्भिन्नं जिह्वा तत्रोपजायते ।
ततो नानारसो जज्ञे जिह्वया योऽधिगम्यते ॥ १८ ॥

विवक्षोर्मुखतो भूम्नो वह्निर्वाग्व्याहृतं तयोः ।
जले वै तस्य सुचिरं निरोधः समजायत ॥ १९ ॥

नासिके निरभिद्येतां दोधूयति नभस्वति ।
तत्र वायुर्गन्धवहो घ्राणो नसि जिघृक्षतः ॥ २० ॥

---

प्राणस्य सर्वेन्द्रियप्रभुत्वं स्पष्टयति– अनुप्राणन्तीति । पिङ्गलया नाड्या अपानं अपानन्तं अधश्चेष्टमानम् ॥ १६ ॥

इडापिङ्गलयोः प्राणापानचेष्टाफलमाह– प्राणेनेति । प्राणेनापानेन च । विभोः विरिञ्चस्य । चतुर्मुखावयवोत्पत्तिकथनपूर्वकं तेभ्योऽध्यात्मादीनामुत्पत्तिप्रकारं प्रपञ्चयति– पिपासत इति । प्राक् आदौ मुखं निरभिद्यत व्यक्तमभवत् ॥ १७ ॥

मुखतः मुखे । तालु निरभिनत् । तत्र तालुनि । जिह्वया जिह्वेन्द्रियेण ॥ १८ ॥

वाक् वागिन्द्रियम् । तयोः वह्निवाचोः । अनन्तरं व्याहृतं अभिवदनम् । शरीरान्तःस्थे नभस्वति वायौ दोधूयति पुनः पुनर्धुन्वति कम्पमाने सति जले अण्डोदके वर्तमानस्य विरिञ्चस्य वायुनिर्गमनद्वाराभावेन निरोधः क्लेशविशेषोऽभूत् ॥ १९ ॥

तदनन्तरं नासिके श्वासोच्छ्वासरूपवायुनिर्गमनागमनद्वारे व्यक्ते । वा इत्यनेनाद्यापि निरोधोऽनुभवसिद्ध इत्याह । जिघृक्षतः घ्रातुमिच्छतो धातुः तत्र नसि नासिकायां यः नासिक्यः प्राणः स गन्धग्राही वायुः घ्राणेन्द्रियं तद्विषयो गन्धश्च जात इति शेषः ॥ २० ॥

---

१ वायुरित्यनेन - क ।

यदात्मनि निरालोक आत्मानञ्च दिदृक्षतः ।
निर्भिन्ने अक्षिणी तस्य ज्योतिश्चक्षुर्गुणग्रहः ॥ २१ ॥

बोध्यमानस्य ऋषिभिरात्मनस्तज्जिघृक्षतः ।
कर्णौ च निरभिद्येतां दिशः श्रोत्रं गुणग्रहः ॥ २२ ॥

वस्तुनो मृदुकाठिन्यलघुगुर्वोष्णशीतताम् ।
जिघृक्षतस्त्वङ्निर्भिन्ना तस्यां रोममहीरुहाः
तत्र चान्तर्बहिर्वातस्त्वचा लब्धगुणावृतः ॥ २३ ॥

हस्तौ रुरुहतुस्तस्य नानाकर्मचिकीर्षया ।
तयोस्तु बलवानिन्द्र आदानमुभयाश्रयम्[1] ॥ २४ ॥

गतिं चिकीर्षतः पादौ रुरुहातेऽभिकामतः ।
पद्भ्यां हव्यं स्वयं यज्ञः कर्म यत्क्रियते नृभिः ॥ २५ ॥

---

यदा स विरिञ्चि आत्मनि निरालोकः निष्प्रकाशः तदात्मानं स्वशरीरं अन्यच्च दिदृक्षतः तस्य अक्षिणी गोळके व्यक्ते । ततः ज्योतिः सूर्यः रूपगुणग्रहः चक्षुरिन्द्रियं तद्ग्राह्यं रूपञ्च उत्पन्नमिति शेषः ॥ २१ ॥

ऋषिभिः ज्ञानसाधनैः वेदादिभिः अग्न्यादिभिर्वा बोध्यमानस्य वेदान्विद्धीति विज्ञाप्यमानस्य तस्य विरिञ्चस्य आत्मनः तद्विज्ञापनं जिघृक्षतः ग्रहीतुकामस्य कर्णौ जातौ । तयोः दिशः दिग्देवताः गुणग्रहः श्रोत्रेन्द्रियं तद्विषयः शब्दश्च ॥ २२ ॥

वस्तुनो घटादिपदार्थस्य मृदुत्वादिगुणान् जिघृक्षतः ज्ञातुमिच्छतः विधेः त्वक् इन्द्रियं तस्यां त्वचि रोममहीरुहाः तत्र त्वचि अन्तर्बहिर्वातोऽस्य त्वचा त्वगिन्द्रियेण स्पर्शलब्धेन ज्ञानेन स्पर्शगुणेनावृतः वातः स्पर्शवायुः स्पर्शश्चाभवदित्यन्वयः । गुर्वोष्णेति छान्दसः ॥ २३ ॥

उभौ इन्द्रियेन्द्रियाभिमानिनौ आश्रयौ यस्य तत्तथोक्तम् । आदानमुपादानहानादिकर्म च ॥ २४ ॥

गतिं गमनलक्षणं कर्म । यज्ञः इन्द्रपुत्रः । स्वयं तदभिमन्यमाना गतिश्च पद्भ्यां बभूताम् । तथा नृभिः यद्द्रव्यं हविःसम्बन्धि हवनादिकर्म क्रियते यमुद्दिश्य स उपेन्द्रो भगवान् यज्ञान्तर्यामितयाऽभिव्यक्त इति शेषः ॥ २५ ॥

---

[1] उभयौ - ख । उभये - ङ ण ।

निरभिद्यत शिश्नो वै प्रजानन्दामृतार्थिनः ।
उपस्थ आसीत्कामानां प्रियं तदुभयाश्रयम् ॥ २६ ॥
उत्सिसृक्षोर्धातुमलं निरभिद्यत वै गुदम् ।
ततः पायुस्ततो मित्र उत्सर्ग उभयाश्रयः ॥ २७ ॥
आसिसृक्षोः पुरः पुर्या नाभिद्वारमपावृतम् ।
ततोऽपानस्ततो मृत्युः पृथक्त्वमुभयाश्रयम् ॥ २८ ॥
आदित्सोरन्नपानानां असृक्कुक्ष्यन्त्रनाडिके ।
नद्यः समुद्राश्च तयोस्तुष्टिः पुष्टिस्तदाश्रये ॥ २९ ॥

---

प्रजासन्ततिः तन्निमित्ता या रतिः तस्याः जातः आनन्दः स एवामृतं तदर्थयितुं शीलमस्येति प्रजानन्दामृतार्थी । तस्य विधेः शिश्नः इन्द्रियस्थानं तस्मिन् शिश्ने कामानां प्रियं परतः प्राप्यसुखसाधनं तादृशमुपस्थेन्द्रियं तदुभयाश्रयं शिश्नोपस्थाश्रयं रतिसुखञ्चासीत् । कामानां भोगसाधनमिति वा ॥ २६ ॥

धातुमलं पुरीषसंज्ञं उत्सिसृक्षोः त्यक्तुकामस्य गुदमपानद्वारं ततस्तस्मिन् गुदे पायुनामेन्द्रियं तत इन्द्रियानन्तरं तत्रैव मित्रनामा देवः । उभयाश्रयः पायुमित्राश्रयः । वा इत्यनेन 'मलादिकं कदाचित्तु ब्रह्मा लोकाभिपत्तये । आत्मनो निर्ममे कामात्सर्वेषामभवच्चत'इत्यादिवाक्यं स्मारयति ॥ २७ ॥

परकायप्रवेशप्रकारमाह– आसिसृक्षोरिति । पुरः स्वाधिष्ठितदेहात् पुर्या अन्यस्मिन्देहे पुरीं पुरीतन्नामनाडीविशेषं आसिसृक्षोः प्रवेष्टुकामस्य । विरिञ्चस्येत्युपलक्षणम् । योगिनां नाभिद्वारमपावृतं विवृतम् । ततो नाभिद्वारात् अपानवायुः तस्मान्मृत्युः तदुभयाश्रयं पृथक्त्वं देहान्तरप्राप्तिलक्षणं चोत्पन्नम् । अत्र मृत्युर्मरणं तत्प्रापकश्चापानः । इदं ब्रह्मणो न । किन्तु देहिनामित्यनुसन्धेयम् ॥ २८ ॥

अन्नपानानां अन्नपानानि आदित्सोः आदातुकामस्य विरिञ्चस्य कुक्षिनाड्यावभूताम् । असृजः रुधिरस्य स्थानं कुक्षिः । अन्त्रस्थानं नाडी द्वासप्ततिसहस्रभेदभिन्ना । तयोः कुक्षिनाड्योः समुद्रा नद्यश्चासन् । तृप्तिः पुष्टिश्च तदाश्रये । तृप्तिः कुक्ष्याश्रया । पुष्टिः नाड्याश्रया ॥ २९ ॥

निदिध्यासोरात्ममायां हृदयं निरभिद्यत ।
ततो मनश्चन्द्र इति सङ्कल्पः काम एव च　　॥ ३० ॥

त्वक्चर्ममांसरुधिरमेदोमज्जास्थिधातवः ।
भूम्यप्तेजोमयाः सप्त प्राणो व्योमाम्बुवायुभिः　॥ ३१ ॥

गुणात्मकानीन्द्रियाणि भूतादिप्रभवा गुणाः ।
मनः सर्वविकारात्मा बुद्धिर्विज्ञानरूपिणी　　॥ ३२ ॥

एतद्भगवतो रूपं स्थूलं ते व्याहृतं मया ।
मह्यादिभिश्चावरणैरष्टभिर्बहिरावृतम्　　॥ ३३ ॥

अतःपरं सूक्ष्मतममव्यक्तं निर्विशेषणम् ।
अनादिमध्यनिधनं नित्यं वाङ्मनसोः परम्　　॥ ३४ ॥

---

आत्ममायां विष्णुसृष्ट्यादिमहिमानं निदिध्यासोः ध्यातुकामस्य हृदयं मनोनिवासस्थानमभूत् । ततो हृदयात् मनः मनसः चन्द्रोऽधिदेवता सङ्कल्पः कामश्च मनोवृत्तिविशेषौ अभूताम् । इति शब्दोऽनिरुद्धग्रहणार्थः ॥ ३० ॥

त्वगाद्याः सप्तधातवः शरीरस्थितिहेतुभूताः जाता इति शेषः । तेषां निदानमाह– भूमीति । मुख्यप्राणाभिमन्यमानजडरूपप्राणोपादानकारणमाह– प्राण इति । मुख्यप्राणेनाभिमन्यमानजडप्राणः व्योमाम्बुवायुभिः सृष्ट इति शेषः ॥ ३१ ॥

इन्द्रियोपादानकारणमाह– गुणेति । गुणाः सत्वादयः । गुणकारणमाह– भूतादीति । बुद्धिस्वरूपमाह– बुद्धिरिति । विज्ञानरूपिणी निश्चयज्ञानरूपिणी ॥ ३२ ॥

ब्रह्मशरीरस्य भगवत्प्रतिमात्वं स्पष्टयति– एतदिति । पञ्चभूताहङ्कारतत्वमहत्तत्वप्रकृत्याख्याऽष्टावरणावृतं एतत् स्थूलं विराडाख्यं ब्रह्मशरीरं भगवतो नारायणस्य प्रतिमारूपं ते तव मया व्याहृतमित्यन्वयः । तदुक्तम्– 'स्थूलं भगवतो रूपं ब्रह्मदेह उदाहृतः । तत्तन्त्रत्वा'चेति ॥ ३३ ॥

ननु तर्हि हरेः निजं रूपं कीदृशमत्राह– अत इति । अतो ब्रह्मणो देहाच्च परं विलक्षणमपि स्थूलं किमेत्याह– सूक्ष्मतममिति । सूक्ष्माणामप्यतिशयेन सूक्ष्मम् । 'अणोरणीया'निति श्रुतेः । महत्परिमाणाभावेनाचाक्षुषत्वेन भक्तानां दिदृक्षोपासा व्यर्थेत्यत उक्तं– अव्यक्तमिति । महत्परिमाणवत्वेऽपि स्वप्रसादनन्तरेण चाक्षुषं न स्यादित्यर्थः । 'महतो महीया'निति श्रुतेः, 'यमेवैष वृणुते तेन

अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते ।
उभे अपि न गृह्णन्ति मायासृष्टेऽविपश्चितः ॥ ३५ ॥

स वाच्यवाचकतया भगवान्ब्रह्मरूपधृक् ।
नामरूपक्रिया धत्ते सकर्माकर्मकः परः ॥ ३६ ॥

प्रजापतीन् मनून् देवानृषीन् पितृगणान् पृथक् ।
सिद्धचारणगन्धर्वान् विद्याध्रासुरगुह्यकान् ॥ ३७ ॥

---

लभ्य' इति श्रुतेः । तदुक्तं 'सूक्ष्मञ्च शङ्खचक्रगदाधरमि'ति च । अन्यस्य कैस्यचिदतिशयलक्षणविशेषण-सम्भवे कथमेतदित्यत उक्तं- निर्विशेषणमिति । निर्गतं विशेषणं अतिशयलक्षणं यस्मात्तत्तथोक्तम् । 'अस्य काव्यस्य कवयो न समर्था विशेषण' इति दर्शनात् एवंविधस्यापि वस्तुत्वेन घटवदाद्यन्तवत्त्वं किं न स्यादिति मन्दाशङ्कापरिहारायोक्तं- अनादीति । आदिमध्यान्तशून्यम् । नैतदौपचारिकमत उक्तं- नित्यमिति । नित्यमविनाशि । 'नित्यो नित्यानामि'ति श्रुतिः । चाक्षुषत्वभावाभावेऽपि वागादिविषयत्वं स्यादत उक्तं- वाङ्मनसोः परमिति । वाङ्मनसोरगोचरः सर्वत्रोत्कृष्टोत्तमं वा ॥ ३४ ॥

प्रेक्षावद्गृहीते[2] उभे अपि ग्राह्ये इत्याशयेन उपसंहरति - अमुनी इति । स्थूलसूक्ष्मे अमुनी भगवद्रूपे मया ते तव अनुवर्णिते । मायासृष्टे भगवदिच्छया प्रकृत्या च विरचिते । जगति ये अविपश्चितः अपण्डिताः ज्ञानदुर्बलाः ते जनाः उभे अपि रूपे न गृह्णन्ति न जानन्ति इत्यन्वयः॥३५॥

मायामये जगति विपश्चितः उभे कार्यकारणरूपे न गृह्णन्ति नाङ्गीकुर्वन्तीत्येतदपव्याख्यानं प्रत्याह- स वाच्येति । 'नामैव वाचकत्वेन नामरूपक्रिया अपि । वाच्यत्वेन हरिर्देवो नियामयति चैकराट् । कर्तृत्वात्तु स कर्मासौ निष्फलत्वादकर्मक' इत्यनेन व्याख्यातोऽयं श्लोकः । निष्फलत्वात् कर्मफलानपेक्षत्वात् । नन्वेकस्य नानानामरूपक्रियाधारकत्वं मायामन्तरेण कथं सङ्घटतीत्यत उक्तं- ब्रह्मेति । अन्तर्बहिर्व्याप्तं यत् ब्रह्मशब्दवाच्यं रूपं तस्य धारकत्वात् घटत इत्यर्थः । 'ब्रह्म वेदस्तपस्तत्त्वं' इत्यतो वेदादिशब्दराशिधृत्त्वाद्वा । अनेन प्रपञ्चस्य वेदादिप्रमाणसिद्धत्वेन सत्यत्वात् तस्य मायामयत्वे वेदादेरप्रमाणत्वेन तदुक्ततदैक्यस्यापि तथात्वेन विश्वस्यैव सत्यत्वं न्यायप्राप्तमित्युक्तं भवति ॥ ३६ ॥

उक्तमेव विशदयति- प्रजापतीनित्यादिना । सर्वनामरूपक्रियावतः प्रजापत्यादीन् नामरूपक्रियाश्च धत्त इति पूर्वेणान्वयः ॥ ३७ ॥

---

१ कदाचिन - ट । २ गृहीतत्वेन - ठ क ज ख छ ।

किन्नराप्सरसो नागान् सर्पान् किम्पुरुषानपि ।
मातृरक्षः पिशाचांश्च प्रेतभूतविनायकान् ॥ ३८ ॥

कूष्माण्डोन्मादवेतालान् यातुधानान् ग्रहानपि ।
खगान् मृगान् पशून् वृक्षान् गिरीन् नृप सरीसृपान् ॥

द्विविधाश्चतुर्विधाश्चान्ये जलस्थलनभौकसः ।
कुशलाकुशलमिश्राणां कर्मणां गतयस्त्विमाः ॥ ४० ॥

सत्वं रजस्तम इति तिस्रः सुरनृनारकाः ।
तत्राप्येकैकशो राजन् भिद्यन्ते गतयस्त्रिधा ॥ ४१ ॥

---

मातरः अदित्यादयः । ब्राह्म्याद्या वा । पिशाचाः घण्टाकर्णादयः । प्रेता महोदरादयः । भूता भृङ्गिरिट्यादयः । विनायका: विघ्नादयः ॥ ३८ ॥

कूष्माण्डाः पलण्डुवादयः[1] । उन्मादाः कालकर्णादयः । यातुधानाः रक्षोविशेषाः भृगुकुत्सादयः । ग्रहा अष्टादश । नवग्रहा वा । हे नृप । नृपाः प्रियव्रतादयो वा । सरीसृपाः सहस्रपादादयः ॥ ३९ ॥

सङ्ख्यातुमशक्यत्वात्सामान्यतो निर्दिशति– द्विविधेति । 'व्योमर्क्षपथ आकाशं नभः शब्दगुणोऽम्बरम् । पुष्करं गगनं विष्णोः पदं द्यौरभ्रमुच्यते' इत्यभिधानान्नभःशब्दः उभयलिङ्गः । तेषामुत्तमादित्वे कारणमाह– कुशलेति । उक्ताः इमाः जातयः कुशलादिकर्मणां गतयः फलानि ॥ ४० ॥

उक्तजातीः त्रेधा विभजति– सत्वमिति । सत्वं रजस्तम इति गुणत्रयहेतुकाः सुरनृनारकाः इति तिस्रो ज्ञेयाः इत्यन्वयः । सत्वहेतुकपुण्यफला सुरगतिः रजोहेतुकपुण्यपापफला मनुष्यगतिः । तमोहेतुकपापफला नारकी गतिः । अनेन नरकयोग्याः असुरा इत्युक्तं भवति । अवान्तरभेदोऽपि त्रिधेत्याह– तत्रापीति । गुणत्रयानुकूलकर्मभ्यः प्राप्तसुरनरासुरगतयः प्रत्येकं सात्विकराजसतामसतया त्रिधा भवन्ति । तथाहि– कल्यादिप्रधानाः असुराः तामसतामसाः । प्रधानासुरभृत्याः तामसराजसाः । अप्रसिद्धासुरास्तामससात्विकाः । केवलपापचारिणो मनुष्या राजसतामसाः । मिश्रकर्मकृतो मनुष्याः राजसराजसाः ।

---

1 पलाण्डुवादयः - ज ट । स्वकमाण्डूवादयः - क ।

यदैवैकतमोऽन्याभ्यां स्वभाव उपहन्यते ।
तदैवेदं जगद्धाता भगवान् धर्मरूपधृक्[1] ।
पुष्णाति स्थापयन् विश्वं तिर्यङ्नरसुरात्मभिः ॥ ४२ ॥

ततः कालाग्निरुद्रात्मा यत्सृष्टमिदमात्मनः ।
सन्नियच्छति तत्काले घनानीकमिवानिलः ॥ ४३ ॥

---

ननुष्येषु पुण्यैककर्मकृतः उत्तममनुष्याः राजससात्त्विकाः । पृथगप्रसिद्धाः देवाः सात्त्विकतामसाः । तत्त्वाभिमानिनो लोके ख्याताः सात्त्विकराजसाः । तत्त्वाभिमानिनो देवाः सात्त्विकसात्त्विकाः । सात्त्विकेभ्योऽपि सात्त्विकाः गरुडादित्रिकतद्भार्याः । तेभ्योऽपि सात्त्विकी ब्रह्मभार्या सरस्वती । ततोऽपि सात्त्विको ब्रह्मेति भेदः एकैकश इति शप्रत्ययेन ज्ञायते । तदुक्तं– 'तामसात्तामसा दैत्याः प्रधाना देवशत्रव' इत्यादिना ॥ ४१ ॥

एवं जगत्स्वरूपं निरूप्याधुना भगवदवतारावसरमाह– यदेति । यदा एकतमः स्वभावः सात्त्विकः अन्याभ्यां रजस्तमोभ्यां उपहन्यते तदैव तस्मिन्नवसर एव धाता पोषणादिकर्ता वर्णाश्रमादिधर्मप्रवर्तकरूपधरो भगवान् तिर्यङ्नरसुरात्मभिः मत्स्यकूर्मवराहरामकृष्णोपेन्द्रादिरूपैरवतीर्य इदं जगत् तत्त्वेन स्थापयन् पुष्णाति कृत्स्नं संवर्धयति । स्थितं रक्षतीत्यन्वयः । तेषु त्रिषु एकतमो भावः सात्त्विकतामसः सात्त्विकराजसः सात्त्विकसात्त्विको वा तामसराजसाभ्यामुपहन्यते तदेति वा । यदा तैः तामसादिभिः राजसतामसादिभिश्च दैत्यदानवराक्षसादिभिः ते त्रयः सात्त्विकभेदाः बाध्यन्ते तदा वराहादिरूपैरिति वा । तदुक्तम्– 'सात्त्विकेषु त्रिषु यदा त्वेकस्य प्रतिबाधन'मित्यादिना ॥ ४२ ॥

ननु संहारोऽन्यनियतश्चेत् तदुपद्रवेण जगद्रक्षणं दुःशकमित्याशङ्क्य स्वनियतरूपभेदेन संहारस्य क्रियमाणत्वात् न तदुपरोधो जगद्रक्षणस्येति ध्वनयति– तत इति । ततः स्थित्यनन्तरं प्रलयकाले प्राप्ते कालाग्निरुद्राणां आत्मा अन्तर्यामी स भगवान् आत्मनो ब्रह्मणः अन्तर्यामिणः स्वोदराद्यत्सृष्टं जगत् तदिदं सन्नियच्छति संहरति । कथमिव ? अनिलः घनानीकं मेघपटलमिवेत्यन्वयः । तदुक्तम्– मत्स्यादिरूपी पोषयति नृसिंहो रुद्रसंस्थित' इत्यादिना । कालो यमः ॥ ४३ ॥

---

१ अयं ख ज पाठः । अन्यत्र नास्ति ।

इत्थम्भावेन कथितो भगवान्भगवत्तमः ।
नेत्थंभावेन हि परं द्रष्टुमर्हन्ति सूरयः ॥ ४४ ॥

न चास्य जन्मकर्माणि परस्य न विधीयते ।
कर्तृत्वं प्रतिषेधार्थं माययारोपितं हि तत् ॥ ४५ ॥

अयं ते ब्रह्मणः कल्पः सविकल्प उदाहृतः ।
विधिः साधारणो यत्र सर्गाः प्राकृतवैकृताः ॥ ४६ ॥

---

उक्तमर्थं प्रमाणयति– इत्थं भावेनेति । भगवन्तः ब्रह्मादयः तेभ्यः अतिशयेन उत्तमः भगवत्तमः । भगवान् पूर्णैश्वर्यादिगुणः । ना सर्वजगत्कर्ता परमपुरुषः इत्थम्भावेन सृष्टिस्थितिसंहारादि-कर्तृत्वेन सर्वलोकोत्कृष्टत्वेन सर्वदोषविवर्जितत्वेन कथितः प्रतिपादितः । श्रुत्यादाविति शेषः । 'यतो वा इमानि भूतानि जायन्ते' इत्यादौ । तथा कथने कारणमाह– इत्थमिति । सूरयः परं परमात्मानं इत्थम्भावेन सर्ववैलक्षण्येन द्रष्टुमर्हन्ति हि । नाभेदज्ञानेन । अतः तथा कथनं युक्तमिति भावः । यद्वा भगवान् जगत्स्रष्टृत्वादिलक्षणविशिष्टत्वेन कथित इति यत्तस्मात्सूरयः परमार्थदर्शिनः इत्थम्भावे चेतसि परं द्रष्टुं नार्हन्तीति न हि । अर्हन्त्येवेति । अनेन ज्ञानिप्रत्यक्षमपि प्रोक्तार्थे प्रमाणमिति सूचितम् ॥ ४४ ॥

अत्रोच्यमानं जन्मादिकर्तृत्वं मायामयं किं न स्यादत्राह– न चेति । अस्य परस्य कर्तृत्वं जन्मकर्माणि यथा जीवानां बन्धस्य प्रतिषेधार्थं भवन्ति तथा न विधीयत इति । वेदादौ कर्तृत्वं जन्म-कर्म च विधीयत एव । अतः मायया स्वेच्छया आरोपितं नित्यारूढं स्वरूपाभिन्नत्वात् तत्कर्तृत्वं नानिर्वाच्यम् । 'प्रतिषेधाय बन्धस्य जीवानां परमेशितुः । स्वेच्छयैव तु कर्तृत्वं नित्यारूढं चिदात्मकमि'ति वचनात् । 'रूप उपरिभाव' इति धातोः 'सुभद्रां रथमारोप्ये'ति प्रयोगाच्च । 'स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुतेश्च । अनेन मायाशब्दस्य इच्छार्थत्वं, न मिथ्यार्थत्वमित्युक्तं भवति । हिशब्देन 'निरस्तकु-हक'मिति पूर्वोक्तिं सूचयति ॥ ४५ ॥

सम्प्रत्युक्तब्रह्मकल्पेनान्यब्रह्मकल्पानाञ्च साधारण्यमाह– अयमिति । अयं ब्रह्मणः प्रथमः कल्पः तवोदाहृतः । मयेति शेषः । इत्यन्वयः । कीदृशः ? सविकल्पः मन्वन्तरादिविविधकल्पेनसहितः । यत्र

परिमाणञ्च कालस्य कल्पलक्षणविग्रहम् ।
यथा परस्ताद्व्याख्यास्ये पाद्मं कल्पमिमं शृणु ॥ ४७ ॥

शौनक उवाच—

यदाह नो भवान् सूत क्षत्ता भागवतोत्तमः ।
चचार तीर्थानि भुवस्त्यक्त्वा बन्धून्सुदुस्त्यजान् ॥ ४८ ॥

कुत्र कौषारवेस्तस्य संवादोऽध्यात्मसंभवः ।
यद्वा स भगवांस्तस्मै पृष्टस्तत्वमुवाच ह ॥ ४९ ॥

ब्रूहि नस्तदिदं सौम्य विदुरस्य विचेष्टितम् ।
बंधुत्यागनिमित्तं च यथैवागतवान् पुनः ॥ ५० ॥

---

ब्रह्मकल्पे अन्यब्रह्मकल्पानां अन्यकल्पानाञ्च साधारणः समानः विधिः यत्र च प्राकृतवैकृताः सर्गाः सन्तीत्यर्थः । अनेन प्राकृतादिसर्गकथनं साधारण्ये कारणमित्युक्तं भवति ॥ ४६ ।

श्रोतृप्रवृत्त्यर्थं उत्तरस्कन्धार्थं प्रतिजानीते- परिमाणमिति । कल्पानां लक्षणानि विग्रहं इयत्ताञ्च कल्पलक्षणस्वरूपं वा परस्तात् पश्चात यथावत् व्याख्यास्ये । प्रथमतः इमं पाद्मं कल्पं शृणु । इत्यन्वयः ॥ ४७ ॥

अस्य ग्रन्थस्य शुकशिष्यसूतशौनकसंवादत्वं स्पष्टयन् शौनकप्रश्नप्रकारमाह- यदाहेति । 'विदुरस्तीर्थयात्रायां मैत्रेयादात्मनो गतिम्' इत्यादिना क्षत्ता बंधूंस्त्यक्त्वा भुवस्तीर्थानि चचार ॥ ४८ ॥

तत्र तीर्थसञ्चरणसमये मैत्रेयादात्मज्ञानं चापेति यद् भगवानाह ततः किं तत्राह- कुत्र इति । तस्य विदुरस्य अध्यात्मसंभवः आत्मनां पुरुषाणां अधिकस्य हरेः कथायाः संभवो यस्मात् स तथा । यद्वा आत्मानं शरीरमधिकृत्य वर्तमानं देहेन्द्रियादि तद्विषयो विदुरेण पृष्टः स भगवांस्तस्मै विदुराय । यद्वा तत्त्वमुवाच ह । हेत्यनेन ग्रन्थान्तरप्रसिद्धिमाह- 'प्रत्यारम्भे प्रसिद्धौ हे'ति यादवः ॥ ४९ ॥

तत्र सूतः शौनकप्रश्नपरिहारप्रकारं प्रतिजानीते- राज्ञेति ॥ ५० ॥

सूत उवाच—

राज्ञा परीक्षिता पृष्टो यदवादीन्महामुनिः ।
तद्वोऽभिधास्ये शृणुत राज्ञः प्रश्नानुसारतः ॥ ५१ ॥

---

यत् समाधानं राज्ञः प्रश्नानुसारत इति पुनरुक्त्या प्रश्नयोरेकविषयत्वेन परिहारोऽपि तदविनाभूत इति तत्प्रश्नप्रतिवचनमपि युष्मत्प्रश्नप्रतिवचनमेवेति दर्शयति ॥ ५१ ॥

द्वितीयस्कंधगा ह्येषा पदरत्नावली मया ।
स्वर्पिता चरणाम्भोजे पद्मनाभस्य भासताम् ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
द्वितीयस्कन्धे दशमोऽध्यायः ॥

॥ इति द्वितीयस्कन्धः ॥

* * *

